# PUBLISHER'S NOTE.

Astrology is a favourite subject liked and appreciated by all. But, it is a pity that such an important and very rare work as Prasna-marga— which is true to its name a foot path to the Prasna & Jataka parts of astrology, is not yet printed in Sanskrit. This is the best book of its kind that exists at present and contains 32 Adhyayas in all.

Now, we have great pleasure in publishing the first part of this excellent work containing–16 Adhyayas with the explanatory foot-notes by Maha Vidwan Punnasseri Nambi Neelakandha Sarma Avl. Principal, Central Sanskrit College, Pattambi, and one of the greatest living Astrologer of Kerala. His vast Capabilities and rare ablities in Astrology are so well known to the Sanskrit reading public that it would be presumptuous on our part to dilate upon them. His disinterested labours in the field of Sanskrit Literature and eagerness to bring to light such rare works have contributed not a little to the publication of this book. We are greatly indebted to this Mahasaya for his abiding interest in all that Concerns the welfare of our Book Depot and especially for the encouragement he has given in publishing this book.

The Second part of this book will be published shortly and we hope that the book will be well received by all those who are interested in the study of astrology.

*The Publisher.*

# अवतारिका ।

---

वेदाङ्गत्वेन प्रसिद्धं खल्विदं ज्योतिश्शास्त्रम् । तत्रास्य वेदाङ्गत्वं वेदविहितानां कर्मणां कालप्रतिपादकत्वात् । "वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः । तस्मादिदं कालविधानशास्त्रं यो ज्यौतिषं वेद स वेद यज्ञान्" । इत्याप्तवचनमेतत्साधनम् । तच्च शास्त्रं गणितं, संहिता, होरा इति स्कन्धत्रयात्मकम् । तत्र होरास्कन्धान्तर्भूतं प्रश्नभागरूपमङ्गं प्राधान्येन प्रतिपादयति प्रकृतग्रन्थः । तथाप्ययं जातकभागे निमित्तभागे चाङ्गयोः सविशेषमुपकरोत्येव । प्रश्नभागप्रतिपादकाश्च कण्ठाभरणानुष्ठानपद्धतिप्रभृतयः परे यद्यपि जाग्रति केचन ग्रन्थाः; तथापि प्रकृतप्रश्नमार्गाख्यग्रन्थवन्न ते फलादेशोन्मुखानां दैवज्ञानां स्वतन्त्रतयोपयुज्यन्ते । यतस्ते तदुपयोगिनो निखिलान् विषयान्न प्रतिपादयन्ति । प्रश्नमार्गस्तु विषयेऽत्र यावदावश्यकं सकलानपि विषयान् सरळया रीत्या प्रतिपादयति ॥

पृच्छकारूढेन राशिना भूतवर्तमानभविष्यत्कालेषु पृच्छकस्यानुभवविषयाणि शुभाशुभफलानि यत् प्रतिपाद्यन्ते तदेव प्रश्नक्रियेत्युच्यते । पृच्छकारूढदिग्विभागेन राशिनिर्णयः प्रायेण दुश्शक एव स्यात् । पृच्छकस्य राशिसन्धाववस्थानं, दैवज्ञस्य तत्स्थितिदिग्विभागनिर्णयैकतानताभावः, इत्यादिकानि तत्र निमित्तान्युपलभ्यन्ते । अतो राशिचक्रं विलिख्य विघ्नेश्वरं, दक्षिणामूर्तिं, मेषादीन् राशीन्, सूर्यादीन् ग्रहांश्च पूजयित्वा गुरुवन्दनपूर्वकं जिज्ञासितं मनसि यथाशास्त्रं सङ्कल्प्य स्वर्णविन्यासेनारूढविज्ञानं, तदात्व एव फलादेशप्रधानभूतस्याऽष्टलमङ्गस्यावेक्षणं, तात्कालिकनिमित्तविशेषाणां पृच्छकवितीर्णताम्बूलादि-

कानां स्वरूपपरिज्ञानमित्यादिकानि प्रश्नक्रियोपयुक्तानि बहूनि विषयजातान्यत्र यथाशास्त्रं प्रतिपाद्यन्ते ॥

ईदृशीं प्रश्नक्रियां, तया पृच्छकफलनिरूपणं च करतलामलकवदध्येतॄणां प्रदर्शयत्ययं प्रकृतः प्रश्नमार्गग्रन्थः। द्वात्रिंशदध्यायात्मकोऽयं प्रथमतः षोडशभिरध्यायैः 'पूर्वार्धं' इति पश्चात् षोडशभिरध्यायै'रुत्तरार्धं' इति च व्यवह्रियते । एवं भागद्वयात्मकोऽयं समग्रोऽस्माभि'रुपरत्नशिखा'ख्यया स्वप्रणीतया केरळीमय्या व्याख्यया सकूलव्य संस्कृतभाषायामनतिव्युत्पन्नानामभ्युपकाराय 'भारतविलासा'ख्यमुद्रायन्त्रद्वारा केरळाक्षरैः सम्मुद्र्य प्रागेव प्रचारित इति विशदं खलु प्रायेण केरळीयानाम् । अथाप्ययनर्घोऽयं ग्रन्थः केरळभाषानभिज्ञानां विदेशीयानां विदुषां दृष्टिपथमद्य यावदप्राप्त इति सम्प्रति कल्पात्तिदेशस्थ श्रीगीर्वाणवाणीपुस्तकशालाध्यक्षश्रीयुतसुब्रह्मणिसुब्रह्मण्योपाध्यायस्य केषाञ्चनान्तेवासिनामपि प्रमाणीकृत्याभ्यर्थनां संस्कृतभाषामय्या नातिसंक्षेपविस्तरया कयाचन टिप्पण्या परिष्कृत्य, संस्कृतभाषाया मूललिपित्वेनाधुनातनैः कैश्चन निश्चितैर्देवनागराक्षरैरिदंप्रथमतया सम्मुद्र्य जिज्ञासूनां पुरतः समुपह्रियते तस्यायं पूर्वार्धः ॥

कालक्रमेण प्रमाणफलभेदेन द्विविधे जोतिश्शास्त्रे फलभागं प्रति बहूनामविश्वासो जात इति नेदं शक्यते निह्नोतुम् । अत्र तु कारणं भागस्यास्य गहनतैव । यतोऽत्र भूयांस उपलभ्यन्ते उत्सर्गा अपवादाश्च । अत्रोत्सर्गोऽयमपवादोऽयमिति सुसूक्ष्मं पर्यालोच्य विविच्य फलनिर्देशो न तावत्सुसाधः । तावद्भिषण्णाशालिनो यथाकालं सम्पादितशास्त्रपरिचया गुरुमुखावगतवस्तुतत्त्वा देवब्राह्मणविश्वासशालिनः सिद्धमन्त्रा लक्षणसम्पन्नाः प्राश्निकाश्च विरळा एव । 'शते द्वि'न्यायेन यद्यपि तादृशाः केचनाधुनापि यत्रकुत्रचिद्दृश्येरंस्तथापि पृ-

च्छका एताश्च तावत् प्रोत्साहयन्ति, प्रत्युत प्राश्निकानां कदाचिदुत्सा-
हे स्वयं संभूतेऽपि पृच्छकाः स्वयमक्षमाशालिनस्तमुत्साहं न सहन्ते
यावत्फलसिद्धि संस्थापयितुम् । इदमत्र तत्त्वम्— फलभागे स्वयम-
विश्वासमभिनयन्तः समुद्घोपयन्तश्च प्राश्निकानधिक्षिपन्तः परिदृश्य-
न्ते ये तेऽपि स्वस्य स्वीयानां वा महत्यामापदि संभाव्यमानायां निर्ले-
ज्जमेव स्वयमपेक्षन्ते प्राश्निकानिति बहूनामनुभवविषयोऽयमंशः । ते
तु स्वीयां वाचं पूर्वभवां साम्प्रतिकं कर्म च मिथोविरुद्धे अजानन्त
इव व्यवहरन्तो दृश्यन्त इति हन्तासकृदस्माकमेव चित्रीयन्ते मनांसि ॥

अत्रादितः पञ्चदशभिरध्यायैः प्राधान्येन रोगप्रश्नो निरूप्यते ।
तथापि पृच्छाकालप्रभृतिभिः प्रश्नक्रियान्तैः सूत्रनिरूपणेनाष्टमङ्गलपर्या-
लोचनेन भावफलनिरूपणेन तादृशैरितरैश्च कैश्चन विषयैरुत्तरार्द्धे वक्ष्य-
माणानां विवाहप्रश्नसन्तानप्रश्नादीनामपि दुष्परिहार एवोपयोगः ।
अतोऽयं पूर्वार्द्ध उत्तरार्द्धेऽपि संयोजनीय इति सिध्यति । रोगप्रश्ने केवलं
परिश्राम्यतामयं पूर्वार्द्धः स्वयमनपेक्ष्यैवोत्तरार्द्धं प्राश्निकानां समुपकुर्या-
दिति पूर्वार्द्धोऽयं ज्योतिश्शास्त्रे फलभागे प्रविष्टानां प्रविविक्षूणामपि नि-
यतमावश्यकः । किं च स्वयं प्राश्निकत्वमनुररीकुर्वतामपि प्रतिदिवसं
श्वासपरीक्षणादिभिर्दैनंदिनं शुभाशुभं लक्षयितुं सरला सिद्धफला च
सरणिरत्र प्रतिपाद्यत इति विशेषो विदध्यादयमुपकारम् । अत्र षोड-
शेऽध्याये शत्रुजयसामाद्युपायप्रवर्त्तनगृहदाहगजलाभस्थानाधिपत्यलाभ-
नरकपतनादीनां बहूनां विज्ञेयांशानां लक्षणानि विशदं प्रत्यपाद्यन्तेति
परिशीलने स्वयमेव व्यक्तिर्भवतीति नात्र तदर्थं स्वीकुर्मो विस्तरम् ॥

एतद्ग्रन्थप्रणेता कश्चन नम्पूतिरिब्राह्मणः तलश्शेरीति प्रसिद्धा-
न्नगरात् केरळेषु क्रोशाष्टकविप्रकृष्टे "एटकाट"ख्ये विष्णुक्षेत्रेऽत्यन्त-
सन्निकृष्टे कस्मिंश्चन गृहे जात इति पञ्चविंशाधिकाष्टशतपरिमिते को-

तृतीयाध्याये ।



चतुर्थाध्याये ।

॥ श्रीरस्तु ॥

# प्रश्नमार्गः ।

## टिप्पणीसहितः ।

### प्रथमाध्यायः ।

**मध्याटव्यधिपं दुग्धसिन्धुकन्याधवं धिया ।**
**ध्यायामि साध्वहं बुद्धेः शुध्यै वृध्यै च सिद्धये ॥ १ ॥**

---

स्थितिभेदाज्जगत्सृष्टिस्थितिसंहारकारकाः ।
सूर्यादयः प्रसीदन्तो गृह्णन्त्वस्मन्नमस्क्रियाः ॥ १ ॥

वात्सल्यपूर्वनिजवाक्यसदर्थसारम्
लोकोपकारकृतये प्रकटीचिकीर्षौ ।
रागादिदोषरहिता मयि सत्कृपाढ्याः
श्रीकेळवर्मगुरवो दधतु प्रसादम् ॥ २ ॥

व्याख्यातस्यापि केरळ्या प्रश्नमार्गस्य सांस्कृती ।
लिख्यते टिप्पणी चार्ये सुब्रह्मण्यसुहृन्मणेः ॥ ३ ॥

**मध्येति** । मध्याटवीति ग्रन्थकर्तृगृहसन्निकृष्टविष्णुक्षेत्रस्य संज्ञा । शुध्यै रजोगुणकार्यस्य विक्षेपस्य तमोगुणकार्यस्य प्रळयस्य च निवृत्या शुद्धसत्वगुणकार्यभूतप्रकाशलाभाय । वृध्यै शुद्धाया अपि बुद्धेर्महत्वाभावे सिद्धिदौर्लभ्यात्तल्लाभार्थं । सिद्धये आध्यात्मिकाधिदैविकाधिभौतिकरूपाविभ्रान्तित्रयनिवृत्तिपूर्वकमाद्दिष्टफललाभाय । अत्र प्रश्नमार्गस्येत्यध्याहृत्य सिद्धये इत्यत्र संबन्धितयान्वयमुररीकृत्य निर्मितिसतग्रन्थप्रचुरप्रचारसिध्यर्थमित्यर्थोपि सुयोज एव । अध्याहाररूपक्लेशसत्वेपि 'सिद्धये क्रियमाणस्य प्रश्नमार्गस्येत्यर्थः' इति मूलकारेणैव विवृतत्वादयमर्थोपि ग्राह्य एव । शब्दार्थस्य प्रयोक्तृविवक्षापारतन्त्र्यस्य सर्वसम्मतत्वात् ॥ १ ॥

गुरुभ्यश्च ग्रहेभ्यश्च मया बद्धोयमञ्जलिः ।
प्रसन्नमनसस्ते मे सत्यां कुर्वन्तु भारतीम् ॥ २ ॥
नमः श्रीमङ्गलश्रेणीनिवासाय महात्मने ।
सर्वं जानन्ति दैवज्ञा यद्दत्तश्रुतिचक्षुषः ॥ ३ ॥
चेल्लूरीश्वरमानम्य शैलजावल्लभं मया ।
शिष्याय देशिकावाप्तं प्रश्नवर्त्मोपादिश्यते ॥ ४ ॥

तत्र प्रथमं ज्योतिःशास्त्रस्वरूपं किंचिदुच्यते ॥

स्कन्धत्रयात्मकं ज्योतिश्शास्त्रमेतत् षडङ्गवत् ।
गणितं संहिता होरा चेति स्कन्धत्रयं मतम् ॥ ५ ॥
जातकगोळनिमित्तप्रश्नमुहूर्ताख्यगणितनामानि ।
अभिदधतीह षडङ्गान्याचार्या ज्यौतिषे महाशास्त्रे ॥ ६ ॥

**गुरुभ्येति** ॥ गुरुभ्यः ग्रहेभ्यः गुरून् ग्रहांश्च प्रसादयितुम् । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति चतुर्थी । चशब्दद्वयोपादानमुभयेषां समप्राधान्यं प्रकटीकरोति । मे इत्यस्मच्छब्दः स्वशिष्याणामप्युपलक्षकः । सत्यां कुर्वन्त्विति न केवलं शास्त्रपाण्डित्यमात्रेण फलभूतादेशस्य सत्यत्वं सिध्यति । शास्त्रस्य बहुमुखत्वात् । तत्कालनिमित्तोपश्रुतिप्रभृतिपर्यालोचनपुरस्कारेण शास्त्रार्थमनुसृत्यावसरोचितफलप्रकटनायात्यावश्यकं यथाकालप्रतिभानं गुरुग्रहप्रसादायत्तमितिभावः ॥ २ ॥

**नमः इति** ॥ पूर्वश्लोकेन सामान्यतः कृतमपि गुरुवन्दनमनेन विशेषतः क्रियते । मङ्गलश्रेणीत्येतद्ग्रन्थकर्तृगुरुनाथनिवासगृहनाम । श्रियो, मंगलानां च श्रेण्याः समूहस्य निवासायेति तन्त्रादिना विशेषणत्वेनापि योज्यं। यद्दत्तश्रुतिचक्षुषः येन दत्तं श्रुतिचक्षुः वेदनयनं ज्योतिश्शास्त्रं येभ्य इति यस्मिन् दत्ते निहिते श्रुतिचक्षुषी कर्णनेत्रे यैरिति चार्थः । श्रद्धाभक्तिपुरस्सरं तमुपसेव्य तदुपादिष्टार्थान् गृहीत्वा ज्योतिश्शास्त्रे निष्णाता इति तात्पर्यम् । सर्वं श्रुतिचक्षुषोरविषयं कालत्रितयसंभवमपि ॥ ३ ॥

**चेल्लूरिति** ॥ चेल्लूरिति कविग्रामश्वेतसंज्ञा । उपदिश्यत इति वर्तमानसामीप्ये भविष्यति लट् ॥ ४ ॥

**तत्रेति** ॥ किंचिन्न तु विस्तरतः ॥

**स्कन्धेति** । षडङ्गवादिति मतुबन्तम् । स्कन्धत्रयात्मकमित्यस्य विवरणरूपमुत्तरार्द्धम् ॥

**जातकेति** ॥ पूर्वश्लोकोक्तस्य षडङ्गवदित्यस्य विवरणात्मकोयं श्लोकः । जननकालीनग्रहलग्नं प्रमाणीकृत्य फलादेशो जातकम् ॥१॥ भूगोळखगोळमहगोळादिस्वरूपनिरूपणं गो-

गोळो गणितं चेति द्वितयं खलु गणितसंज्ञिते स्कन्धे ।
होरासंहितयोरपि निमित्तमन्यत्त्रयं च होराख्ये ॥ ७ ॥

जनपुष्टिक्षयवृष्टि-
द्विरदतुरङ्गादिसकलवस्तूनाम् ।
केतूल्कादीनां वा
लक्षणमुदितं हि संहितास्कन्धे ॥ ८ ॥

प्रमाणफलभेदेन द्विविधं च भवेदिदम् ।
प्रमाणं गणितस्कन्धः स्कन्धावन्यौ फलात्मकौ ॥ ९ ॥ इति ॥

शास्त्रेस्मिन् ब्राह्मणस्यैवाधिकारः । वेदाङ्गत्वात् । तथा चोक्तम्—

ज्योतिः कल्पो निरुक्तं च शिक्षा व्याकरणं तथा ।
छन्दोविचितिरेतानि षडङ्गानि विदुः श्रुतेः ॥ १० ॥

---

ळम् ॥ २ ॥ तत्काललक्षणोपश्रुत्यादिभिः फलनिरूपणं ग्रहस्थित्यादिना त्रिभागशेषादिनिरूपणं च निमित्तम् ॥ ३ ॥ पृच्छकारूढराशिं प्रमाणीकृत्य फलकथनं प्रश्नः ॥ ४ ॥ विवाहादीनामाधानयागादीनां च शुभाशुभकालनिरूपणं मुहूर्तः ॥ ५ ॥ सूर्यादिग्रहाणामुपरागादीनां चावगमकं सङ्कलितव्यवकलितादीनां क्षेत्रवृत्तादीनां चावबोधकं गणितम् ॥ ६ ॥

**गोळ इति** ॥ इदमङ्गमस्मिन् स्कन्ध इत्यनेनोच्यते । अन्यज्जातकप्रश्नमुहूर्ताख्यम् ॥

**जनेति** ॥ निमित्तरूपस्याङ्गस्य प्रपञ्च एवायम् ॥ ८ ॥

**प्रमाणेति** प्रकारान्तरेण विभागोनेन प्रतिपाद्यते । इतिना उक्तश्लोकपञ्चकस्य ज्योतिश्शास्त्रस्वरूपकथनात्मकत्वं तत्परिसमाप्तिश्च द्योत्येते ॥ ९ ॥

**शास्त्रेति** ॥ उक्तं वक्ष्यमाणैः पञ्चभिः श्लोकैरित्यर्थः । वेदाङ्गत्वादिति हेतुकथनं अङ्गिपठने यस्याधिकारः तस्यैवाङ्गपठन इति न्यायसिद्धमिदमिति भावः । वेदाङ्गत्वं तूत्तरश्लोकेन प्रतिपाद्यते ॥

**ज्योतिरिति** ॥ एतानि षट् श्रुतेरङ्गानि विदुरित्यन्वयः ॥ १० ॥

छन्दः पादौ शब्दशास्त्रं च वक्त्रं
कल्पः पाणी ज्यौतिषं चक्षुषी च ।
शीक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं
वेदस्याङ्गान्येवमाहुर्मुनीन्द्राः ॥ ११ ॥

वेदस्य चक्षुः किल शास्त्रमेतत्
प्रधानताङ्गेषु ततोस्य युक्ता ।
अङ्गैर्यतोन्यैरपि पूर्णमूर्ति-
श्चक्षुर्विना कः पुरुषत्वमेति ॥ १२ ॥

अध्येतव्यं ब्राह्मणैरेव तस्मात्
ज्योतिश्शास्त्रं पुण्यमेतद्रहस्यम् ।
एतद्बुध्वा सम्यगाप्नोति यस्मा-
दर्थं धर्मं मोक्षमग्र्यं यशश्च ॥ १३ ॥

**छन्देति** वेदविहितानां यागादिकानां क्रमः ऋत्विगादीनां धर्माश्च कल्पेनावगम्यन्ते इति तस्य वेदाङ्गत्वम् । वेदविहितकर्मसु मन्त्रोपयोगे छन्दोवगन्तव्यमिति तस्य । मन्त्राणां लिङ्गविभक्तिवचनाद्यूहः सिध्यति व्याकरणेनेति तस्य । श्रौतकर्मानुष्ठानकालबोधकत्वाज्ज्योतिश्शास्त्रस्य । स्वरवर्णभ्रंशं विना मन्त्रोच्चारणस्य साधकत्वाच्छिक्षायाः । अर्थानुसारेणैव मन्त्राणामुच्चार्यत्वात्तद्बोधकस्य निरुक्तस्य ॥ ११ ॥

**वेदस्येति** अनेन ज्योतिश्शास्त्रस्य अङ्गान्तरापेक्षया प्राधान्यं प्रतिपाद्यते । "सर्वेन्द्रियाणां नयनं प्रधानं" इत्याद्याप्तवचनान्यत्रानुकूलानि ॥ १२ ॥

**अध्येतव्येति** ॥ एवकारो भिन्नक्रमः । ब्राह्मणैरध्येतव्यमेवेत्यर्थः । 'षडङ्गो वेदोध्येयः' इति वचनबलादवश्यं पठनीयमित्यर्थः । अन्यैस्तु पठ्यतां वा मा वा इति कामचारानुज्ञैव । अत एवोत्तरग्रन्थोपि सङ्गच्छतेतराम् । सम्यग्बुध्वेति अधिकारपूर्वकं गुरूपदेशानुरोधेनैव बोधः फलं साधयेदिति भावः । ब्राह्मणैरिति क्षत्रियवैश्ययोरप्युपलक्षणम् । त्रैवर्णिकानां वेदाध्ययनस्य विहितत्वात् । एतत् ज्योतिश्शास्त्रं सम्यग्बुध्वा यस्मादबुद्धाच्छास्त्रादेवार्थादिकं सम्यग्यथान्यायं कारणान्तरानिरपेक्षं च आप्नोति । पुण्यं रहस्यं एतत् ज्योतिश्शास्त्रं तस्माद्वेदाङ्गत्वाद्ब्राह्मणैरध्येतव्यमेवेति योजना । एवं च ब्राह्मणेतरेषामप्यर्थादिसिद्धिः स्यादेव किंतु ब्राह्मणानां यथा न तथा सम्यक्स्यादित्येव तात्पर्यम् । ब्राह्मणेतरेषामपि ज्योतिश्शास्त्राध्यय-

तथापि ज्योतिर्विदो जनाः सर्वेऽपि माननीयाः । तथा चोक्तम्—

म्लेच्छा हि यवनास्तेषु सम्यक्शास्त्रमिदं स्थितम् ।
ऋषिवत्तेऽपि पूज्यन्ते किं पुनर्दैवविद्द्विजः ॥ १४ ॥ इति ॥

अथ दैवज्ञलक्षणमुच्यते ॥

ज्योतिश्शास्त्रविदग्धो
गणितपटुर्वृत्तवांश्च सत्यवचाः ।
विनयी वेदाध्यायी
ग्रहयजनपटुश्च भवतु दैवज्ञः ॥ १५ ॥

दैवविदेवंभूतो
यद्वदति फलं शुभाशुभं प्रष्टुः ।
तत्सर्वं न च मिथ्या
भवति गार्ग्यस्तथा चोक्तम् ॥ १६ ॥

---

नेन धनादिसिद्धिः प्रत्यक्षैव । अत्र तु यस्मादाप्नोति तस्माद्ब्राह्मणैरेवाध्येतव्यमिति यथोच्चारणमेव पदान्वये पूर्वोत्तरवाक्यार्थयोर्हेतुहेतुमद्भावकल्पने चाचार्यस्य ब्राह्मणेतरेषामर्थादिसिध्यसहनत्वमापद्येत । असङ्गतिश्चोत्तरग्रन्थस्येत्यास्तां विस्तरः । एवं च "शास्त्रेऽस्मिन् ब्राह्मणस्यैवाधिकारः' इति पूर्वग्रन्थेऽपि "अस्तिर्भवतिपरोऽप्रयुज्यमानोऽप्यस्ती"ति न्यायात् अस्तेरध्याहारः अस्त्येवेति योजना चेति सर्वमनवद्यम् । इतिना प्रक्रान्तपरिसमाप्तिः प्रक्रान्तस्वरूपकथनं चेति पूर्ववदेव ॥ १३ ॥

**तथापि इति** ॥ तथापि ब्राह्मणेतरेषां ज्योतिश्शास्त्राध्ययनस्य सनिर्बन्धत्वाभावेऽपि ॥

**म्लेच्छा इति** ॥ ते म्लेच्छभूता यवना अपि ऋषिवत् न तु जातिनिकर्षालोचनया न्यूनमिति भावः । वचनमिदं वराहमिहिराचार्य—संहिताग्रन्थस्थम् । अनेन ज्योतिश्शास्त्राध्ययनाधिकारस्तु न जातिविशेषसापेक्षः । किं तु गुणान्तरसापेक्ष एवेति सिध्यति । अत एवाचार्योऽनुपदमेव दैवज्ञलक्षणं प्रदर्शयितुमुपक्रमते । न तत्र जातिविशेषमन्तर्भावयति च ॥

**ज्योतिश्शास्त्र इति** ॥ वेदाध्यायी त्रैवर्णिकेतरेषां वेदाध्ययनं निषिद्धमिति मते तु अध्ययनं तदर्थावबोधमात्रपरमिति समाधेयम् । स्मृत्यादयः प्रतिपादयन्ति हि वेदार्थम् । अध्ययननिषेधस्तु स्वरपूर्वकोच्चारणमेव निषेधतीत्यन्यदेतत् ॥ १५ ॥

**दैवविदिति** ॥ एवंभूतः पूर्वश्लोकोक्तलक्षणलक्षित एव । अर्थादुक्तलक्षणविरहितो ज्यौतिषिकंमन्यो यत् प्रलपति फलं तन्मिथ्यैव स्यादिति तात्पर्यम् ॥ १६ ॥

दशभेदं ग्रहगणितं
जातकमवलोक्य निरवशेषं यः ।
कथयति शुभमशुभं वा
तस्य न मिथ्या भवेद्वाणी ॥ १७ ॥

अनेकहोरातत्वज्ञः पञ्चसिद्धान्तकोविदः ।
ऊहापोहपटुः सिद्धमन्त्रो जानाति जातकम् ॥ १८ ॥ इति ॥

ग्रहगणितस्य दशभेदास्सन्ति, ते चोक्ताः ।

द्युगणानयनं खेटमध्यमस्फुटयोरपि ।
ग्रहणद्वितयं खेटकलहस्तत्समागमः ॥ १९ ॥
अस्तोदयौ च खेटानां नक्षत्राणां च सङ्गमः ।
इति भेदास्तु विज्ञेयाः ग्रहाणां गणिते दश ॥ २० ॥ इति ॥

**दशभेदं इति ॥** अवलोक्य जातकफलनिरूपकहोराशास्त्रग्रन्थान् सम्यक्पठित्वा समालोच्येत्यर्थः ॥ १७ ॥

**अनेकेति ॥** अनेकेषां वराहपराशरयवनादीनां या होराः तासां तत्त्वं निश्चितार्थं जानातीति तज्ज्ञः । इदमेवं भवेदित्यूहः । इदमित्थं न भवेदित्यपोहः । सिद्धमन्त्रः गुरूपदेशमुखात्तमन्त्रं यथाकल्पमुपास्य जनितासिद्धिः । जातकं उपलक्षणमेतत् । जातकप्रश्नोभयफलसमुदायमित्यर्थः ॥ १८ ॥

**द्युगणानयन इति ॥** द्युगण कलिदिवसगणः । खेटकलहः उल्लेखादिपञ्चप्रकारकयुद्धम् । तदुक्तं सूर्यसिद्धान्ते – "उल्लेखस्तारकस्पर्शे भेदे भेदः प्रकीर्तितः । आराद्ंशुविमर्दाख्यमंशुयोगे परस्परम् ॥ अंशादूनेपसव्याख्यं युद्धमेकत चेदणु । इति युद्धस्य नामानि पञ्च" इति । उभयोर्ग्रहयोरेकस्मिन् नक्षत्रेवस्थानमुल्लेखः । एकग्रहस्य बिंबेनेतरग्रहबिंबस्यैकदेशाच्छादनं भेदः । उभयोरेकभागसन्निकर्षोंशुविमर्दः । एकभागन्यूनातिसन्निकर्षोपसव्यम् । उभयोर्ग्रहयोरेककलासन्निकर्षे एकबिंबस्याल्पीभावो युद्धम् । एवमन्योन्यसंयोगजन्यं युद्धं ताराग्रहाणामेव । न तु प्रकाशकयोः । तदुक्तं संहितायाम्— "दिवसकरेणास्तमयः समागमः शीतरश्मिसहितानाम् । कुसुतादीनां युद्धं निगद्यतेन्योन्ययुक्तानाम् ॥" इति । सूर्यसन्निकर्षेणेतरेषां बिंबादर्शनमस्तं मौढ्यापरपर्यायम् । तन्निवृत्तौ पुनर्दर्शनमुदयः । ग्रहाणामाश्विन्यादिनक्षत्रावस्थानं नक्षत्रसङ्गमः ॥ २०

ब्राह्मः सौरश्च वासिष्ठो रौमशः पौलिशस्तथा ।
सिद्धान्ता इति पञ्च स्युः कथ्यन्ते खलु तद्विदा: ॥ २१ ॥
स्पष्टो ब्राह्मस्तु सिद्धान्तस्तस्यासन्नस्तु रोमशः ।
सौरः स्पष्टतरोऽस्पष्टौ वासिष्ठ पौलिशश्च तौ ॥ २२ ॥
कदाचिद्ब्रह्मसिद्धान्तः सावित्रस्तु कदाचन ।
कदाचिद्रोमशः स्पष्टो न कदाचित्तथेतरौ ॥ २३ ॥ इति ॥

मन्त्रं यथाविधि गुरोः सुदिने गृहीत्वा
तद्देवतां जपहुतिप्रमुखैः प्रतोष्य ।
ज्ञानाय जातकफलस्य तु सिद्धमन्त्रः
स्यादेव दैवविदिहास्त्रवत्तथा हि ॥ २४ ॥

इदं शास्त्रं सुमुहूर्त एवारभ्यम् । तथा चोक्तम्—

दातव्यमपापेभ्यो
निपुणमतिभ्यः प्रशान्तशीलेभ्यः ।

**ब्राह्म इति** ॥ ब्रह्मादयः स्वस्वमतानुरोधेन तत्तत्सिद्धान्तान् प्रावर्तयन् । ग्रहगणितोपयोगिपर्ययादिबोधकः ग्रन्थः सिद्धान्तः । तेषां भेदाः स्पष्टत्वास्पष्टत्वादिरूपाः कथ्यन्ते अनुपदमेव श्लोकद्वयेन ॥ २१ ॥

**स्पष्टो इति** ॥ न कदाचिदिति वसिष्ठपुलिशौ सर्वथा सर्वदाप्यस्पष्टौ सिद्धान्तौ प्रणीतवन्ताविस्यसमाध्यमेवैतत् । अतः सन्निहितकाले कदाचिदित्यर्थः । अनादावनन्ते च काले अनिर्धार्यस्वरूपाणामनिर्धार्यगतिवेगानां च गोळानां चलनभेदस्य एतावन्मात्रत्वं न शक्यते केनापि कल्पयितुम् । अतः सर्वप्रकारेणासत्यं गणितसिद्धान्तं भ्रमप्रमादादीनां तावदभाजनीभूतौ वासिष्ठपुलिशौ न प्रणेष्यत इति पूर्वोक्तार्थकल्पनमेवार्त्त्यकदाचिच्छब्दस्य न्याय्यमिति सुधीरं प्रतिजानीमः ॥ २३ ॥

**मन्त्रेति** सुदिने सुमुहूर्ते । प्रमुखशब्देन नमस्कारतर्पणपूजादानादिकं संगृह्यते । सिद्धमन्त्रः अष्टादशश्लोकोक्तसिद्धमन्त्रत्वस्यैवेयं विवृतिरिति भावः ॥ २४ ॥

**इदं शास्त्रेति** ॥ शास्त्रं मन्त्रवदेव शास्त्रमपि । उक्तं कृष्णीय इति शेषः ॥

**दातव्येति** ॥ गुरुलग्ने गुरौ लग्नस्थे । मृदुशीघ्रवर्गस्थे 'मृदवश्चित्रान्यमित्रेन्दवः' इति मृदुवर्गः । 'क्षिप्रास्तीक्ष्णकराश्विनेयगुरवः' इति शीघ्रवर्गः । अत्र मृदुशीघ्रवर्गस्थे बुधवर्गस्थे इति केचिद्व्याचक्षते । वर्गश्च क्षेत्रहोराद्रेक्काणादिः । चन्द्रे बुधक्षेत्रादिस्थे इत्यर्थः । बुधवर्गस्थे इति

शुभदिवसे गुरुलग्ने
चन्द्रे मृदुशीघ्रवर्गस्थे ॥ २५ ॥

बलिहोमगन्धपुष्पैरादित्यादीन् ग्रहान् समभ्यर्च्य ।
आरभ्यामदं शास्त्रं विधिवत्कृत्वा गुरोः पूजाम् ॥ २६ ॥

विधिवन्मन्त्राः पठिता भवन्ति सर्वार्थसाधका लोके ।
एवं सफलं शास्त्रं भवति हि विधिपूर्वकं पठितम् ॥ २७ इति ॥

स्वल्पा तथार्थबहुला च वराहहोरा
तस्याः पुनः पटुधियामपि दुर्गमोर्थः ।
भट्टोत्पलादिरचिता विवृतीर्विलोक्य
स्पष्टं करोतु हृदि दैवविदर्थमस्याः ॥ २८ ॥

---

कृष्णीयव्याख्यानं च ते प्रमाणयन्ति । वस्तुतस्तु नैतत् क्षोदक्षमम् । मृदुशीघ्रपदस्य बुधे रूढ्यभावात् । योगेनापि तदर्थस्य दुस्साधत्वात् । तथात्वे क्षिप्रमृदुवर्गस्थत्वार्थालाभात् । मुहूर्ते विशेषतो नक्षत्रविशेषस्य विधेयत्वाद्विद्योपक्रमे प्रस्तुतवर्गस्यौचित्यात् क्षमया—लोचनशक्तेः शीघ्रग्रहणस्य चावश्यकत्वात् । उक्तवर्गयोश्च तदाधायित्व प्रसिद्धेः । अपि च यद्येवं दुर्बोधोर्थोत्र प्रश्नमार्गप्रणेतुरभिमतस्तर्हि तेनैव तथा व्याख्यायेतैव । तर्हि चतुरसुन्दरीनामककृष्णीयव्याख्याने तथा दर्शनस्य का गतिरिति चेल्लेखकप्रमाद इत्येवावधत्त । बहुग्रन्थपरिशोधनेप्यैकरूप्येणैवावलोकनात्स्खलनप्रमादापतितत्वं न कथमपि वयं सम्मन्यामह इति मर्कटमुष्टिरेव यदि बध्यते तर्हि आस्तां नाम । अगातरेव गतिरिति वयमपि तावदिह मुष्टिं बध्नीमः । यावन्न तत्राभ्युपेयमवलोक्यते प्रमाणान्तरमित्यलम् ॥ २५ ॥

**बलिहोमेति** ॥ बलिर्गन्धादिभिः पूजा । होमः तत्तद्ग्रहानुद्दिश्य तत्तन्मन्त्रैरग्नौ तत्तद्धविःप्रक्षेपः गन्धपुष्पाणि हिमोदकचन्दनादिसंपृक्तपुष्पैरभ्यर्चनम् । विधिवत् गुरुदीक्षायुक्तविध्यनुसारेण ॥ २६ ॥

**विधिवन्मन्त्रेति** । अचिन्त्यप्रभावा मन्त्रा इव वेदाङ्गभूतं ज्योतिश्शास्त्रमपि यथाविधिविहितदीक्षेण शिष्येण गुरूपदेशपूर्वकमधीत्य प्रयुक्तमेव दृष्टादृष्टोभयात्मकाय महते फलाय कल्पते । नान्यथा । इत्येतच्छास्त्राप्तवचनादिप्रसिद्धमिति द्योतयति हिशब्दः ॥ २७ ॥

इतिना श्लोकत्रयोक्तस्य कृष्णीयग्रन्थस्य द्योत्यते परिसमाप्तिः ॥

**स्वल्पेति** ॥ स्वल्पा शब्दतः । आदिशब्देन पारमेश्वरविवरणचन्द्रिकाप्रकाशिकादयो विवक्षिताः ॥ २८ ॥

होरां वराहमिहिरास्यविनिर्गतां ये
मालामिवादधति दैवविदः स्वकण्ठे ।
कृष्णीयशास्त्रमपि भर्तृमतीव सूत्रं
तेषां सभासु महती भवतीह शोभा ॥ २९ ॥

होरायास्तु दशाध्याय्यां व्याख्यायां क्रियतां श्रमः ।
दैवज्ञेन विशेषेण फलमादेष्टुमिच्छता ॥ ३० ॥

दशाध्याय्यां विशेषेण श्रमो नैव कृतो यदि ।
दुष्करः फलनिर्देशस्तद्विदां च तथा वचः ॥ ३१ ॥

अदृष्ट्वा यो दशाध्यायीं फलमादेष्टुमिच्छति ।
इच्छत्येव समुद्रस्य तरणं स प्लवं विना ॥ ३२ ॥ इति ॥

अथ जातकप्रश्नयोर्विषयविभाग उच्यते —

**होरामिति ।** वराहमिहिरास्यविनिर्गतां वराहमिहिराचार्यस्य श्रीसूर्यांशसंभवस्य मुखादनायासेन निरसृतामित्यर्थः । आचार्यस्य सूर्यांशसंभवत्वमुक्तं गोविन्दभट्टाचार्येण "ज्योतिश्शास्त्रमिदं विधाय विपुलं त्रिस्कन्धभिन्नं पुरा लोकानां मतिमान्द्यतः कलियुगे तत्पातभीत्या पुनः । स्वल्पं तत्सकलं ततो रचितवानादित्यदासात्मजो भूत्वा यो मिहिरो वराहमिहिरं नाम्ना नमस्कुर्महे" इति । भर्तृमतीव सूत्रमिति सर्वदा कण्ठस्थत्वमावश्यकमित्यर्थः ॥ २९ ॥

**होराया इति ।** एतदादि पद्यत्रयं दशाध्यायीस्तुतिपरम् । फलमादेष्टुमिच्छतेति ज्यौतिषफलभूतादेशस्य दशाध्यायीपरिश्रममन्तरेणाशक्यत्वं प्रतिपाद्यते । एतदेवानुपदं विव्रियते च ॥ ३० ॥

**दशाध्याय्यामिति ।** दुष्करः इतरबहुग्रन्थपर्यालोचनेन कृच्छ्रसाध्यः । वचः उत्तरश्लोकात्मकम् ॥ ३१ ॥

**अदृष्ट्वेति ।** निदर्शनालङ्कारेण फलादेशस्यातिकृच्छ्रसाध्यत्वं प्रकाश्यते । प्लवेनापि दुस्तरतरः खलु समुद्रः । तस्य प्लवमन्तरैव तितीर्षा परिहासायेति यावत् । प्लवसद्भावेपि दुस्तरतरः समुद्र इति कृच्छ्रसाध्यत्वप्रकाशनम् ॥ ३२ ॥

**अथेति ।** एतानि फलानि जातकेन वाच्यानि । एतानि पुनः प्रश्नेनेति विभजनं विभागः ॥

स्वर्गाद्यनुभवक्षीणाशिष्टप्राचीनकर्मणाम् ।
भोगाय जननं नृणां मोहभाजां मुहुर्मुहुः ॥ ३३ ॥
अत्र तु द्विविधं कर्म प्राक्कर्म निजयत्नतः ।
अन्त्यस्यानुभवोऽमुत्र भुक्त्वेहाद्यस्य संक्षयः ॥ ३४ ॥

अत्र शास्त्रान्तरम् ॥

स्वकर्म भोक्तुं जायन्ते प्रायेणैव हि जन्तवः ।
क्षीणे कर्माणि चान्यत्र पुनर्गच्छन्ति देहिनः ॥ ३५ ॥

---

**स्वर्गाद्येति** ॥ आदिशब्दो नरकं संगृह्णाति । प्राचीनं पूर्वजन्मार्जितम् । मोहोऽज्ञानम् । ज्ञानिनां तु ज्ञानेन सञ्चितैहिकोभयकर्मनाशात् प्रारब्धावसाने मोक्षलाभ इति न पुनर्जन्मावकाश इति भावः । मुहुर्मुहुः ज्ञानोत्पत्तिपर्यन्तमित्यर्थः । तदुत्पत्तेरतिसुकृतिमात्रलभ्यत्वं व्यज्यते च । द्विविधं प्राधान्येनेत्यर्थः । वस्तुतस्तु त्रिविधम् । प्राक्तनमेव द्विविधम् । सञ्चितं प्रारब्धं चेति । तत्र सञ्चितं मूलधनवत्तिष्ठति । प्रारब्धमिह जन्मन्यनुभवेन क्षीयते । ऐहिकं पुनः स्वर्गनरकानुभवेन मरणानन्तरं प्रायः क्षीयते । शिष्टं किञ्चित् प्रारब्धतया पुनर्जन्मन्यनुभवायावतिष्ठते । इति रहस्यम् । अमुत्र परलोके । 'अदसस्तु विप्रकृष्टम्' इति विप्रकृष्टप्रतिपादकोऽदश्शब्दः परलोकमिहलोकापेक्षया विप्रकृष्टं रूढ्या प्रतिपादयति । इहास्मिन् जन्मनि । आद्यस्य प्रारब्धाख्यप्राक्कर्मावान्तरभेदस्येत्यर्थः । सञ्चितं तु न संक्षीयते । समातत्क्षयपर्यन्तं ज्ञानिनामपि देहस्यानश्वरत्वं गम्यते । अत एव जीवन्मुक्तिरुपपद्यते । ज्ञानेन प्रारब्धेतरकर्मणामेव विनाश्यत्वम् । न तु प्रारब्धस्य । अत एव 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते' इति गाने सर्वशब्देन प्रारब्धेतरस्यैवाशेषस्य विवक्षितत्वमित्याचार्यपादाः । अत्र 'भुक्त्वेहाद्यस्य संक्षयः' इत्यत्र भवतीत्यध्याहृत्यान्वये पूर्वकालक्रियाया भोगस्य उत्तरकालक्रियाया भवनस्य च समानकर्तृकत्वं दुरुपपादमेव । भुजिक्रियाकर्ता मनुष्यः । भवतिकर्ता तु संक्षय इति भेदात् । अतः 'समानकर्तृकयोः पूर्वकाले' इति विहितस्य क्त्वः शब्दशास्त्रविरुद्धत्वमापद्येत । अतः भुक्त्वा सतो मनुष्यस्याद्यस्य संक्षयो भवतीति सतःपदाध्याहारेणान्वयो युज्यते । भुक्त्येहाद्यस्य संक्षय इत्येव श्रेयान् पाठः । भुक्त्या भोगेनेति व्याख्यायामनुपपत्त्यशङ्काया एवानुत्थानादिति दिक् ॥ ३४ ॥

**अत्रेति** ॥ उक्तार्थदृढीकरणायेदमवतार्यते ॥

**स्वकर्मेति** ॥ प्रायेणेति ज्ञानिनां पुनर्जन्माभावमेव प्रतिपादयति । देहिनः देहान्तरं स्वीकृत्येत्यर्थः ॥ ३५ ॥

यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः पक्तिम् ।
व्यञ्जयति शास्त्रमेतत्तमसि द्रव्याणि दीप इव ॥ ३६ ॥

पूर्वजन्मार्जितं कर्म शुभं वा यदि वाशुभम् ।
तस्य पक्तिं ग्रहाः सर्वे सूचयन्तीह जन्मनि ॥ ३७ ॥

सुखदुःखकरं कर्म शुभाशुभमुहूर्तजम् ।
जन्मान्तरेपि तत् कुर्यात् फलं तस्यान्वयेपि वा ॥ ३८ ॥

प्राग्जन्मार्जितपुण्याघप्राबल्योद्रेकहेतुतः ।
प्रारब्धसंज्ञि मानुष्यजातौ जातकचिन्तनम् ॥ ३९ ॥ इति ॥

आ मरणादिह जन्तुः प्राकृतनिजकर्मपाकमनुभवति ।
तद्वक्तुमलं जातकमथ किं प्रश्नेन कथ्यते सत्यम् ॥ ४० ॥

**यदुपचितमिति ॥** दीपस्तमोपनीय यथा द्रव्याणि प्रदर्शयति तद्वत् ज्योतिश्शास्त्रं कालकृतव्यवधानेपि तज्जन्यप्रतिबन्धमपनीय पूर्वजन्मकृतं शुभाशुभं प्रदर्शयतीत्यर्थः ॥ ३६

**पूर्वजन्मेति ॥** पूर्वश्लोकोक्तार्थविवरणात्मक एवायं श्लोकः ॥ ३७ ॥

**सुखदुःखकरमिति ॥** अन्वये वंशे आत्मकृतकर्मणः शुभाशुभत्वमेव न किन्तु कर्मकरणकालशुभाशुभत्वमपि सुखदुःखकारणमेव । किञ्च जन्मान्तरेपि तत् सुखदुःखे उद्भावयेत् । अपि कर्तृवंशेपि तज्जन्यफलानुभवः स्यादेव ॥ ३८ ॥

**प्राग्जन्मेति ॥** पुण्याघानां पुण्यानामघानां पापानां च । उद्रेकोतिशयः । स एव हेतुः तस्मात् । प्रारब्धमिति संज्ञा यस्यास्ति तत् प्रारब्धसंज्ञि । जातकचिन्तनं जातकेन फलनिरूपणम् । प्रारब्धसंज्ञि इत्यन्वयः । फलनिरूपणं प्रारब्धशब्दव्यवहार्यमित्यर्थः । प्रारब्धकर्मजन्यफलनिरूपणमपि लक्षणया प्रारब्धमित्युच्यत इत्यर्थः । यद्वा प्रारब्धसंज्ञिमानुष्यजातावित्येकं पदम् । मनुष्यजन्मनि प्रारब्धसंज्ञासंज्ञिनि जातकचिन्तनं कर्तव्यमिति शेषः । एवंभूते मनुष्यजन्मनीति मूलकारेणैव व्याख्यातत्वादिति बोध्यम् ॥ ३९ ॥

**आ मरणादिति ॥** अलं पर्याप्तम् । अथेति कार्त्स्न्ये । प्रश्नेन किं न किमपि प्रयोजनमिति पूर्वः पक्षः । सत्यमित्यर्धाङ्गीकारे । नायं निश्चितः सिद्धान्त इति भावः ॥ ४०

कस्य पक्तिरिति ज्ञातुमिदानीं पूर्वकर्मणाम् ।
इहार्जितं च विज्ञातुं कर्म प्रश्नो विधीयते ॥ ४१ ॥

प्राग्जन्मनि कृतानां च कृतानां चेह कर्मणाम् ।
विभागोपि कथं ज्ञेय इति चेत्सोपि कथ्यते ॥ ४२ ॥

यदा जातकतः प्रश्नो गुणदोषैर्विभिद्यते ।
तदा शुभाशुभं विद्यात् कर्मभेदैरिहार्जितैः ॥ ४३ ॥
यदानुसरति प्रश्नो जातकं ग्रहभादिभिः ।
तदा प्राक्कर्मपाकः स्यादित्यादूह्यं हि धीमता ॥ इति ॥ ४४ ॥
जातके यत् फलमुक्तं तत्सर्वं प्रश्नेपि चिन्त्यम् । तथा चोक्तम् ॥

**कस्येति** ॥ इदानीमस्मिन् काले पृच्छाकाल इति यावत् । पूर्वकर्मणां शुभाशुभरूपाणां प्रारब्धानां मध्ये कस्य शुभस्य वा अशुभस्य वा । पक्तिः फलानुभव इति ज्ञातुम् । किञ्च इहास्मिन् जन्मनि आर्जितं कृतमिति कालो न विवक्षितः । कृतं क्रियमाणं करिष्यमाणं चेति कर्म शुभाशुभरूपम् । विज्ञातुं विशेषेणावगन्तुम् । विधीयते विधेय एवेत्यर्थः ॥

**प्राग्जन्मनीति** । 'अन्यस्यानुभवोमुत्र' इत्युक्तत्वादिह जन्मनि कृतानां कर्मणां फलानुभवः कथमिहैवेति चेत्सत्यम् । इदं कर्मकृतमित्यवगमे नास्ति खलु किमपि बाधकम् । तावन्मात्रमस्तु फलम् । वस्तुतस्तु 'अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते' इत्यादिवचनप्रामाण्यादैहिककर्मणामत्युत्कटत्वे फलमनुभोक्तव्यमिहैवेति तत्त्वम् । विश्वामित्रब्राह्मण्यादन्यित्र स्मर्यन्ते च बहून्युदाहरणानि । कथ्यते अनुपदं कथयिष्यते । भविष्यति वर्तमानसामीप्ये लट् । ४२ ॥

**यदेति** ॥ जातके गुणाधिके प्रश्नो दोषाधिको यद्वा जातके दोषाधिके प्रश्नो गुणाधिक इति द्विधा प्रश्नस्य जातकात् भेदः । आर्जितैरत्युत्कटत्वेनेति भावः ॥ ४३ ॥

**यदानुसरतीति** ॥ अनुसरतीति ग्रहस्थित्या चन्द्राक्रान्तराशिना लग्नराशिनारूढेन वा जातकतुल्यो भवति । प्राक्कर्मपाकः प्रारब्धकर्मफलानुभव एव । धीमतेति विविधयुक्तपर्यालोचनेनोह्यम् । अत एव 'ऊहापोहपटुः' इति दैवज्ञलक्षणमुक्तमिति तात्पर्यम् ॥ ४४ ॥

**जातक इति** ॥ उक्तं ग्रन्थान्तर इति शेषः । तदेव दर्शयति ॥

बुध्वा शास्त्रं यथान्यायं बलाबलविधानतः ।
यथोक्तं जातके सर्वं तद्वत् प्रश्नेपि चिन्तयेत् ॥ ४५ ॥ इति ॥

प्रश्नस्य जन्मसाम्यमेवान्यत्रोक्तम् ।

संप्रेर्यमाणस्त्ववशः शरीरी
प्रसह्य दैवेन शुभाशुभेन ।
ज्योतिर्विदः सन्निधिमेति यस्मात्
प्रश्नोप्यतो जन्मसमः फलेषु ॥ ४६ ॥

जन्मलग्नतया प्रश्नलग्नं संकल्प्य पण्डितः ।
जातके यद्यदुद्दिष्टं तत्तत् प्रश्नेपि चिन्तयेत् ॥ ४७ ॥ इति ॥

॥ इति प्रश्नमार्गे प्रथमोध्यायः ॥

**बुध्वेति** ॥ बलाबलविधानतः ल्यब्लोपे कर्मणि पञ्चम्यास्तसिः । ग्रहाणां भावानां च बलाबलविधानं विरचय्य । बलमानीयेत्यर्थः सर्वं भावफलयोगफलराशिफलादिकम् ॥

**प्रश्नस्येति** ॥ अन्यत्र ग्रन्थान्तरे । वक्ष्यमाणश्लोकद्वयं तदुक्तिः ॥

**संप्रेर्यमाण इति** ॥ संप्रेर्यमाणः नियुज्यमानः । अवशः दैवपरतन्त्रः । दैवेन ईश्वरेण शुभाशुभेन भविष्यता हेतौ तृतीया । दैवेनेत्यत्र तु कर्तरि । एति प्राप्नोति । गर्भत्वेन मातृकुक्षिमिवेति बालत्वेन ततो भुवमिवेति च बोध्यम् । जन्मसमः जातकतुल्यः । फलेषु फलकथने विषये ॥ ४६ ॥

**जन्मलतयेति** ॥ प्रश्नारूढराशिं जननलग्नराशित्वेन कल्पयित्वेत्यर्थः । पण्डितः युक्तिपर्यालोचनदक्षो दैवज्ञः । जातके तत्फलाचिन्तने । प्रश्नेपि जातक इवेत्यर्थः ॥ ४७ ॥

-:0:-

## अथ द्वितीयाध्यायप्रारम्भः ।

अथ दैवज्ञकृत्यमुच्यते ॥

उत्थायोषसि देवतां हृदि निजां
ध्यात्वा वपुश्शोधनं
कृत्वा स्नानपुरःसरं सलिलवि-
क्षेपादि कर्माखिलं ।
कृत्वा मन्त्रजपादिकं च विधिवत्
पञ्चांगवीक्षां तथा
खेटानां गणनं च दैवविदथ
स्वस्थान्तरात्मा भवेत् ॥ १ ॥
आलोके खलु यस्य कस्यचिदसा-
वायाति यत्किंचन
प्रष्टुं मां प्रति नूनमित्यवहित-
स्तन्न्यस्तदृष्टिर्दृढम् ।
तच्चेष्टादिकमाकलय्य सकलं
तत्कालजातं पुन-
र्जानीयात्सदसन्निमित्तमपि च
श्वासस्थितिं चात्मनः ॥ २ ॥

---

**अथेति** ॥ दैवज्ञेन कर्तव्यं कर्म प्रथममुच्यत इत्यर्थः ॥

**उत्थायोषसीति** ॥ उषसि 'पञ्च पञ्च उषःकाल' इत्युक्ते सूर्योदयात् पूर्वं पञ्चनाडि-कात्मके काले । निजां स्वस्वोपास्यमानाम् । वपुःशोधनं मलमूत्रविसर्जनशौचाचमनादि-कम् । अखिलं सर्वमविकलं च । मन्त्रो गुरूपदेशलब्धः । स्वस्थः अन्यकार्यव्यग्रताशून्यः ॥

**आलोक इति** ॥ यस्यकस्याचित् परिचितस्यापरिचितस्य वेत्यर्थः। नूनमिति निश्चये सम्भावनायां वा । इति मत्वेति शेषः । तन्न्यस्तदृष्टिस्तस्मिन्नागन्तरि । दृढमिति न्यास-

अनन्तरं पृच्छककृत्यमुच्यते ॥

तिथौ शुभायां शुभदेऽनुकूले
तारे दिने भानुशुभग्रहाणाम् ।
प्रष्टेप्सितं प्राभृतदानतुष्टं
ज्योतिर्विदं प्रातरुपेत्य पृच्छेत् ॥ ३ ॥

एवं भक्तिपूर्वं पृच्छत एव शुभाशुभं वाच्यम् । नान्यस्य । तथाचोक्तम् ॥

नापृष्टः कस्यचिद्ब्रूया-
न्नान्यायेन च पृच्छतः ।
परमार्थफलज्ञानं
यतो नैवेह सिध्यति ॥ ४ ॥ इति ॥

तथापि ॥

क्रियाविशेषणम् । तच्चेष्टादिकं तस्यागन्तुः चेष्टाः स्वाङ्गस्पर्शस्थित्यादयः । आदिशब्देन वसनादीनां परिग्रहः । आकलय्य ज्ञात्वा । सकलमिति चेष्टादिकनिमित्तयोरुभयोरपि विशेषणम् । तत्कालजातं पृच्छासमये यदृच्छोत्पन्नम् । निमित्तं चकोरशब्दक्षुतादिकं शुभाशुभरूपम् । श्वासस्य स्थितिं इडादिनाडीगतिभेदं दैर्घ्यपरिमाणं च ॥ २ ॥

**तिथाविति** ॥ शुभायां स्थिरकरणरिक्तादिवर्ज्यैरहितायाम् । शुभदे अनुभ इति यावत् । अनुकूले विपत्प्रत्यरादिरहिते । भानुशुभग्रहाणां वारे कुजमन्देतरवारेष्वित्यर्थः । ईप्सितं विवाहसन्तत्यायुरादिकं निजाभिलषितम् । प्राभृतदानतुष्टं प्राभृतस्य उपहारभूतयत्किंचित्फलादिकस्य दानेन तुष्टम् तदर्पणेन प्रसाद्येत्यर्थः । प्रातः दिनमध्यात्पूर्वम् । उपेत्य आरादुपगम्य न तु दूरात् स्थित्वेत्यर्थः । पृच्छककृत्यकथनं तु ज्यौतिषिकेन पृच्छककृत्यं विधिवन्निर्वर्तितं वा न वेति ज्ञातव्यमित्याशयेनेत्यवगन्तव्यम् ॥ ३ ॥

**एवमिति** ॥ अन्यस्य निन्दापूर्वकं पृच्छत इति यावत् ॥

**नापृष्ट इति** ॥ अपृष्टः पृच्छकेनेत्यर्थात् । अन्यायेन यदृच्छया परीक्षितुं वा । उत्तरार्धेन हेतुरुच्यते ॥ ४ ॥

अपृच्छतः पृच्छतो वा जिज्ञासोर्यस्यकस्यचित् ।
होराकेन्द्रत्रिकोणेभ्यः शुभाशुभफलं वदेत् ॥ ५ ॥
वसिष्ठवचनादस्माज्जिज्ञासोरप्यपृच्छतः ।
दर्शने दैवविद्ब्रूयादारूढेन शुभाशुभम् ॥ ६ ॥

अथारूढविधिरुच्यते ॥

ऐन्द्र्यां मेषवृषावग्निकोणे मिथुनभं स्थितम् ।
याम्यां कर्कटसिंहौ स्तो वारुण्यां दिशि कन्यका ॥ ७ ॥
वारुण्यां तु तुलाकीटौ वायुकोणे धनुःस्थितिः ।
सौम्यां मृगघटौ स्यातामैशान्यां दिशि मीनभम् ॥ ८ ॥
भूमिचक्रमिति प्रोक्तं विष्वग्दैवविदःस्थितम् ।
तत्र यत्र स्थितः प्रष्टा पृच्छत्यारूढभं हि तत् ॥ ९ ॥
आरूढत्वात्पृच्छकेन राशिरारूढ उच्यते ।
तस्मिन् सम्यक्परिज्ञाते सर्वं तेनैव चिन्त्यताम् ॥ १० ॥
तस्मिन्ननिश्चिते चक्रं विलिख्यास्मिन् सुपूजिते ।
प्रष्टा स्वर्णेन यं राशिं स्पृशेदारूढ एव सः ॥ ११ ॥ इति ॥

पृच्छासमय एव दैवज्ञेन ज्ञातव्यानि वक्ष्यमाणक्रमेणोच्यन्ते ॥

---

**अपृच्छत इति** ॥ अपृच्छतः आत्मावस्थां ज्ञातुमागतमात्रस्य होराकेन्द्रत्रिकोणेभ्यः होरालग्नम् । केन्द्रत्रिकोणे लग्नात्तस्थाने । होराकेन्द्रत्रिकोणान्याश्रित्येति ल्यब्लोपे पञ्चमी । वसिष्ठवचनात् पूर्वश्लोकात्मकात् । दर्शने दर्शनसमय एव ॥ ५, ६ ॥

**अथारूढविधिरिति** ॥ उच्यते ऐन्द्र्यामित्यारभ्य एव सः इत्यन्तैः पञ्चभिः श्लोकैरित्यर्थः ॥

**ऐन्द्र्यामिति** ॥ विष्वक् दैवविदं परितः । एवं च ऐन्द्र्यां दैवविदवस्थानस्थलात् पूर्वदिशीत्यादि व्याख्येयम् । तस्मिन् पृच्छकारूढराशौ । अनिश्चिते सन्धिस्थित्यादिना निश्चयेनानवगते सति । प्रष्टा पृच्छकः । इदमुपलक्षणं कन्यादीनाम् । 'ततः कन्या कुमारी वे'त्यादि वक्ष्यमाणत्वात् ॥ ११ ॥

**पृच्छासमय इति** ॥ वक्ष्यमाणक्रमेण 'बालान्नवर्ज्यतारास्वि'त्यादि वक्ष्यति । तत्क्रमेण उच्यन्ते । अनन्तरश्लोकेनेत्यर्थः ॥

दैवज्ञेन समाहितेन समयो
देशः स्ववायुर्दशा
प्रष्टुः स्पर्शनमाश्रितर्क्षहरितौ
प्रश्नाक्षराणि स्थितिः ।
चेष्टाभावविलोकने च वसना-
द्यन्यच्च तत्कालजं
पृच्छायाः समये तदेतदखिलं
ज्ञेयं हि वक्तुं फलम् ॥ १२ ॥

अथ फलनिर्देशक्रम उच्यते ॥

पृच्छानिर्गममार्गमन्दिरगतिप्रश्नक्रियासंभवम्
सूत्रत्रिस्फुटजाष्टमङ्गलफलारूढोदयेन्दूद्भवम् ।
आयुः खेटवशाच्च जातकवशात्संचिन्त्य भावान् परान्
देवानामनुकूलतादि च वदेद्बाधाभिचाराद्यपि ॥ इति ॥ १३ ॥

**दैवज्ञेनेति** ॥ पद्येनानेन पृच्छासमयज्ञेयान्युक्तानि । समाहितेन 'आलोके खल्वि'त्यादिपद्योक्तलक्षणलक्षितेन । समयः कालः । देशः प्रश्नक्रियाधिकरणभूतः । स्ववायुर्निजश्वासः । दशा स्वावस्थामनोव्यापारदेहव्यापारात्मिका । स्पर्शनं पृच्छकस्य स्वाङ्गादिस्पर्शनम् । आश्रितर्क्षं पृच्छकाधिष्ठितभूचक्रराशिः । हरिदैन्द्र्याग्नेय्यादिरूपा दिक् । प्रश्नाक्षराणि यैरक्षरैः प्रश्नः कृतस्तानि । स्थितिः प्रश्नकालीनपृच्छकस्थितिः । चेष्टा पृच्छकस्य पादकराद्यङ्गव्यापारः । भावः प्रसन्नखिन्नतादिरूपः । विलोकनं ऊर्ध्वाधस्तिर्यगादीक्षणम् । वसनं शुक्लादिवस्त्रवेष्टितत्वमित्यर्थः । आदिशब्देन कुण्डलकटकप्रभृत्यलंकृतत्वादिकं संगृह्यते । तत्कालजमन्यत् वीणावेणुमृदङ्गादिकं हाहाखेदरवादिकं उपश्रुत्यादिकं च । प्रष्टुः शुभाशुभफलं वक्तुं सर्वमेतद्विशेषेण विज्ञेयम् ॥ १२ ॥

**अथेति** ॥ अथेति पृच्छानिर्गमेत्यादिपद्येन फलनिर्देशक्रमः । पृच्छादिपञ्चसमयेषु शुभाशुभं चिन्त्यम् ॥

**पृच्छेति** ॥ पृच्छायां समयादितत्कालजातान्तमखिलम् । निर्गमादिषु चतुर्षु तत्कालजातमेव । मार्गे प्रष्टृगृहप्राप्तेः प्राक्पथि । प्रश्नक्रिया चक्रलेखनादिकम् । बाधा

दैवज्ञसावधानत्वे प्रष्टुश्च प्रश्नसौष्ठवे ।
सति प्रश्नेषु सर्वेषु शुभाप्तिर्वचनं तथा ॥ १४ ॥
दैवज्ञसावधानत्वं प्रष्टुश्च प्रश्नसौष्ठवम् ।
इष्टद्रव्यश्रुतीक्षे च सम्यगिष्टोपलब्धये ॥ इति ॥ १५ ॥
अथोक्तानां समयादीनामुक्तक्रमेण शुभाशुभत्वमुच्यते ।
बालान्नवर्ज्यतारासु गण्डान्तोष्णविषेषु च ।
अष्टमीविष्टिरिक्तासु स्थिरेषु करणेषु च ॥ १६ ॥

---

धर्मदैवादिकृता पीडा । आभिचारः शत्रुकृतं मारणादिकं कर्म । आदिना व्याधिशान्त्यादिपरिग्रहः ॥ १३ ॥

**दैवज्ञेति ॥** अनेन पद्येन समयादिभ्योऽन्यत्प्रश्नकालविशेयमुक्तम् । सौष्ठवं आभिमुख्यविनीतत्वादिजन्यसुष्ठुत्वम् । सर्वेषु आयुर्विवाहसन्तानादिषु । अनेन सावधानत्वादीनां सर्वप्रश्नसाधारण्यमवगन्तव्यम् ॥ १४ ॥

**दैवज्ञेति ॥** इष्टद्रव्यश्रुतिः तत्तत्प्रश्न समुपयुक्तद्रव्यविषयकवार्ताश्रवणम् । ईक्षा तादृशद्रव्यदर्शनम् ॥ १५ ॥

**अथेति ॥** उक्तक्रमेण 'दैवज्ञेन समाहितेने'त्यादिपद्यप्रदर्शितक्रममनुसृत्येत्यर्थः ॥

**बालान्नवर्ज्यतारास्विति ॥** भरणीकृत्तिकार्द्राश्लेषमघापूर्वफल्गुनीविशाखाज्येष्ठामूलपूर्वाषाढापूर्वफल्गुन्यो बालान्नवर्ज्यताराणि। अश्विनीमघामूलानां प्रथमःपादः आश्लेषाज्येष्ठा रेवतीनामन्त्यः पादश्च गण्डान्तः अश्विनीरोहिणीपुनर्वसुमघाहस्तानां नाडिकासार्धसप्तकमतीत्य नाडिकासार्धसप्तकं भरणीमृगशीर्षपुष्यपूर्वफल्गुनीचित्राणां पञ्चपञ्चाशन्नाडिकाअतीत्यनाडिकापञ्चकं, कृत्तिकार्द्राश्लेषोत्तरफल्गुनीस्वातीनामेकविंशतिं नाडिका अतीत्य नाडिकानवकं,विशाखामूलश्रवणपूर्वप्रोष्ठपदानां आदतोनाडिकाष्टकं, अनूराधापूर्वाषाढाश्रविष्ठोत्तरफल्गुनीनांद्विपञ्चाशतंनाडिकाअतीत्य नाडिकाष्टक,ज्येष्ठोत्तराषाढा शतभिषग्रेवतीनां विंशतिंनाडिका अतीत्य नाडिकादशकं चोष्णसंज्ञम् । विषं तु "अङ्केनैव वियत्पयोनिलनरो रागी नगं नाखुना दिव्यं राष्ट्रनरोभयाद्विटनटो वाद्यैर्नरो वीरनुत् । निष्ठा निम्ननयोदकं तु कावेरानिम्बौ निशावक्रनुद्भव्याशादिषु तानतीत्य परतो नाड्यश्चतस्रो विषम्" ॥" इति श्लोकादवगन्तव्यम् । रिक्ताश्चतुर्थीनवमीचतुर्दश्यः । तिथिनक्षत्राणां आद्यन्तयोरेकैका नाडिका तिथिसन्धिरिति नक्षत्रसन्धिरिति चो-

तिथिनक्षत्रराश्यंशसन्धौ च गुलिकोदये ।
चक्रार्द्धे ग्रहणे सार्पशिरस्येकार्गळे तथा ॥ १७ ॥
मृत्युदग्धादियोगेषु पापदृष्ट्युदयेषु च ।
त्रयोदश्यां प्रदोषे च निशीथे रविदर्शने ॥ १८ ॥
संक्रान्तौ च तथा प्रत्युर्विपत्प्रत्यरयोर्वधे ।
अष्टमे च तथा राशौ जन्माष्टमगते विधौ ॥ १९ ॥
इत्यादि दुष्टकालेषु प्रश्नस्स्यादशुभप्रदः ॥ २० ॥

---

च्यते । मेषादिराशीनामाद्यन्तयोः पञ्चपञ्चविनाडिका राशिसन्धिः । द्वादशस्वपि राशिषु प्रत्येकं नवानां नवांशकानां आद्यन्तयोरेकैका विनाडिका अंशसन्धिः । लाटवैधृतापरपर्यायो व्यतीपातश्चक्रार्द्धम् । ग्रहणशब्देन सूर्यचन्द्रमसोरुपरागसमयमारभ्य तृतीयदिवसावसानावधिकः कालो विवक्षितः । सार्पशिरः सार्पमस्तकापरपर्यायः चन्द्रार्कस्फुटयोगे अनूराधोत्तरार्द्धरूपः कालः । एकार्गळं तु — " मण्डलहीनरवेः स्याद्दलासनेनित्यपुज्यभयतुल्ये । दैत्यनरर्क्षे तस्मिन्नादौ नाडी समैकार्गळो वर्ज्यः । मृत्युयोगः सूर्यादिवाराणां क्रमेण, मघाविशाखार्द्रामूलशतभिषग्रोहिणीपूर्वाषाढाभिरहःप्रथमाष्टमभागे संबन्धः । दग्धयोगस्तु सूर्यादिवाराणां क्रमेण द्वादश्येकादशी पञ्चमीद्वितीयाषष्ठ्यष्टमीनवमीरूपैः तिथिभिः पूर्ववत्सम्बन्धः। आदिशब्दग्राह्यो दुष्टयोगः पुनः, सूर्यादिवाराणां क्रमेण भरणीचित्रोत्तराषाढाश्रविष्ठाज्येष्ठापूर्वाषाढारेवतीभिः पूर्ववत् सम्बन्धः । पापशब्देन कुजशनिराहवो विवक्षिताः न तु सूर्यः । रविदर्शन इति पृथगुपादानात् । तत्तु सूर्यस्थितराशेस्सप्तमराशिः । अन्यथा पापदृष्टत्वेनेव तस्य दुष्टत्वे सिद्धे तद्ग्रहणं व्यर्थं स्यात् । अत एव दिने भानुशुभग्रहाणामित्युक्तमपि संगच्छते । अन्यत्र पापत्वेन क्वचिद्ग्रह्यमाणोप्ययमत्र शुभप्रद एव समयविचार इत्यायातम् । एवं च रविदर्शन इति पुनः कथनं तस्य दोषाधिक्यप्रदर्शनार्थमिति केषांचिद्दुराशाप्युन्मूलितेत्यवगम्यताम् । अत्र "एङः पदान्तादिति" इति पूर्वरूपेण अरविदर्शने इति पदच्छेदं विधाय रात्रावित्यर्थकथनमपि निशीथ इत्यस्य वैयर्थ्यापत्तिप्रसङ्गादुपेक्ष्यम् । मेघावरणादिना सूर्यस्यादृश्यत्वमिति तदर्थकल्पनं तु न हृदयङ्गमम् । निर्घातादीनामिव मेघावरणमात्रस्य दुष्टत्वकल्पने शास्त्रानुमत्यभावात् । दृष्टिरत्र सप्तमदृष्टिरेव गृह्यते, न त्वपूर्णदृष्टिर्विशेषदृष्टिर्वा । साम्प्रदायिकाशयस्य तथात्वात् । निशीथोऽर्द्धरात्रः । स तु सन्ध्यान्तराणामप्युपलक्षकः। अन्ये तु "निशीथस्तु पुमानर्द्धरात्रे स्याद्रात्रिमात्रके" इति कोशादत्र निशीथशब्दो रात्रिवाचक इत्यवतिष्ठन्ते । तन्मते सन्ध्यावर्जनमादिशब्दात् सिद्धम् । धूमकेतूदयादिवत् । सं-

इत्यादिदोषरहिते कालेमृतघटीषु ।
शुभानामुदये दृष्टौ मुहूर्तेषु शुभेषु च ।
सिद्धामृतादियोगेषु पृच्छाभीष्टफलप्रदा ॥ २१ ॥

एतत्कालविषयम् ॥

फलप्रसूनसंपूर्णमहीरुहसमाकुले ।
स्निग्धभूमितले रत्नकाञ्चनादिसमन्विते ॥ २२ ॥

क्रान्तिशब्देन बिम्बसक्रान्ती राशिसंक्रान्तिरपि विवक्षिते । विपत्प्रत्यरवधाः पृच्छकजन्मनक्षत्रात्रितयात् तृतीयपञ्चमसप्तमनक्षत्राणि । इत्यादिदुष्टकालेषु इत्यत्रादिशब्देन उत्कापातभूकम्पब्रह्मदण्डधूमकेतूदयप्रभृतयो ग्राह्याः। एतेषां सुरूपं लक्षणं च मुहूर्तशास्त्रविवरणप्रघट्टके निरूपयामः ॥ २० ॥

**शुभानामिति ॥** अमृतघटिकाः सर्वेष्वपि नक्षत्रेषु विषघटिकाभ्योनन्तराश्चतस्रो घटिकाः । मतान्तरे तु "सम्कृत्याकृतिनागसायकजिनैरिन्द्रोत्कृतिभ्यां जिनैर्मन्वर्कैस्तिथिशक्रनागवसुभिः वेदाष्टशक्रैः क्रमात् । विद्येन्द्राब्धियुगार्कदिग्ध्यातजिनैरर्कैः पुराणैर्युता नाडीस्त्रिंशदतीत्य भेषु परतो नाड्यश्चतस्रोमृतम्"॥ इत्युक्ता अमृतघटिका अवगन्तव्याः। मुहूर्तेषु शुभेषु अहनि रात्रौ च प्रत्येकं पञ्चदशपञ्चदशमुहूर्ता विद्यन्ते । दिनरात्रिमानभेदानुसारेण भिद्यमानमपि प्रायो घटिकाद्वयं मुहूर्तः। तत्राहनि तृतीयपञ्चमसप्तमाष्टमनवमत्रयोदशपञ्चदशा रात्रौ तृतीयचतुर्थपञ्चमाष्टमनवमदशमैकादशद्वादशत्रयोदशचतुर्दशपञ्चदशाश्च मुहूर्ता शुभाः । एतद्विषयकमतभेदास्तु मुहूर्तशास्त्रप्रघट्टके निरूप्येरन् । सिद्धयोगाः "उत्तरासलिलपौष्णविष्णवो मातृमारुतवसुप्रचेतसः । मित्रदण्डधरपौष्णतारका सोमविश्वभगामित्रवेधसः । मैत्राश्विनीमारुतमातृतिष्या भगत्रयनैरृतपौष्णदस्राः । धात्राग्निवायुत्रयवारिनाथाः सार्कादिवाराश्शुभसिद्धयोगाः" ॥ इति वचनेन, अमृतयोगाः "सार्कादिवारा गुरुमूलहस्ताश्वित्रादिमार्द्रश्रवणेन्दुताराः । बुध्न्यश्विनीविश्वभगप्रजेशा विश्वाभिमित्रा शरशैलतिथ्योस्त्रयोदशीमातृजलान्त्यभानि ॥ भगप्रचेतो मरुतः सनन्दाः भद्रासमेता वसुधानुवाताः । क्रमेण योगा अमृताभिधानाः" । इति वचनेन चावगन्तव्याः । आदिशब्देन योगान्तरमपि द्रष्टव्यम् । तत्रोक्तम्— "चित्राग्नीश्वरपाशिनो दिनपतेर्वारे सनन्दास्तथा भौमस्याम्बुभुजङ्गपौष्णमरुतो योगावराख्याः शुभाः । नन्दा भार्गवभौमतीक्ष्णमहसां भद्रा कवीन्द्वोर्जया चान्द्रिक्ष्मासुतयोः शनेरपि परा(रिक्तेत्यर्थः)पूर्णा गुरोः सिद्धिदा" ॥ इत्यादिना ॥ २१ ॥

**एतदिति ॥** एतदनन्तरश्लोकषट्कोक्तम् ॥

**फलप्रसूनेति ॥** सार्धेनानेन पद्यत्रयेण शुभो देश उक्तः । पञ्चेद्रियमनःप्रीति-

पञ्चेन्द्रियमनःप्रीतिकरे गोमयवारिणा ।
तत्क्षणप्रोक्षितक्षोणितले समवसुन्धरे ॥ २३ ॥
मङ्गल्यकर्मसंयुक्ते मङ्गलस्त्रीसमाकुले ।
मन्दिरे पुत्रभार्यादिहृष्टपुष्टजनाश्रिते ॥ २४ ॥
यः पृच्छतीदृशे देशे साप्नोत्यभिमतं ध्रुवम् ॥ २५ ॥
महावने श्मशानान्ते निम्नोच्चे शून्यमन्दिरे
गृहे चार्तजने प्रेतक्रियाद्यशुभकर्मणि ॥ २६ ॥
जलाग्निशुष्कवृक्षान्ते तथैवेन्द्रियचेतसाम्
अनिष्टदे प्रदेशे च प्रष्टा नाप्नोत्यभीप्सितम् ॥ २७ ॥

एतद्देशविषयम् ॥

कार्यं श्वासपरीक्षणं प्रतिदिनं
बुध्वा प्रभातागमे
तस्येडादिगतिर्द्विरामभृतिस-
ञ्चारश्च विज्ञायताम् ।

---

करे पञ्चानामिन्द्रियाणां मनसश्च प्रीतिकरे । समवसुन्धरे समा निम्नोन्नतत्वरहिता वसुन्धरा भूमिर्यस्मिंस्तस्मिन् । मङ्गल्यकर्माणि विवाहबालभोजनादिकानि । मङ्गलस्त्रियः सुमङ्गल्यः । साप्नोति सः आप्नोति इति छेदः । "सोपि लोपे चेत् पादपूरण"मिति पाणिन्यनुशासनेन सुलोपः । अनुशासनस्यास्य छान्दसमात्रपरत्वकल्पनं तु न सुसहम् । "सैष दाशरथी रामः, सैष राजा दशरथ" इत्यादिदर्शनात् ॥ २२, २५ ॥

**महावन इति** ॥ अन्तशब्दः समीपवाची । शून्यं जनैस्त्यक्तम् । आर्ता जना यस्मिन्निति गृहविशेषणम् । प्रेतक्रियादीन्यशुभकर्माणि यस्मिन्निति च । प्रेतक्रिया पिण्डनिर्वपणादिकम् । इन्द्रियाणि पञ्च चेतश्च तेषामनिष्टदे इति देशविशेषणम् । एतद्वचनं सर्वत्र पुस्तकालोकनादिके तत्तत्प्रदेशस्य सुखबोधनार्थमप्युपयुज्यते । २६, २७ ॥

**एतदिति** ॥ एतत्सार्द्धश्लोकपञ्चकोक्तम् ॥

**कार्यमिति** ॥ एतदाद्यैर्द्वादशभिः पद्यैः श्वासलक्षणमुच्यते । कार्यं दैवज्ञेनान्यैश्च । बुध्वा बोधानन्तरं सूर्योदयात्पूर्वमेव । तस्य श्वासस्य । नाडीनामिडादिसंज्ञोपरि वक्ष्यते।

तेनात्मीयशुभाशुभं हि सकलं
ज्ञेयं पुनः पृच्छतां
तत्कालात्मसमीरणेन च तथा
नष्टादिकं चोच्यताम् ॥ २८ ॥

वारेष्विन्दुबुधाङ्गिरोभृगुभुवां
वामे चरन् मारुतो
भौमार्कार्किदिनेषु दक्षिणगतो
नृणामभीष्टः स्मृतः ।
सौम्यानां दिवसेषु दक्षिणगतो-
निष्टो सतां वामगे
वक्ष्यन्ते मरुतोः शुभाशुभद्वयो-
र्भेदाः फलानामथ ॥ २९ ॥

सर्वेषामपि वासरेषु पवने-
भीष्टे वपुःस्वस्थता
लाभोऽर्थस्य च मृष्टभोजनमितो-
ष्टानां भवोथान्यथा ।

पृथिव्यादि पञ्चभूतस्थानं च तेन विज्ञातगतिसञ्चारेण श्वासेन । पृच्छतां सकलं शुभाशुभं ज्ञेयमित्यनुषज्यते । तत्काले प्रश्नकाले आत्मनः ज्योतिर्विदः यः समीरणः श्वासः तेन । तथा शुभाशुभकथनवदेव ॥ २८ ॥

**वारेष्विति** ॥ अभीष्टः शुभप्रदः । अनिष्टोऽशुभप्रदः । शुभवारे वामनाडीगतिः पापवारे दक्षिणनाडीगतिश्च शुभा । विपरीतात्वशुभा । भेदाः विशेषाः । सामान्योक्तं शुभमशुभं च विशेषतो वक्ष्यते इत्यर्थः ॥ २९ ॥

**सर्वेषामिति** ॥ सर्वेषां शुभानामशुभानां च । अभीष्टे शुभवारे वामनाड्या पापवारे दक्षिणनाड्या च सञ्चरमाण इत्यर्थ । इतीत्यादिकानाम् । सर्वैर्विग्रहः कलहः । शयनं निद्रा । विण्मोक्षणं मलपरिहारः ॥ ३० ॥

श्वासश्चेदहितो न मृष्टमशनं
नार्थागमो विग्रहः
सर्वैर्नो शयनं सुखेन च सुखं
विण्मोक्षणादिष्वपि ॥ ३० ॥
श्वासस्य प्रतिकूलता यदि दिने
भानोर्वपुर्वेदना
शीतांशोः कलहः कुजस्य मरणं
दूरप्रयाणं विदः
राज्यापद्धिषणस्य शुक्रदिवसे
कार्यस्य कस्यापि नो
सिद्धिर्मन्ददिने स्ववीर्यकृषिना-
शेळाविवादादयः ॥ ३१ ॥
वायुर्भानुदिनाष्टके यदि चरे-
द्वामे गुरोः पञ्चता
व्याधिर्वा सुमहांस्तथैव हिमगो-
र्वाराष्टके दक्षिणे ।
पुत्रापत् क्षितिजस्य बन्धनमरे-
र्वामे विदो दक्षिणे
भृत्युः स्वस्य निरन्तरं सुरगुरो-
र्मृत्युर्गुरोः संभवेत् ॥ ३२ ॥

**श्वासस्येति** ॥ वारभेदेनानिष्टफलविशेषकथनपरमिदं पद्यम् । मरणं स्वस्य स्वजनस्य स्वसन्निकृष्टवास्तव्यस्य वा । इळाविवादो भूमिविषयकव्यवहारः । स्ववीर्यकृषीनां नाशः । आदिशब्देनान्यान्यशुभफलान्यनुसन्धेयानि ॥ ३१ ॥

**वायुरिति** ॥ एतत् पद्यद्वयं सूर्यादीनां निरन्तरमष्टसु वासरेषु वायुप्रातिकूल्ये सम्भविष्यद्विशेषफलं प्रतिपादयति । भानुदिनाष्टके निरन्तरं वायुः वामे चरेद्यदि गुरोः पञ्चता भवेदित्यन्वयः । एवमुत्तरत्रापि । निरन्तरमिति पदं वाक्यसप्तकेऽपि प्रत्येकं योज्यम् ।

शुक्रस्यावनिहेर्द्दिनक्षयो दक्षिणे शनेर्वामे ।
यदि चरति मातरिश्वा भार्यानाशो निवासनाशो वा ॥ ३३ ॥

**अथ श्वासस्य प्रमाणेन तस्य पृथिव्यादिसञ्चारस्तत्फलं चोच्यते ॥**

मेदिन्याः खलु षोडशाङ्गुलमपां
दैर्घ्यं दिनेशाङ्गुलं
वह्नेर्दन्तिमिताङ्गुलं मरुत ए-
तद्द्व्यूनमग्न्यङ्गुलम् ।
आकाशस्य च वेद्यमेतदुदितं
भूम्यादिभूतात्मक-
स्वीयश्वासगतिप्रमाणमुभयो-
रेतत्समं घ्राणयोः ॥ ३४ ॥

पञ्चता मरणम् । व्याधिर्वा सुमहानिति विकल्पान्तरम् । अरेः कर्तुः । बन्धनं स्वकर्मकं स्वीयकर्मकं वा । स्वस्य स्वशब्दोऽत्रात्मवाची आत्मीयवाची वा । क्षितिजस्येत्यादिषु वाराष्टक इत्यनुषज्यते । निवासो गृहं तस्य नाश इति विकल्पान्तरम् । प्रतिदिनं श्वासं परीक्ष्य तत्सञ्चारनाडीविभागं विलिख्य परिशोधयतामेव सुविशदमिदम् ॥ ३२, ३३ ॥

**अथेति ॥** प्रमाणेन दैर्घ्यमानेन। तस्य श्वासस्य। पृथिव्यादिषु पञ्चसु भूतेषु सञ्चारः। तत्फलं तस्य सञ्चारस्य फलम् । अत्र दक्षिणं हस्तं नासादण्डमध्ये विन्यस्य श्वासं बहिरवतार्य वामया दक्षिणया वा नासानाड्या श्वासोऽधिकं बहिरगमदिति परीक्ष्यम् । स श्वासः कियद्दैर्घ्यवानिति चावहितेन सूक्ष्ममवगन्तव्यम् । एवमवगतेन श्वासदैर्घ्येणैव पृथिव्यादिभूतसञ्चारो वक्ष्यमाणप्रमाणानुसारेण बोद्धव्यः ॥

**मेदिन्या इति ॥** दिनेशा द्वादश । दन्तिनोऽष्टौ । एतद्दन्तिमिताङ्गुलं द्व्यूनं षडङ्गुलमित्यर्थः । अग्नयस्त्रयः। षोडशाङ्गुलं तदन्यूनमित्यर्थः । एवमन्यत्रापि द्रष्टव्यम् । एवं चाग्न्यङ्गुलन्यूनं श्वासदैर्घ्यं न कस्यापि स्यादित्यवगन्तव्यम्। अथ च तन्न्यूनमाकाशस्येत्यनुक्त्वा अग्न्यङ्गुलमाकाशस्येति कथनं साम्प्रदायिकक्रमावबुध्यर्थमित्याधिकविस्तरोऽस्माकीने केरलीयैतद्व्याख्याने ॥ ३४ ॥

पक्षेच्छे खलु पक्षतौ क्षितिरिडा-
यातोन्नमन्मन्दिर-
प्राकारादिगृहप्रवेशनकरी
पट्टाभिषेकप्रदा ।
कुर्यादन्यदपीष्टकर्म सलिलं
वामस्थमेवं शुभं
कूपादे रचनं करग्रहणमं-
बूत्थं च कुर्याद्भयम् ॥ ३५ ॥

वह्निर्वारिभयायुधक्षतिशरी-
रारुग्गृहप्लोषणं
पातं वा शिशुकादिकस्य दहने
कुर्याद्भजेतेश्वरम् ।
वायुश्चोरभयं पलायनमपि
स्थानं विसृज्यात्मनो
दन्त्यश्वाद्यधिरोहणं च वितरे-
द्व्योमोदयश्चेत् पुनः ॥ ३६ ॥

मन्त्रादेरुपदेशलब्धिरसकृ-
द्देवप्रतिष्ठापनं
दीक्षा व्याधिसमुद्भवश्च नितरां
पीडा तनोः सन्ततम् ।

---

**पक्षेच्छ इति** ॥ क्षितिस्तत्र चरन् श्वासः । उन्नमन्ता उच्छ्रिता मन्दिरप्राकारादयो यस्मिं-स्तादृशगृहप्रवेशनकरी । अत्र मन्दिरशब्देनान्तर्गृहाणि गृहशब्देन समुदायश्च विवक्ष्यन्ते । अन्यदुक्तादितरत् शुभं कूपादिरचनकरग्रहणात्मकमेव । अम्बूत्थं च कुर्याद्भयमित्यत्र दक्षि-णस्थं सलिलमित्यध्याहृत्य योज्यम् । अम्बूत्थभयस्य शुभफलत्वायोगात् । मूलकारणैव तथा व्याख्यातत्वाच्च । पक्षतिथिभूतनाडीचतुष्कचिन्तनेनैवेदं फलं वाच्यम् ॥ ३५ ॥

**वह्निरिति** ॥ वा अरिभयेति च्छेदः अरुर्व्रणम् । प्लोषणं दाहः । भजतेश्वरं कथि-ताशुभफलनिवृत्यर्थं स्वेष्टदेवतां भजेत । आत्मनः स्थानं विसृज्य पलायनमित्यन्वयः ।

विज्ञेयं खलु भूतपञ्चकफलं
नाड्योः समं चोभयोः
श्वासः संहतदीर्घ इष्ट उदितः
शीर्यच्छिखो नेष्टदः ॥ ३७ ॥

भूमौ निखातमवनेरुदये जलेपां
वातस्य धूमवति खस्य तथोर्ध्वदेशे ।
भूपृष्ठगं हुतभुजः खलु वस्तु नष्टं
ब्रूयात् कृतेह यदि नष्टपदार्थपृच्छा ॥ ३८ ॥

भागे यत्र मरुत्स्थितिः पुनरिह
क्षोण्या जले वा यदा
भागे तत्र तदेक्ष्यते यदि पुमान्
ज्योतिर्विदा कश्चन ।
दीर्घायुर्गुणवत्कळत्रतनयः
पुष्यद्धनश्चाधिकं
विज्ञेयः स तथा स्त्रियोपि विपरी-
तेतः फलं चान्यथा ॥ ३९ ॥

पलायनानन्तरं दन्त्यश्वाद्यधिरोहणं बोध्यम् । मन्त्रादेरादिशब्देन यन्त्रादसंग्रहः । असकृत् न त्वेकवारम् । दीक्षा व्रतादिदीक्षाबन्धः । नाड्योः समं चोभयोरिति नात्र नाडीविशेषचिन्तावश्यकी । श्वासः संहतेत्यादिना श्वासस्वरूपभेदेन फलविशेषो विधयिते । शीर्यच्छिखः शीर्णाग्रः ॥ ३६, ३७ ॥

**भूमावित्ि ॥** एतन्नष्टप्रश्नविषयमपि प्रसङ्गादत्रोक्तम् । नष्टं वस्तु भूमौ निखातं ब्रूयादित्यादिर्योजना । धूमवति देशे ॥ ३८ ॥

**भाग इति ॥** फलजिज्ञासोः कस्यचिद्दर्शने श्वासपरीक्षया वक्तव्यं फलमनेन पद्येन प्रदर्श्यते । कश्चन पृच्छन्नपृच्छन् वा जिज्ञासुः । गुणवन्तः कळत्रतनया यस्य सः । स्त्रियोपि नात्र लिङ्गविशेषविचारापेक्षेति भावः । स्त्रीपक्षे कळत्रस्थाने स्वभर्तृपदं योज्यमित्येतावानेव विशेषः । अन्यथा दारिद्र्यकळत्रपुत्रनाशदेहारिष्टादिकम् । विपरीते वायुस्थितीतरभागे जिज्ञासुदर्शने वायोरग्न्यादिभूतसञ्चारे च ॥ ३९ ॥

अत्र शास्त्रान्तरमपि लिख्यते ।

इडा वामा भवेन्नाडी सोमस्यार्कस्य दक्षिणा ।
पिङ्गलाख्या सुषुम्नाख्या मध्यमाग्नेरुदीरिता ॥ ४० ॥

निर्गमे तु शुभदा भवेदिडा
पिङ्गला तु शुभदा प्रवेशने ।
योगसाधनविधौ तु मध्यमा
शस्यते न तु परेषु कर्मसु ॥ ४१ ॥

देवे दक्षिणभागगेथ पुरुषो
रोगातुरो दक्षिणे
स्थित्वा पृच्छति पृच्छकेथ पुरुषो
जीवत्यरोगश्चिरम् ।
वामायां तु रुजाकुलीकृततनौ
वामाश्रिते चेश्वरे
वामे पृच्छति चेद्दृढं गतगदा
वामा चिरं जीवति ॥ ४२ ॥

**अत्रेति** ॥ अत्र श्वासपरीक्षणेन फलकथनविषये ।

**इडेति** ॥ इडा तत्संज्ञा । नाडी नासारन्ध्रम् । सोमस्य सोमदेवताकेत्यर्थः । एवमुत्तरत्रापि । मध्यमेति रन्ध्रद्वयेन निर्विशेषं निर्गमे तत्त्वम् । योगशास्त्रेप्युक्ता एता देवताः संज्ञाश्च । एतन्नाडीत्रयमेव तस्येडादिगतिरित्यत्रापि संसूचितमिति बोध्यम् ॥ ४० ॥

**निर्गम इति** ॥ वामनानासारन्ध्रेण श्वासनिर्गमसमये स्वगृहात् प्रस्थाय दक्षिणनासारन्ध्रेण श्वासनिर्गमसमये राजगृहादिकं गन्तव्यस्थलं प्रविशतः सर्वाभीष्टसिद्धिः स्यादिति संक्षेपः । सुषुम्नया श्वासनिर्गमयोगाभ्याससाधनं विना नान्यत् किमपि कर्तव्यमिति च ॥४१॥

**देव इति** ॥ देवेश्वरशब्दावत्र वायुपरौ । श्वाससञ्चारस्य दूनस्थितेश्चैकभागस्थत्वं रोगिणः पुंस्त्वे तस्य दक्षिणत्वं स्त्रीत्वे वामत्वं च यदि तर्हि दृढमारोग्यप्राप्तिर्दीर्घायुष्ट्वं च वाच्यमित्यर्थः । वामायां स्त्रियाम् ॥ ४२ ॥

देवे गते पृच्छति वामभागे
　　स्थितो नरो दक्षिणतो यदि स्यात् ।
व्यत्यासतोऽस्मादपि कृच्छ्रसाध्यं
　　वदन्ति सन्तः खलु रोगजातम् ॥ ४३ ॥

अन्तर्गते पृच्छति पृच्छकश्चे-
　　द्देवे नरो जीवति वीतरोगः ।
तेनैव मार्गेण बहिर्गतश्चेत्
　　परेतराजस्य पुरीं प्रयाति ॥ ४४ ॥

वामे वा दक्षिणे भागे प्रश्नश्चेद्वायुसंयुते ।
जीवेन्नरश्च नारी च तथानुष्ठानपद्धतिः ॥ ४५ ॥

लयलिङ्गश्रवणेक्षास्मरणाभावे तु दूतमारुतयोः ।
एकादिशावस्थाने जीवति रोगी विपर्यये म्रियते ॥ ४६ ॥

---

**देव इति** ॥ पृच्छकस्थितिश्वासस्थितिभागयोर्भिन्नत्वे रोगस्य कृच्छ्रसाध्यत्वं वाच्यमित्यर्थः ॥ ४३ ॥

**अन्तरिति** ॥ उच्छ्वासनिश्वासरूपेण द्विविधो हि श्वासः । तत्रोच्छ्वासेन वायोरन्तर्गमनं निश्वासेन बहिर्गमनं च भवति । तत्रोच्छ्वासेनान्तर्गते वायौ पृच्छति चेद्रोगी प्राप्तारोग्यो जीवेदिति पूर्वार्द्धार्थः । निश्वासेन बहिर्गते वायौ पृच्छा मरणप्रदेत्युत्तरार्द्धार्थः । बहिर्गत इत्यस्य विशेषणतया देव इति प्रयातीत्यस्य कर्तृतया रोगीति च कल्पनीयम् । पृच्छको येन मार्गेण दैवज्ञसन्निधिमायातस्तेनैव मार्गेण ततो गतश्चेद्रोगी म्रियेतेति केचिदर्थं वर्णयन्ति । तदपि चिन्त्यमेव ॥ ४४ ॥

**वाम इति** ॥ दूतश्वासयोरेकभागावस्थायित्वमेव जीवनस्य मुख्यं लक्षणमिति भावः ॥

**लयेति** ॥ लयलिङ्गानि नाशचिह्नानि । तेषां श्रवणेक्षास्मरणानि तेषामभावे । विपर्यये लयलिङ्गश्रवणेक्षास्मरणसद्भावे दूतमारुतयोर्भिन्नदिशावस्थाने च । यद्वा लयलिङ्गश्रवणाद्यभावेपि दूतमारुतयोर्भिन्नदिशावस्थाने । अस्यैव प्राधान्यमित्यर्थः । अत एव पूर्वश्लोकोक्तार्थसंवादो घटते । अनुष्ठानपद्धतिस्थमिदं पद्यम् ॥ ४६ ॥

अग्रे वामेपि च यदुपरि स्थायिना पृच्छ्यमानं
शुक्ले पक्षे तदिह सकलं लभ्यते चन्द्रचारात् ।
पृष्ठेधस्तान्नियतमसिते दक्षिणे सूर्यचारा-
दात्मावस्थासदृशमखिलं पृच्छकस्यापि वाच्यम् ॥ ४७ ॥
स्नानभोजननिद्रादिनिजकर्मसु यादृशः ।
आत्मनोनुभवस्तेषु तादृशः प्रष्टुरुच्यताम् ॥ ४८ ॥
यत्रकुत्र स्थितः पृष्ट्वा पुनर्दूतः समारुते ।
स्थिरस्तिष्ठति चेद्रोगी जीवत्येव न संशयः ॥ ४९ ॥
ऐन्द्र्याद्यास्तु दिशो ज्ञेयाः पृथिव्याद्युदयैः क्रमात् ।
आकाशोदयतो मध्यं नष्टं तत्रैव वा स्थितम् ॥ ५० ॥

---

**अग्र इति** ॥ स्थायिनेति प्रष्टा इत्यस्याध्याहार्यस्य विशेषणम् । चन्द्रचारात् श्वासस्य वामनाडीसञ्चारात् । स्थायिनेत्युत्तरार्द्धेपि योज्यम् । नियतं निश्चितम् । सूर्यचारात् श्वासस्य दक्षिणनाडीसञ्चारात् । चतुर्थपादस्तु श्वासानन्तरनिर्दिष्टदशानिरूपणविषयकः । आत्मनो दैवज्ञस्य या अवस्थाः सुखदुःखादिरूपास्तत्सदृशं तदनुरूपम् । एतदेवोत्तरश्लोकेन प्रकटयति ॥ ४७ ॥

**स्नानेति** ॥ तादृशः तत्तुल्योनुभवः । दशानिरूपणमेवं सपादैकश्लोकेन श्वासनिरूपणमध्य एव लाघवाद्विधाय प्रक्रान्तचरं श्वासशुभाशुभनिरूपणमेवोत्तरश्लोकेन क्रियते ॥ ४८ ॥

**यत्रेति** ॥ यत्र कुत्र वामे वा दक्षिणे वा । समारुते वा अमारुते वा । पुनः प्रश्नानन्तरमेव । स्थिरः अचञ्चलः ॥ ४९ ॥

**ऐन्द्र्याद्या इति** ॥ मध्यं ज्ञेयमित्यनुषज्यते । स्थितमिति ज्ञेयमिति च श्वसस्य पृथिवीभूतसञ्चारे नष्टं वस्तु पृच्छकगृहात् पूर्वादिग्भागे तिष्ठतीत्यादिक्रमेण वाच्यातित्यर्थः । तत्र यत्र पूर्वं स्थितं तत्रैव । न तु नष्टमित्येव निष्कर्षः । नष्टप्रश्नविषयमेवैतत् । "भूमौ निखातमवने" इत्यादि श्लोकोक्तमिदं वा ग्राह्यमित्याशङ्का यद्यप्यत्र सावकाशा तथापि तत्र दिग्विभागो नोक्तः अत्र तु स एवोक्त इति नानयोः परस्परविरोधः । अथवेदं प्रकारान्तरमस्तु । तेन का नाम क्षतिः । ज्योतिश्शास्त्रे फलादेशविषये सर्वत्रानेके विकल्पा युज्यन्त एव । "द्वित्रिसंवादत स्पष्टं" इति वक्ष्यति च । किञ्च सर्वेष्वपि शास्त्रेषु विधिविषये विकल्पा-

शुभवारे शुक्लपक्षे सिद्धिदा वामनाडिका ।
पापवारे कृष्णपक्षे नाड्यन्या सिद्धिदाधिकम् ॥ ५१ ॥
गृहाच्चन्द्रेण निर्यातः प्रविष्टो भानुना रणे ।
शून्याङ्के वैरिणं कृत्वा कातरोपि जयी भवेत् ॥ ५२ ॥
निष्क्रान्तो भानुना गेहात् प्रविष्टः शशिना रणे ।
जीवांशे यस्य वा शत्रुः स शूरोपि विनश्यति ॥ ५३ ॥
दस्यवः शत्रवो भूपाः कितवा व्यवहारिणः ।
एते शून्यगताः सौम्याः पूर्णस्था भयदाः स्मृताः ॥ ५४ ॥
विवादे द्यूतयुद्धे च स्नानभोजनमैथुने ।
व्यवहारे भये भङ्गे भानुनाडी प्रशस्यते ॥ ५५ ॥
यात्रादानविवाहेषु वस्त्रालङ्कारभूषणे ।
शुभे सन्धौ प्रवेशे च वामनाडी प्रशस्यते ॥ ५६ ॥

नेकत्वं दृश्यते । इदं वेदविधिष्वप्यनुगतमेव । वेदाङ्गे ज्योतिश्शास्त्रे पुनः को बाधः । विशिष्यादेशविषये । इत्यलम् ॥ ५० ॥

**शुभवार इति** ॥ उक्तस्यैव प्रपञ्चोयम् ॥ ५१ ॥

**गृहादिति** ॥ रणे युद्धभूमौ । "निर्गमे तु शुभदा भवेदिडा" इत्युक्तमेवानेनानूद्यते । युद्धविषयेपि तदुपयोक्तव्यमिति । शून्याङ्के वैरिणं कृत्वेति तु विधिः । शून्यो वायुविरहितः । अङ्कशब्दो भागपरः ॥ ५२ ॥

**निष्क्रान्त इति** ॥ पूर्वश्लोकोक्तार्थप्रतिद्वन्द्वितयेदमनुक्तिसिद्धमपि दृढीकरणहेतुकमन्वयव्यतिरेकोभयप्रदर्शनमिति न्यायमनुसृत्योक्तमिति बोध्यम् ॥ ५३ ॥

**दस्यव इति** ॥ दस्यवश्चोरादयः । कितवा द्यूतकराः । व्यवहारिणो वाग्विवादप्रवर्तकाः । सौम्याः उपद्रवकरणासमर्थाः । सर्वानेतान् वायुशून्यभागे सर्वदा स्थापयेत् । स्वयं तु वायुपूर्णभागे तिष्ठेत् । एवं च सर्वत्रापि कार्ये विजयो नायाससाध्य इति रहस्यम् ॥

**विवाद इति** ॥ भानुनाडी दक्षिणभागवायुसञ्चारकालः । द्यूतयुद्धे स्नानभोजने इत्युभौ समाहारद्वन्द्वसमासौ ॥ ५५ ॥

**यात्रेति** ॥ वामनाडी वायोस्तत्सञ्चारकालः । पिङ्गला तु शुभदा प्रवेशने इति पूर्वग्रन्थः । प्रवेशे वामनाडी प्रशस्यत इति प्रकृतग्रन्थश्च परस्परविरुद्धावित्याक्षेपोत्र सावकाशः ।

गर्भिणीदर्शने वायुर्दक्षिणे चेत् पुमान् वधूः ।
गर्भस्था वामभागे चेद्द्वयोर्नो चेदसत्प्रजा ॥ ५७ ॥
गर्भे मे किमिति प्रश्ने सवायौ गर्भिणी यदि ।
पुमान् स्त्री वीरणे भागे युग्मं वायुर्द्वयोर्यदि ॥ ५८ ॥
निर्गत्य शशिना गेहात् प्राप्यं प्राप्तस्य भानुना ।
कार्यस्य दुर्लभस्यापि लाभः स्यादप्रयत्नतः ॥ ५९ ॥
रिपोरागमनप्रश्ने वामगे मातरिश्वनि ।
नागमोनुक्तसिद्धैव तदागतिरतोन्यथा ॥ ६० ॥
अङ्कयुद्धे ममैतस्मिन् जयो वा किं पराजयः ।
प्रश्नोयं पूर्णभागे चेज्जयोन्यत्र पराजयः ॥ ६१ ॥

---

तत्र विषयविभागेन समाधानं युज्यते । युद्धविवादादि तीक्ष्णकार्यार्थे यत्रकुत्रचित् प्रवेशे साधारणतया प्रवेशे च पिङ्गलैव शुभदा । दानविवाहादिमङ्गळकार्यकरणार्थे यत्रकुत्रापि प्रवेशे तु इडा नाड्येव शोभना । इति । यद्वा यात्रादिविषयके प्रवेशे इत्येवात्र व्याख्येयम् । एवं चकारो भिन्नक्रमः सन्धौ च प्रवेशे इत्यन्वयः । शुभे सन्धाविति सामानाधिकरण्येन वैयधिकरण्येनाप्यन्वयमिच्छन्ति तत्ववेदिनः । तत्र वैयधिकरण्येनान्वये तु शुभे उक्तशुभकर्मव्यतिरिक्ते इत्यर्थः । एवं च केषाञ्चन शुभकर्मणां विशिष्योपादानमतिशयबोधनार्थम् । वस्त्रालङ्कारभूषणमिति षष्ठीतत्पुरुषपूर्वपदसमाहारद्वन्द्वः । वस्त्रस्यालङ्कार इत्युक्तिस्तु वस्त्ररामणीयकातिरेकबोधनार्थम् । एवं च युद्धविवादादिक्रूरकर्मबद्धकच्छानां तदुचितवसनपरिधानावसरे चन्द्रनाडी न शुभदा । किन्तु पिङ्गलैव । अत एवालङ्कारभूषणयोः पार्थक्येनोक्तिरपि न दुष्टेति समाधेयमित्यास्तां विस्तरः ॥ ५३ ॥

**गर्भिणीति** ॥ दर्शन इति पृच्छामन्तरेणापि जिज्ञासासत्त्वबोधने कथनीयमिति गम्यते । वामभागे चेद्गर्भस्था वधूरित्यन्वयः । असत्प्रजा निर्जीवापत्यम् ॥ ५७ ॥

**गर्भ इति** ॥ वीरणे श्वासवर्जिते । द्वयोर्यदि द्वयोरपि नासिकयोस्सममनल्पतया निर्गमे । अल्पत्व एव सुषुम्ना ॥ ५८ ॥

**निर्गत्येति** ॥ शशिभानुशब्दौ वामदक्षिणनाडीवायुसञ्चारलक्षकाविति बोध्यम् ॥

**रिपोरिति** ॥ अन्यथा दक्षिणगे । अनुक्तसिद्धा परिशेषन्यायादिति भावः ॥ ६० ॥

**अङ्केति** ॥ वैरं विना परीक्षाविनोदाद्यर्थं क्रियमाणं युद्धमङ्कयुद्धम् । पूर्णभागे वायुसञ्चारभागे ॥ ६१ ॥

सन्नहनं निर्गमनं खळूरिकारोहणं च शुभमिडया ।
पिङ्गलया पुनरितरं प्रहरति यदि वामगं जयो नियतम् ॥६२॥

इडयाप्यारूढवतः
खळूरिकामेनयैव पुनरपि चेत् ।
चरति मरुन्नैव जयः
प्राग्वोदक्स्थीयतां तदा तस्याम् ॥ ६३ ॥

वायोराकाशसञ्चारो गर्भस्थमृतिसूचकः ।
पृष्ट्वा सवायावन्यत्र स्थितौ चासत्प्रजां वदेत् ॥ ६४ ॥

एतत् श्वासावस्थाविषयम् ॥

प्रष्टा वक्षोदेशे
स्पृशेद्यदि क्षिप्रमीप्सितं लभते ।
मङ्गलवस्तुनि च तथा
विपरीतं फलममङ्गलस्पर्शे ॥ ६५ ॥

---

**सन्नहनमिति** ॥ इडापिङ्गलाशब्दौ कालविशेषबोधकौ । खळूरिका केळियुद्धरङ्गस्थलम् । इतरं प्रतिद्वन्द्विनम् ॥ ६२ ॥

**इडयेति** ॥ एनया इडया । अन्वादेशे एनादेशः । तस्यां खळूरिकायाम् । प्राक् पूर्वभागे उदक् उत्तरभागे वा स्थीयताम् । जिगीषुणेत्यर्थात् । एवं जयः स्यादिति भावः ॥ ६३ ॥

**वायोरिति** ॥ एतदपि गर्भप्रश्नविषयम् । पृष्ट्वा पृच्छानन्तरमेवेत्यर्थः । अन्यत्र वायुरहितभागे । असत्प्रजां मृतप्रजामित्यर्थः ॥ ६४ ॥

**एतदिति** ॥ दैवज्ञेन समाहितेनेति श्लोकनिर्दिष्टेषु समयादिषु स्ववायुर्दशा इति प्रदर्शितयोः श्वासावस्थयोरुभयोरपि निरूपणमेवं परिपूर्णमिति इतोनन्तर निर्देशक्रमेण पृच्छकस्पर्शनस्य शुभाशुभत्वं निरूप्यत इति च भावः । अवस्थाविषयं वक्तव्यांशस्य परिमिततरत्वात् श्वासनिरूपणे तदन्तर्भावः ॥

**प्रष्टेति** ॥ एतदादयश्चतुर्दशश्लोकाः स्पर्शलक्षणविषयाः । मङ्गलवस्तूनि दर्पणादीनि । अमङ्गलानि मार्जन्यादीनि ॥ ६५ ॥

संस्पृशन्नाभिनासास्यकेशरोमनखद्विजान् ।
गुह्यपृष्ठस्तनग्रीवाजठरानामिकांगुलीः ॥ ६५ ॥

रन्ध्राणामपि नवकं
करपदयोस्तलं च सर्वपर्वाणि ।
भ्रष्टा लभतेनिष्टं
निम्नस्पर्शे तथैव विज्ञेयम् ॥ ६६ ॥

प्रागादिदिक्षु मूर्द्धादिष्वङ्गेष्वष्टसु च स्थिताः ।
ध्वजाद्यास्तात्स्थतिस्पर्शफलमप्यथ कथ्यते ॥ ६७ ॥

ध्वजो धूमश्च सिंहश्च सारमेयो वृषः खरः ।
दन्ती काकः क्रमादेते दिशास्वैन्द्र्यादिषु स्थिता ॥ ६८ ॥

मूर्ध्नि ध्वजो घ्राणपुटे तु धूम-
श्चास्ये हरिः श्रोत्रदृशोः श्वसंज्ञः ।
कण्ठे वृषः पाणियुगे खरश्च
गजश्च हृद्यंघ्रियुगेथ काकः ॥ ६९ ॥

**संस्पृशन्निति ॥** द्विजा दन्ताः । अनामिकांगुष्ठादारम्य चतुर्थी । पर्वाणि करादिसन्धयः । अत्र रन्ध्रनवकोपादाने आस्येति पृथगुपादानं किमर्थमिति चेदास्यशब्देन विवरातिरिक्तमुखग्रहः । यद्वा मुखविवरस्पर्शनस्य इतरद्वाराष्टकसंस्पर्शापेक्षया दोषाधिक्यमवगन्तव्यम् ॥ ६५, ६६ ॥

**प्रागिति ॥** ध्वजाद्याः वक्ष्यमाणा अष्टौ । दिशामङ्गानां चाष्टकं वक्ष्यते । तत्स्थितिस्पर्शफलं दिक्स्थितेरङ्गस्पर्शस्य च फलम् ॥ ६७ ॥

**ध्वज इति ॥** ऐन्द्र्यां ध्वजः आग्नेय्यां धूम इत्यादिक्रमेण विज्ञेयम् । एता एवाष्टौ योनयः शिल्पिशास्त्रप्रसिद्धा इत्यवगन्तव्यम् ॥ ६८ ॥

**मूर्ध्नीति ॥** दिक्षु योनीः कल्पयित्वानेन श्लोकेनाङ्गेषु योनीः कल्पयते । अत्र शिरश्शब्देन फालमपि विवक्ष्यते । नासाश्रोत्रभिन्नकपोलमुखादि आस्यम् । कण्ठाधोभागः पाणिपादवर्जः सर्वो हृदुपलक्षितः ॥ ६९ ॥

केतुस्थो ध्वजसिंहगो वृषगज-
स्थानानि देहे स्पृशन्
संप्राप्नोति नरः क्रमेण धनगो-
यानानि भूषामपि ।
सिंहस्थोऽपि च सिंहगो वृषकरि-
श्रेष्ठध्वजान् संस्पृश-
न्नायाति प्रतिपक्षनाशकमला-
सत्पुत्रबन्ध्वागमान् ॥ ७० ॥

गच्छेद्गोवृषसिन्धुरध्वजहरि-
स्पर्शेन तिष्ठन् वृषे
सद्योसौ वृषयानधातृदयिता-
मित्राप्तिमव्याहताम् ।
दन्तिस्थो गजकेतुसिंहवृषभ-
स्थानं स्पृशन् पाणिना
यायाद्दन्तिविभूषणोत्तमसुहृ-
त्सत्पुत्रलाभान् क्रमात् ॥ ७१ ॥

**केतुस्थ इति ॥** केतुस्थः पूर्वदिक्स्थ इति यावत् । ध्वजसिंहादीनि चत्वारि मूर्धा-स्यप्रभृतीन्यङ्गानि । धनलाभादिकानि चत्वारि फलानि । सिंहस्थः दक्षिणादिक्स्थः । सिंहादि-कान्यास्यादीनि चत्वार्यङ्गानि संस्पृशन् प्रतिपक्षनाशादिकं फलचतुष्टयं लभते ॥ ७० ॥

**गच्छेदिति ॥** वृषे पश्चिमदिशि । धातृदयाप्तिर्विद्यालाभः । दन्तिस्थ उत्तरदि-क्स्थः । एवं श्लोकद्वयेन चतुर्षु दिक्षु स्थित्वा दिग्योनिस्थानानि स्पृशतां शुभफलविशेषः प्रादर्शि । अनन्तरमुत्तरश्लोकद्वयेन विदिक्स्थानां विदिग्योनिस्थानस्पर्शे जायमाना अशुभफ-लविशेषाः प्रदर्श्यन्ते ॥ ७१ ॥

धूमस्थोऽपि च धूमकुक्कुरखर-
ध्वाङ्क्षप्रदेशान् स्पृशन्
मृत्युक्लेशभयव्रतक्षयकुटु-
म्बध्वंसमप्याप्नुयात् ।
श्वारूढः श्वखराभिधानवलिभु-
ग्धूमस्थलानि स्पृशन्
व्याधिं पुत्रविनाशमेति विपदं
वित्तक्षयं मानवः ॥ ७२ ॥
स्पृष्ट्वा गर्दभकाकधूमशुनकान्
मर्त्यः स्थितो गर्दभे
सद्यो याति विवादगोहतिमहा-
शस्त्रार्तिभार्यारुजः ।
काकस्थोऽपि च काकधूमभषक-
स्थानं स्पृशन् गर्दभं
बन्धनार्तिं द्विजभङ्गमेति च मृतिं
नीचात्तनूजापदम् ॥ ७३ ॥
ध्वजहरिवृषदन्तिस्थो
धूमश्वखराख्यवायसस्पर्शी ।
विपरीतो वा याति च
विपदं वा सम्पदं च नात्यन्तम् ॥ ७४ ॥

**धूमस्थ इति** ॥ धूमस्थः अग्निकोणस्थः । क्लेशेभ्यो भयं क्लेशभयम् । श्वारूढः निर्ऋतिकोणस्थः । गर्दभे वायुकोणे । गोहतिः पशुनाशम् । महाशस्त्रार्तिर्महती शस्त्रजानितपीडा । काकस्थः ईशानकोणस्थः । काकधूमभषकस्थानं गर्दभं च स्पृशन्नित्यन्वयः । द्विजभङ्गं दन्तनाशम् । नीचान्मृतिमित्यन्वयः । तनूजापदं पुत्रव्यापदम् ॥ ७२,७३ ॥

**ध्वजेति** ॥ पूर्वादिदिक्स्थानां विदिक्स्थानस्पर्शे अग्न्यादिकोणस्थानां दिक्स्थानस्पर्शे च नातीव शुभं नातीवाशुभं चेति भावः ॥ ७४ ॥

शास्त्रान्तरमपीहास्ति दूतदैवविदोर्दशा ।
यादृशी तादृशी वाच्या दशा व्याधिमतामपि ॥ ७५ ॥

एतत् स्पर्शविषयम् ।

पृच्छकाधिष्ठितं राशिं विज्ञायानेन पृच्छताम् ।
अनुभूतं हि वक्तव्यं किमपि प्रत्ययाप्तये ॥ ७६ ॥

अत्र सारसङ्ग्रहः ।

राहुर्वार्किः पृच्छकाधिष्ठितर्क्षे
यद्वा तस्मात् पञ्चमे वाष्टमे वा ।
चण्डालानां पंक्तिरग्रे प्रदृष्टा
शूद्रा दृष्टास्तत्र चेद्भूमिजज्ञौ ॥ ७७ ॥

---

**शास्त्रान्तरमिति** ॥ इह पृच्छाकाललक्षणकथनप्रघट्टके । इदं शास्त्रान्तरवचनं तु न स्पर्शफलानिरूपणान्तर्भूतम् । किं तु अवस्थानिरूपणान्तर्भूतम् । अवस्थानिरूपणं च श्वास निरूपणाभ्यन्तरे गतम् । एवं चावस्थानिरूपणविषयकोयं श्लोकोत्र कथं पठित इति यद्या-क्षिप्यते तर्हि सिंहावलोकनन्यायेनेति गृहाण । सिंहो हि स्वयं शयानः कण्ठं विभुज्य पश्चा-दवलोकयतीति निसर्गोयम् । सिंहसदृशा गम्भीराशयाः शास्त्रकारा अपि निर्देशक्रमानुसारिणो-र्थान् प्रतिपादयन्तः कदाचित्प्रतिपादितपूर्वं विषयं पुनरपि स्पृशन्तीत्येषामेतद्भूषणमेव । न तु कथमपि दूषणमित्यवगच्छ । यद्येतदपि न सह्यते तर्हि श्वासनिरूपणमध्यवर्तिदशानिरू-पणविषयकस्नानभोजनेत्यादिश्लोकाव्यवहितोत्तरश्लोकतयायमपि पठ्यताम् । नास्माकमत्राभि-निवेश इत्यलम् ॥ ७५ ॥

**एतदिति** । अत्र स्पर्शशब्दोवस्थाया अप्युपलक्षकः ।

**पृच्छकेति** ॥ उद्देशक्रमानुसारेण पृच्छकाश्रितराशिनिरूपणपरमिदम् । प्रत्ययो वि-श्वासः । तदाप्तये तल्लाभाय । वक्ष्यमाणफलेषु विश्वासार्थमित्यर्थः । अनुभूतं मार्गेण्यत्र च पृच्छकेन ॥ ७६ ॥

**अत्रेति** । अत्राश्रितराशिना लक्षणकथने ।

**राहुरिति** ॥ पंक्तिः समूहः । भूमिजज्ञौ भूमिजो वा ज्ञो वेत्यर्थः । गुरुशुक्रौ तदन्यतर इति यावत् । पापयुतौ दृष्टौ वा चेदिति वाशब्दाध्याहारेणान्वयः । दुर्भिक्षणन्तुषारिभिर-पिरपूर्णब्राह्मण्यैर्यज्ञसूत्रधारिभिः । चन्द्रसितौ तदन्यतरः । चन्द्रार्कजौ मिथः संयुतौ । सितः

लग्नसुताष्टमसंस्थौ
गुरुशुक्रौ चेद्द्विजादिभिर्योगः ।
पापयुतौ दृष्टौ चे-
द्दुर्ब्राह्मणतन्तुधारिभिर्योगः ॥ ७८ ॥

अर्कौ यद्येषु नृपै-
श्चन्द्रासितौ चेत्स्त्रिया योगः ।
चन्द्रार्कजौ स्थितौ चे-
द्दुष्टस्त्रीभिः सितः कुलस्त्रीभिः ॥ ७९ ॥

अशुभशुभदृष्टियोगा-
त्तज्जातीयैश्च योगमपि विद्यात् ।
दूतस्य चेष्टयातः
परं वदेल्लक्षणं दिशागतया ।' इति ॥ ८० ॥

अत्र माधवीयं च ।

अर्केऽष्टमे बहुजनैर्नृपसेनया वा
याते रवेरहनि नूनमुपद्रवोभूत् ।
जीवांशके नृपतिनेति वदेद्दिनांशा-
द्धात्वादिवस्तुविहतिश्च विचिन्त्य वाच्या ॥८१॥

---

केवलः पापसम्बन्धरहितः । केवलचन्द्रे दुष्टस्त्रीकुलस्त्रीरूपविशेषो नेत्यवगन्तव्यम् । एवं पापयुक्तशुक्रेपि । तज्जातीयैश्च दृष्टृयुक्तग्रहजातीयैस्स्वजातीयैश्चेत्यर्थः । आगतशब्दः कर्तृक्तान्तोप्युपचाराद्दिशा इत्यस्य विशेषणम् । उत्तरार्द्धोक्तलक्षणकथनं सारसङ्ग्रह स्यात् ॥८०॥

**अत्रेति** ॥ "अर्केऽष्टमे" इत्यारभ्य 'अप्येवमादिशे'दित्यन्तैस्सप्तदशभिः पद्यैः प्रश्नमाधवीयोक्तमुक्तम् ॥

**अर्क इति** ॥ जीवांशके अष्टमस्थस्सूर्यो जीवसंज्ञांशकस्थश्चेदित्यर्थः नृपतिना राज्ञैव धात्वादिवस्तुविहतिः अष्टमस्थस्सूर्यो धात्वंशस्थश्चेद्धातुद्रव्यनाशः मूलांशस्थश्चेत् मूलद्रव्यनाशः जीवांशस्थश्चेत् जीवद्रव्यनाशः याते आतनातीते इदं सर्वत्र योज्यम् ॥ ८१ ॥

अष्टमस्थे निशानाथे
 प्रष्टुर्वाच्यमभोजनम् ।
यवागूपानमात्रं वा
 गते चन्द्रस्य वासरे ॥ ८२ ॥

आरेष्टमे पदभ्रंशो
 मान्दियुक्तस्स चेत् क्षतिः ।
धात्वंशेसृजि शस्त्रेण
 मूलांशे कण्टकादिना ॥ ८३ ॥

वाच्या जीवांशके दन्त-
 नखाद्यैरंशकोदितैः ।
सरीसृपांशे तद्दंशो
 वारस्य गतवासरे ॥ ८४ ॥

अष्टमस्थे विधोः पुत्रे भङ्ग इष्टस्य कर्मणः ।
मूलांशे पूगतांबूलनाशो भावोथत्रानयोः ॥ ८५ ॥

धात्वंशे वपुषः सादो वाच्यो जीवांशके पुनः ।
पारुष्यं वचसश्चूर्णाभावो वा गतविद्दिने ॥ ८६ ॥

**अष्टमस्थ इति** ॥ चन्द्रस्य प्राबल्ये यवागूपानं दौर्बल्ये अभोजनमिति विवेकः ॥

**आरेष्टम इति** ॥ पदभ्रंशः पदात् स्थानात् भ्रंशो विच्युतिः। पदेन पादस्खलनेन भ्रंशो-धःपतनं वा । स आरः । क्षतिर्व्रणम् । धात्वंश इत्यादि पादचतुष्टयेन व्रणहेतुविशेषोक्तिः । वृश्चिकमीनकुळीरास्सरीसृपराशयः । तद्दंशः सर्पवृश्चिकादिदंशनम् । वा आरस्येति छेदः ॥

**अष्टमस्थ इति** ॥ भङ्गः प्रत्यूहेन प्रतिबन्धः । अनयोः पूगतांबूलयोरभावः । पुनस्त्वर्थे । वचसः पारुष्यं परुषवाक्योच्चारणावकाशः । चूर्णं तांबूलचर्वणापयोगः । ८५,८६॥

रन्ध्रस्थितेऽमराचार्ये नित्यकर्मविळम्बनम् ।
द्विजानां द्रव्यनाशो वा वाच्यं गुरुदिने गते ॥ ८७ ॥

भृगुपुत्रेऽष्टमं प्राप्ते वियोगः प्रिययोषिता ।
वक्तव्यो वस्त्रनाशश्च तत्र धात्वंशगे भृगौ ॥ ८८ ॥

वसने पङ्कसम्पर्को जीवांशेऽस्य नखक्षतिः ।
पिपीलिकाखुवम्राद्यैः क्षतिरंशे सरीसृपे ॥ ८९ ॥

कण्टकाद्यैस्तु मूलांशे यद्वा जीवांशगे पुनः ।
अन्यस्मै वस्त्रदानं वा गतासन्ने भृगोर्दिने ॥ ९० ॥

अष्टमस्थे रवेः पुत्रे वाच्यं भुक्तिविळम्बनम् ।
अत्यापत्तिश्च मन्दस्य समीपस्थे गतेऽह्नि ॥ ९१ ॥

रन्ध्रगे सिंहिकासूनौ वाच्या पादव्यथा पथि ।
मूलांशे कण्टकेनैषा धात्वंशेऽश्माभिघाततः ॥ ९२ ॥

जीवांशे साध्वसं सर्पात् गते मन्दस्य वासरे ।
केतौ रन्ध्रस्थिते वाच्यं पादे पाषाणघट्टनम् ॥ ९३ ॥

मान्दियुक्तोत्र केतुश्चेत्पादो नूनमभिघत ।
भौमसाम्यात्फले केतोर्गते भौमस्य वासरे ॥ ९४ ॥

---

**रन्ध्रेति** ॥ नित्यकर्म सन्ध्यावन्दनादिकम् । द्विजानां त्रैवर्णिकानाम् । द्रव्यनाशः सर्ववर्णसाधारणः । द्विजानामिति पूर्वान्वयी ॥ ८७ ॥

**भृगुपुत्र इति** ॥ पङ्कसम्पर्कः तावन्मात्रं न तु नाशः । क्षतिर्वस्त्रभङ्गः । अत्र सरीसृपराशिषु धातुमूलजीवराशित्वमपि स्यादिति तदंशस्थे वक्तव्यं लक्षणं किमित्यत्र केचित् सरीसृपांशस्थितिलक्षणमपवादो धात्वाद्यंशस्थितिलक्षणमुत्सर्गं बाधेतेति वदन्ति । तदन्ये न सहन्ते । फलद्वयस्य यौगपद्ये बाधाभावात् उभयोरपि वक्तव्यत्वात् उभयोर्विकल्पाश्रयस्य न्याय्यत्वाच्च । अत्रान्तिम एव पक्षः श्रेयान् ॥ ८८, ८९, ९० ॥

**अष्टमस्थ इति** ॥ मूलांशेत्यादिश्लोकेन व्यथाहेतुविशेषो निरूप्यते । मन्दस्य वासरे। राहोः फले मन्दसाम्यात् । अभिघत व्रणितोभूत् । नूनमिति निश्चये ॥ ९१—९४ ॥

पापस्तृतीयसंस्थश्चेद्रूक्षव्यं स्यादुपोषणम् ।
गते तु तत्तद्दिवसे सुविचार्यैवमादिशेत् ॥ ९५ ॥
व्ययः षष्ठस्तृतीयं च भावा नेष्टा यथाष्टमः ।
दिनेष्वनिष्टसंस्थानां यातेष्वशुभदं वदेत् ॥ ९६ ॥
इष्टस्थितानां वारेषु शुभप्राप्तिं च निर्दिशेत् ।
उदयेनैष्यवारेषु फलमप्येवमादिशेत् ॥ इति ॥ ९७ ॥

प्रश्नभाषा च ।

द्यूनस्थेष्वशुभेषु दुष्टशकुनं
सौम्येषु तच्छोभनं
दूतारूढवशादमुष्य कथयेत्
प्रश्नाधिरूढेन वा ।
कर्मारूढसुखस्थितैर्बलयुतै-
रप्येवमादिश्यतां
यातुर्वा शकुनं शुभाशुभमिति
प्रस्थानलग्नाद्वदेत् ॥ ९८ ॥

---

**पाप इति** ॥ उपोषणमुपवासः । तत्तद्दिवसे तृतीयस्थपापवारे । सुविचार्य बलाबलविचारोपि कर्तव्य इत्यर्थः ॥ ९५ ॥

**व्यय इति** ॥ अत्राधिकगुणमुपमानामिति न्यायेन व्यय इत्यादिक्रमस्य विवक्षितत्वकल्पनया च अष्टमव्ययषष्ठतृतीयानां यथापूर्वमनिष्टत्वाधिक्यं बोध्यम् । अत एवाष्टमस्थानां फलनिरूपणमादौ विस्तरतः प्रोक्तम् । न्याये गुणशब्दो न दोषप्रतिपक्षवाची । किं तु प्रतिपिपादयिषितधर्ममात्रवाची । अत्र त्वनिष्टत्वं गुणः । अशुभदं अशुभमनिष्टफलं ददातीति तादृशं यंकंचन सम्भवमित्यर्थः ॥ ९६ ॥

**इष्टेति** ॥ उदयेन पृच्छाकालोदयलग्नेन । एष्यवारेषु आसन्नभाविवारेषु । एवं गतवारोक्तवदेव ॥ ९७ ॥

**प्रश्नेति** ॥ पद्यत्रयेण प्रदर्श्यत इति शेषः ॥

**द्यूनस्थेष्विति** ॥ तच्छकुनम् । प्रश्नाधिरूढेन "स्वर्णेन यं राशिं स्पृशेदारूढ एव सः" इत्युक्तेन । अमुष्य दुष्टशकुनं कथयेत् । अमुष्य दूतस्य । प्रस्थानलग्नात् यस्यकस्यापि

तत्रस्थे चतुरंघ्रिसंज्ञविहगे
मातङ्गपश्वादयो-
भ्यायाताः पथि पक्षिसंज्ञखचरे
दृष्टाश्वकोरादयः ।
सूर्यारौ तु चतुष्पदौ निगदितौ
मन्देन्दुजौ पक्षिणौ
शीतांशुस्तु सरीसृपोष्टचरणः
शास्त्रे प्रदिष्टः फणी ॥ ९९ ॥

चण्डालाभ्यागमो यद्यहिशिखिगुळिक-
ब्रध्नजास्तत्र संस्थाः
शुक्रेन्दू चेद्द्यूनां यदि शशितनय-
स्तत्र विद्वज्जनानाम् ।
विप्राणां वाक्पतिश्चेद्यदि धरणिसुतः
शस्त्रिणां कीर्तनीयो
वर्त्मन्यभ्यागमः प्राग्यदि पुनररुणः
श्रेष्ठ्यभाजां जनानाम् ॥ इति ॥ १०० ॥

एतदाश्रितर्क्षविषयम् ।

पृच्छकस्य दिशि स्थानं विशेषाच्छुभदं नृणाम् ।
पृच्छकस्य स्थितिः कोणे प्रश्ने स्त्रीविषये शुभा ॥ १०१॥

---

यात्रालग्नात्केन्द्रस्थैः यातुः शकुनं वदेत् । तत्रस्थे द्यूनादिस्थे आदिशब्देनेतरेषां चतुरंघ्रीणां ग्रहणम् । सूर्याराविल्यर्धेन ग्रहाणां चतुष्पदादिभेदोऽभ्यधायि । तत्र सरीसृपाष्टचरणयोः फलविशेषो यद्यपि नोक्तः । तथापि चन्द्रेण सर्पादिदर्शनं राहुणाष्टचरणादिदर्शनं च समानन्यायेन सिध्यति । अवशिष्टयोर्गुरुशुक्रयोस्तु द्विपात्त्वं परिशेषन्यायादवगन्तव्यम् । प्राङ्निर्गमनानन्तरं प्रथमतः । अरुणः सूर्यः । श्रैष्ठ्यं स्थानधनविद्यादिभिर्ग्राह्यम् ॥ ९८–१०० ॥

**एतदिति** ॥ 'पृच्छकाधिष्ठित'मित्यारभ्यैतावत्पर्यन्तमुक्तमित्यर्थः ॥

**पृच्छकस्येति** ॥ नृणां पुरुषाणाम् । कोणे विदिशि । यमदिशि दक्षिणदिशि ॥

दक्षिणाशाभिमुख्यं च प्रष्टुर्यमदिशि स्थितिः ।
अशुभाय भवेन्नूनमायुःप्रश्ने विशेषतः ॥ १०२ ॥

एतद्दिग्विषयम् ।

आकाशवायुवह्न्यर्णपूर्वं तद्वर्णपूर्वकम् ।
भूतार्थवाचकश्चापि वचनं न शुभप्रदम् ॥ १०३ ॥

अत्र प्रश्नसङ्ग्रहः ।

आद्यैस्स्वरैस्तु काद्यैश्च वर्गैर्भिन्ना लिपिर्द्विधा ।
स्वरा जीवस्तनुर्वर्गा इति ज्ञेया च मातृका ॥ १०४ ॥
प्रश्नवाक्यं स्वराद्यं चेज्ज्ञेयं जीवगतं शुभम् ।
दोषश्च देहविषयो हलाद्यं चेदतोन्यथा ॥ १०५ ॥
वर्गेष्वक्षरपञ्चकं पवनवह्नीन्द्रांबुनापुंसकं
वाक्यादौ तु नपुंसकाक्षरमतीवानिष्टदं पृच्छताम् ।
दुष्टौ मारुतपावकौ वलारिपुर्मध्यः प्रशस्तं जलं
दीर्घह्रस्वविभागतः स्वरगणाश्चाम्भोमहेन्द्रात्मकाः इति ॥

**एतदिति** ॥ एतच्छ्लोकद्वयम् ॥

**आकाशेति** ॥ अक्षराणां गणानां च आकाशादिपञ्चभूतत्वविभागो वक्ष्यते । ल-ळुळुल्लिटो भूतार्थाः ॥ १०३ ॥

**अत्रेति** ॥ प्रश्नसङ्ग्रहाख्यो ग्रन्थः प्रश्नमार्गप्रणेत्रैव प्रणीतः । अनन्तरश्लोकत्रयमेत-द्ग्रन्थस्थम् ॥

**आद्यैरिति** ॥ आद्यैः अकारप्रभृतिभिः । वर्गपदमन्तस्थोष्मणामप्युपलक्षकम् । हळ इति यावत् । स्वरैरज्भिः । मातृका अज्झलात्मिकाक्षरपंक्तिः । जीवगतं आयुर्विषयम् । देहविषयो दोषो रोगवृद्धिरोगदैर्घ्यादिः । प्रश्नवाक्यं हलाद्यं चेत् । अतः अन्यथा रोगदै-र्घ्यादिकं न अल्पायुष्ट्वादिदोषः स्यादित्यर्थः । वर्गेषु कचटतपवर्गेषु प्रत्येकं वर्णपञ्चकं क्रमेण वाय्वग्नीन्द्रजलनपुंसकसंज्ञम् । नापुंसकशब्दे प्रज्ञादित्वात्स्वार्थेऽण् । नपुंसकाक्षरं पञ्चस्वपि वर्गेषु पञ्चमम् । मारुतपावकौ प्रथमद्वितीयौ । मध्यः नातिशुभदो नातिदोषदश्च । स्वरेषु ह्रस्वा इन्द्रसंज्ञाः । दीर्घा जलसंज्ञाः ॥ १०४–१०६ ॥

अत्रानुष्ठानपद्धतिः ।

मध्यान्त्याद्यखिलेषु गाजसभमाः
सूर्यानिलेन्दुक्ष्मा
देवा स्फीतरुगन्यदेशगमन-
प्रख्यातकीर्तिश्रियः ।
तद्वत्स्युर्लघवो गुणा रतयना
वह्न्यम्बरांभोदिवो
मर्त्याः स्युर्मृतिशून्यतोत्तमसमृ-
ध्यायूंषि ते तन्वते ॥ इति ॥ ॥ १०७ ॥

श्रोत्रप्रियं वदति वा वचनं शुभं वा
यद्वार्थपुष्टगिरमस्खलितां तदानीम् ।
प्रष्टाभियात्यभिमतं त्वितरोनभीष्ट-
मन्ते विसर्गसहितं वचनं च वक्ता ॥ १०८ ॥

प्रष्टुर्वाक्यादिवर्णेन लग्नं संगृह्य चामुना ।
वाच्यं शुभाशुभं सर्वं तत्प्रकारेथ कथ्यते ॥ १०९ ॥

---

**मध्येति** ॥ त्रिभिरक्षरैरेको गणः । मध्यान्त्याद्यखिलेषु क्रमात् । गा गुरवः जसभमाः जगणसगणभगणमगणाः । मध्यगुरुर्जगण इत्यादि । देवाः गणानां देवताः ॥ स्फीतरुगादयः क्रमेण चतुर्णां फलानि । तद्वन्मध्यान्त्याद्यलिखिलेषु रतयना रगणतगणयगणनगणाः । मध्यलघू रगण इत्यादि । अमर्त्या देवताः । मृत्यादयः क्रमेण चतुर्णां फलानि । अक्षराणां गुरुलघुत्वविभागस्तु प्रसिद्ध इति न प्रतिपाद्यते ॥ १०७ ॥

**श्रोत्रप्रियमिति** ॥ श्रोत्रप्रियं श्रोतुः श्रवणमात्रेण सन्तोषप्रदम् । शुभं मङ्गलशब्दगर्भितम् । अस्खलितां मध्ये विरामं नेत्रसङ्कोचादिविकारं च विनोच्चारिताम् । अभिमतं अभियाति अभीष्टं लभते ॥ १०८ ॥

**प्रष्टुरिति** ॥ वाक्यादिवर्णेन पृच्छकमुखात्प्रथमनिर्गतेनाक्षरेण । अमुना लग्नेन । अत्र प्रकृतलग्नेन शुभाशुभकथनविषये । अवर्गः स्वरसामान्यम् । यवर्गोन्तस्थोष्मरूपः ॥ तस्मात् वर्णाल्लग्नं संगृह्य । प्रथमाक्षराधिपक्षेत्रं लग्नत्वेन परिकल्प्येत्यर्थः । कुजादीनां पञ्चा-

अत्रार्यासम्मतिः ।

अकचटतपया वर्गा
रविकुजसितसौम्यजीवसौराणाम्
चन्द्रस्य च निर्दिष्टं
प्रश्ने प्रथमोद्भवं वर्णम् ॥ ११० ॥

ज्ञात्वा तस्माल्लग्नं
संगृह्य शुभाशुभं वदेत्प्रष्टुः ।
वर्गादि मध्यचरमै-
र्वर्णैः प्रथमोद्भवैर्विषमम् ॥ १११ ॥

राशिं लग्नं प्रवदे-
च्छिष्टैर्युग्मं कुजज्ञजीवानाम् ।
सितरविजयोश्च नैवं
रविशशिनोरेकराशित्वात् ॥ ११२ ॥

तस्माल्लग्नात्प्रवदेत्
पृच्छासमये शुभाशुभं सर्वम् ।
कालस्याविज्ञाना-
देतच्चिन्त्यं बहु प्रश्ने ॥ ११३ ॥

एतत् प्रश्नाक्षरविषयम् ।

---

नां प्रत्येकं राशिद्वयाधीशत्वात्कादिषु पञ्चसु वर्गेषु प्रथमतृतीयपञ्चमैरोजाक्षरैरोजराशिर्द्वितीयचतुर्थाभ्यां युग्माक्षराभ्यां युग्मराशिश्च लग्नतया कल्प्य इति भावः । सूर्याचन्द्रमसोस्तु एकराश्यधिपत्वान्नायं विभाग आवश्यकः । कालस्य पृच्छकस्थितराशेरप्ययमुपलक्षकः । आविज्ञानात् दुर्ज्ञेयत्वात् । एतदक्षरलग्नेन शुभाशुभं बहु चिन्त्यम् । अवश्यं विचारणीयम् । यद्वा, बहुप्रश्न इत्येकं पदम् । बहूनां पृच्छकानां युगपत्पृच्छायामिति । बहून् जिज्ञासूनधिकृत्य एकस्यैव युगपत्पृच्छायामिति वार्थः ॥ १०९–११३ ॥

एतदिति ॥ एतत् आकाशेत्यारभ्यैतावदुक्तम् ॥

वामांघ्रिरग्रे निहितः शुभः स्या-
द्दूतस्य दोषाय च दक्षिणांघ्रिः ।
दोषाय चांघ्रेश्चलनं हि तस्य
स्थितिः स्थिरा तस्य शुभप्रदा स्यात् ॥ ११४ ॥

सुखोपविष्ट ऋज्वङ्गस्तुङ्गदेशे शुभासने ।
दैवज्ञाभिमुखश्चैव शुभं यात्यन्यथाऽशुभम् ॥ ११५ ॥

उत्तिष्ठति यदि प्रश्नं कुर्वन्नासीत आसनात् ।
स्थितश्चोपविशेत् कुर्वन् भद्रमेवोभयं मतम् ॥ ११६ ॥

प्रष्टा दृष्टिपथं प्राप्य स्थित्वा स्थित्वागमद्यदि ।
अतीत्य स्थितिसंख्याहान्यस्य कार्यस्य साधनम् ॥ ११७ ॥

अन्तरा दूतमात्मानं यदि कश्चन गच्छति ।
अनागमं सहायस्य कल्पितस्यास्य निर्दिशेत् ॥ ११८ ॥

एतत्स्थितिविषयम् ।

**वामांघ्रिरिति** ॥ अग्रे दक्षिणपादात् । दक्षिणांघ्रिः वामपादादग्रे निहितो दोषाय च स्यात् । तस्य अंघ्रेः ॥ ११४ ॥

**सुखेति** ॥ पृच्छकः कर्ता । तुङ्गदेशः उन्नतप्रदेशः पीठादिः । अन्यथा दुःखेनोपविष्ट इत्यादिरर्थः ॥ ११५ ॥

**उत्तिष्ठतीति** ॥ कुर्वन् वर्तमानार्थत्वं विवक्षितम । कुर्वन्नेवोत्तिष्ठति यदीत्यर्थः । कुर्वन् प्रश्नमिति शेषः ॥ ११६ ॥

**प्रष्टेति** ॥ दृष्टिपथं दैवज्ञस्य । आगमत् लङ्घयन् । अस्य प्रष्टृचिन्तितस्य । ११७ ॥

**अन्तरेति** ॥ दूतमात्मानमन्तरा पृच्छकदैवज्ञयोर्मध्ये । गच्छति पृच्छासमय इति शेषः । अनागममलाभम् । अस्य पृच्छकस्य ॥ ११८ ॥

**एतदिति** ॥ एतदुक्तश्लोकपञ्चकम् ॥

हस्तौ धून्वन् विमृद्नंश्च तिरश्चीनमुखः स्थितः ।
विस्मृतस्वार्थ इत्येतैर्यत्पृष्टं तद्विनश्यति ॥ ११९ ॥

स्वाङ्गेष्वन्यत्र वा द्रव्ये गाढसंताडनं क्षणात् ।
मृत्युदं लयलिङ्गानां चिन्तेक्षाश्रवणादिकम् ॥ १२० ॥

सुप्ते मुक्तकचे शुचौ रुदति वा
भग्नागमे मुण्डिते
नग्ने छिन्दति भिन्दति द्रवति वा
वह्नौ हविर्जुह्वति ।
दूते हस्तपदां च बन्धनपरे
दोष्णाक्षिसंमर्दने
दीने काष्ठतृणादिमर्दनपरे
न स्याद्विचारः शुभः ॥ १२१ ॥

पाशोद्वर्तनके नरे लिखति वा-
प्युत्सारिते वारिते
साभ्यङ्गे भसितास्थिसीसशकृतां
भर्तर्यपि व्याधिते ।

**हस्ताविति** ॥ धून्वन् चालयन् । विमृद्नन् हस्तावेव । तिरश्चीनं तिर्यग्गतं मुखं यस्य सः । विस्मृतः स्वार्थः प्रष्टव्यादिः येन स ॥ ११९ ॥

**स्वाङ्गेष्विति** ॥ क्षणान्मृत्युदमिति संबन्धः । लयलिङ्गानां नाशचिह्नानां सर्पदंशनकूपपतनगृहदाहादीनाम् ॥ १२० ॥

**सुप्त इति** ॥ सुप्ते प्राप्तनिन्द्रावेगे । सर्वथा सुप्तस्य प्रश्नासंभवात् । भग्नागमे येन केनापि हेतुना विहतायाने । भग्नानन इति पाठान्तरम् । क्षतमुख इत्यर्थः । हस्तपदां हस्तयोः पादयोर्वा । विचारः प्रश्नः । शुभ इष्टसाधकः ॥ १२१ ॥

**पाशेति** ॥ पाशोद्वर्तनके पाशनिर्मातरि । लिखति भूमिमितरद्वा वस्तु । उत्सारिते स्वाधिष्ठितस्थानान्निस्सारिते । वारिते निषिद्धप्रवेशे । सीसं लोहविशेषः । व्याधिते यत्किंचिद्व्याधियुक्ते । रूक्षं परुषम् । परेतान् प्रति पिण्डान् निर्वपति वेति संबन्धः ॥ १२२ ॥

वस्त्रप्रावृतकन्धरे च मलिने
रूक्षाशुभालापिनि
प्रश्नो नैव शुभाय निर्वपति वा
पिण्डान् परेतान् प्रति ॥ १२२ ॥

वासीखड्गपलालजालकतुषा-
पादत्रपिञ्छत्वचां
शृङ्गस्यापि च वाहके च विकले
संमार्जनीधारिणि ।
प्रेतालंकृतिशूर्पपाशमुसलान्
भर्तर्युपेते क्षुधा
दैवज्ञेपि च पृच्छके न च शुभो
ज्ञेयो विचारः क्वचित् ॥ १२३ ॥

एतच्चेष्टाविषयम् ।

दौर्मुख्यं वदनारूढशोककोपश्रमादिभिः ।
वैमनस्यं च दूतस्य येनकेनापि दोषकृत् ॥ १२४ ॥

सुन्दरश्च कुलीनश्च विनयी च निरामयः ।
सुप्रसन्नश्च दूतश्चेत्प्रष्टा सुखमवाप्नुयात् ॥ १२५ ॥

**वासीति** ॥ वासी उपदंशच्छेदाद्युपयोगी शस्त्रविशेषः । तुषोपात्कलापत्वचामिति पाठान्तरम् । नार्थविशेषः । विकलेऽङ्गवैकल्ययुक्ते । प्रेतालंकृतिः प्रेतपुष्पम् । दैवज्ञेऽपि च पृच्छके चेष्टाविषयोक्तं सर्वमपि यथासंभवं दूते दैवज्ञे च योज्यमिति यावत् । क्वचित् क्व-चिदपि आयुर्विवाहसन्तानादिसर्वप्रश्नेष्वित्यर्थः ॥ १२३ ॥

**एतादिति** ॥ एत'द्धस्तौ धून्व'न्नित्यादिश्लोकपञ्चकोक्तम् ॥

**दौर्मुख्यमिमि** ॥ येनकेनापि वैमनस्यमिति संबन्धः । प्रथमश्लोकोऽशुभभावानां द्वितीयश्लोकः शुभभावानां च प्रतिपादकः ॥ १२४, १२५ ॥

एतन्नयनविषयम् ।

उन्मिषदम्बकयुगळो
मङ्गलपदार्थदृढतरनिहितेक्षः ।
अथ ऊर्ध्वेक्षणरहितो
लभतेभीष्टं प्रतीपदृग्दुःखम् ॥ १२६ ॥

एतद्दर्शनविषयम् ।

तोयार्द्रभिन्नमलिनारुणनीलवासा
रक्तप्रसूनभृदपि व्यसनं प्रयाति ।
वासः सितं सुरभिगौरसुमानुलेप-
भूषा दधच्च खलु मङ्गलमेति नूनम् ॥ १२७ ॥
बिभ्राणो मङ्गलद्रव्यं पृच्छको याति मङ्गलम् ।
रिक्तपाणिरमङ्गल्यद्रव्यभृच्चाशुभं व्रजेत् ॥ १२८ ॥

एतद्वस्त्रादिविषयम् ।

प्रश्नकाले शुभे प्रष्टुः स्थितिस्पर्शेक्षणादिके ।
दैवज्ञचित्ते तुष्टे च स्यादिष्टार्थसमागमः ॥ १२९ ॥
मनोगतफलप्राप्तिरशुभेष्वेषु नो भवेत् ।
मिश्रेषु येषामाधिक्यं फलं तेषां विनिर्दिशेत् ॥ १३० ॥

---

**उन्मिषदिति** । अंबकं नयनम् । प्रतीपं विपरीतं इति क्रियाविशेषणं दर्शनकर्म च । अनुन्मीलितचक्षुरमङ्गलपदार्थद्रष्टा च दुःखं लभत इत्यनुवर्तते ॥ १२६ ॥

**तोयेति** ॥ तोयार्द्रेति वस्त्रविषयम् । रक्तेत्यादिकमादिशब्दसंगृहीतविषयम् । सित-मिति वासोविशेषणम् । सुरभिगौरेति सुमादीनाम् । मङ्गलमेति अभीष्टं लभते । मङ्गलद्रव्यं दर्पणादि । अमङ्गल्यद्रव्यं परशुप्रभृतिकम् ॥ १२७, १२८ ॥

**एतदिति** ॥ एतच्छ्लोकद्वयोक्तम् ॥

**प्रश्नकाल इति** ॥ प्रश्नकालेत्यादिपद्यद्वयेन फलनिर्देशप्रकारः कथितः । आधि-क्यं संख्यया गौरवादिभिश्च । समत्वेपि दोषाधिक्यं कल्पनीयम् । तथोक्तं माधवीये 'समा-नतायां बलिनो हि दोषा' इति । अत्र हेतुः कलौ जनानां मन्दभाग्यत्वम् । हिशब्दस्तदेव विशदयति ॥ १२९, १३० ॥

एतानि दूतविषयाणि । अथ तत्कालजानि शुभाशुभनिमित्ता-न्युच्यन्ते ॥

प्रश्ने यदुच्यते यच्च श्रूयते यच्च दृश्यते ।
तत्सादृश्येन सकलं प्रष्टुर्वाच्यं शुभाशुभम् ॥ १३१ ॥

एतदेव स्पष्टीक्रियते ।

यस्यकस्यापि कार्यस्य पृच्छायां प्रस्थितावपि ।
तत्कार्यसाधनं वस्तु दृष्टं चेत्तत्तु सिध्यति ॥ १३२ ॥
नववस्त्रद्वयादीनां दर्शनं करसङ्ग्रहे ।
सिद्धये तदसिध्यै स्याद्वियोगस्तु कयोरपि ॥ १३३ ॥
रन्ध्रेङ्गुलिप्रवेशे तु कन्याया दूषणं वदेत् ।
यस्या यःकश्चिदागच्छेद्विवाहास्यां दिशीर्यताम् ॥ १३४ ॥
घुटिकापुस्तकाद्यं यद्विद्याभ्यसनसाधनम् ।
किङ्किणीकटकादीनि भूषणानि शिशोरपि ॥ १३५ ॥

**एतानीति** ॥ तत्कालजानि अन्यच्च तत्कालजमिति निर्दिष्टानि ॥

**प्रश्न इति** ॥ तत्सादृश्येन एषां त्रयाणां सादृश्येन ॥ १३१ ॥

**एतदिति** ॥ यस्यकस्यापीत्यादिश्लोकप्रदर्श्यमानोदाहरणप्रदर्शनेनेत्यर्थः ॥

**यस्येति** प्रस्थितौ प्रस्थाने । तत्कार्यसाधनं पृष्टस्योद्दिष्टस्य वा कार्यस्य सा-धकम् ॥ १३२ ॥

**नवेति** ॥ आदिशब्दो विवाहोपयुक्तेतरवस्तूपलक्षकः । तच्च मुकुरादि । कयोरपि वस्तुनोः । अत्र तयोरपीति पाठं वस्त्रयोरित्यर्थं च स्वीकृत्य वस्त्रच्छेदे विवाहासिद्धिरिति क-थयन्ति । एवं च लक्षणसङ्कोचाल्लक्षणाधिक्यस्यादरणीयत्वात्पूर्वत्रादिशब्दप्रयोगाच्च कयोरपी-ति पाठ एव ज्यायान् । उदाहरणरूपत्वात् सङ्कोचो न दोषावह इत्यन्यदेतत् । पूर्वश्लोको-क्तसामान्यस्य विशेषप्रदर्शनेन विशदीकरणमेवैतदादिभिः क्रियते पद्यैः ॥ १३३ ॥

**रन्ध्र इति** ॥ विवाहप्रश्नविषयमेवैतत् । यस्या दिशः । यःकश्चिन्न जात्यादिवि-शेषापेक्षेति भावः ॥ १३४ ॥

**घुटिकेति** ॥ सन्तानप्रश्नविषयमिदं गर्भप्रश्नेप्युपयुज्यते ॥ १३५, १३६ ॥

मेखलाजिनदण्डाश्च गर्भिणी बालकस्तथा ।
एतेषां दर्शनादीनि भवेयुः पुत्रसिद्धये ॥ १३६ ॥
दर्शनं ज्वलितस्याग्नेर्मलादित्यजनं तनोः ।
यानं कस्यापि तद्देशाद्गर्भच्छिद्रस्य सूचकम् ॥ १३७ ॥
दक्षिणांघ्रिं स्थिरीकृत्य स्थितिरायुधचालनम् ।
मर्दनं दक्षहस्तस्य ज्वलिताग्निप्रदर्शनम् ॥ १३८ ॥
पुरुषस्य प्रसिद्धस्य प्रसन्नस्य च दर्शनम् ।
एतत्षट्कं विशेषेण युद्धप्रश्ने जयावहम् ॥ १३९ ॥
वामपादं स्थिरीकृत्य स्थितिर्विक्लवता गिरः ।
साश्रुता मलिनेक्षा च नियम्यायुधधारणम् ॥ १४० ॥
पराजयकराः पञ्च युद्धप्रश्ने विशेषतः ॥ १४१ ॥
यत्किञ्चित् कार्यमुद्दिश्य प्रस्थाने यदि पश्यति ।
सुवर्णं वा फलं वा स्याद्द्रव्यलाभो न संशयः ॥ १४२ ॥
आरुह्य वा समाश्रित्य जीववद्वस्तु पृच्छति ।
प्रश्ने चागच्छति प्राणी तं देशं प्रति कश्चन ॥ १४३ ॥
जीवत्येव ध्रुवं रोगी म्रियते वैपरीत्यतः ॥ १४४ ॥

**दर्शनमिति** ॥ गर्भप्रश्नविषयमेतत् । तनोः कर्णनासादिरन्ध्रेभ्यश्च । १३७ ॥

**दक्षिणांघ्रिमिति** ॥ युद्धप्रश्नविषयमेतत् । प्रसिद्धस्य प्रसन्नस्येति पृथगेवान्वयः। षट्कमित्युक्तेः ॥ १३८, १३९ ॥

**वामपादमिति** ॥ इदमपि युद्धप्रश्नविषयम् ॥ १४०, १४१ ॥

**यदिति** ॥ प्रस्थानशब्दः पृच्छामप्युपलक्षयति । औचित्यात् प्रकरणबलात् 'यस्यकस्यापि कार्यस्य पृच्छायां प्रस्थितावपी'त्युपक्रमाच्च । एवं च पूर्वत्र प्रश्नशब्दः प्रस्थानस्याप्युपलक्षक इति बोध्यम् । तत्तद्विषयककार्यारम्भणादावपि चिन्त्यमेवैतत् । १४२ ॥

**आरुह्येति** ॥ समाश्रित्य हस्तादिनावलंब्य । जीववद्वस्तु गजतुरगादिकम् । कश्चन प्राणी मनुष्यास्तिर्यग्वा ॥ १४३, १४४ ॥

पितृपुष्पं तिलं वह्निर्नूतनं वसनं तथा ।
दर्भदध्यादि निखिलं संभृतं पितृकर्मणे ॥ १४५ ॥
मरणानन्तरापेक्षं द्रव्यं यत्सकलं तु तत् ॥
एतेषां दर्शनं नूनमायुःप्रश्ने मृतिप्रदम् ॥ १४६ ॥
शयनं चोपवेशश्च पृष्टा यात्रा विघातकृत् ।
पादव्यत्याससङ्कोचौ विळम्बनकरौ ध्रुवम् ॥ १४७ ॥
पृष्टोत्थानश्च यानं च यात्रालाभाय सत्वरम् ॥ १४८ ॥
पाणिग्रहणमन्योन्यं द्वयोः कस्यापि चागमः ।
सन्धये छेदभेदादि सर्वं सन्धिविरोधकृत् ॥ १४९ ॥

हाहाखेदरवं क्षुतं च पतनं
चैत्यध्वजादेस्तथा
वस्त्रछत्रपदत्रविक्षतिमपि
ध्वंसार्थनानागिरः ।
क्रूराणां मृगपक्षिणां प्रतिदिशं
वाचश्च दीपक्षयः
पातं पूर्णघटादिकस्य च बुधाः
कष्टं निमित्तं विदुः ॥ १५० ॥

**पितृपुष्पमिति** ॥ संस्कारादिसपिण्डीकरणान्तःक्रियाकलापः एकोद्दिष्टबहूद्दिष्टादिश्राद्धानि पितृप्रीत्यर्थतिलहोमादिकं च पितृकर्म । मरणानन्तरापेक्षं द्रव्यं दर्भसमिद्दधिघृतादि । पितृकर्मणे संभृतमिति सर्वत्र विशेषणम् ॥ १४५, १४६ ॥

**शयनमिति** ॥ यात्राविषयप्रश्नपरमेतत् । विघातो विघ्नः । पादव्यत्यासः अन्यपादेन स्थित्वा पृच्छानन्तरमन्यपादेन स्थितिः । सङ्कोचः प्रसारितस्य पादस्य । सत्वरं यात्रालाभायेति संबन्धः ॥ १४७, १४८ ॥

**पाणीति** ॥ आगमः पृच्छादेशं प्रत्यागमनम् । सन्धये इति पूर्वान्वयि । कार्यविषयप्रश्नपरमेतत् ॥ १४९ ॥

**हाहेति** ॥ प्रश्नविशेषे निरूपणीयमुदाहरणतया प्रदर्श्य प्रश्नसामान्ये निरूपणीयानि इदमादिपद्यैः प्रदर्श्यन्ते । चैत्यः पूजितवृक्षः । विक्षतिर्विनाशः पतनादिकं च । ध्वंसो विनाशः अर्थोऽभिधेयो यासां तादृश्यो नानागिरः ॥ १५० ॥

मार्जारडुण्डुभोलूकगोधाद्यशुभदर्शनम् ।
गौळ्या रुतं च नाशाय वामे दक्षे तथा क्षुतम् ॥ १५१ ॥

प्रशस्ताः कीर्तने कोलगोधाहिशशजाहकाः ।
न दर्शने न विरुते वानरर्क्षावितोऽन्यथा ॥ १५२ ॥

मातङ्गाश्ववृषादीनां पृच्छाकाले रुदं यदि ।
तेषां वा दर्शनं तर्हि प्रष्टाभीष्टमवाप्नुयात् ॥ १५३ ॥

वीणावेणुमृदङ्गशंखपटह-
ध्वानं च भेरीरवं
गीतं मङ्गलमङ्गनां च गणिकां
दध्यक्षतेक्ष्वादिकम् ।
दूर्वाचन्दनपूर्णकुम्भकुसुमं
मालां फलं कन्यकां
घण्टां दीपसरोरुहे च शुभदं
विद्यान्निमित्तं बुधः ॥ १५४ ॥

**मार्जारेति** ॥ वामे वामभागे । इदं पूर्वान्वयि । दक्षे दक्षिणभागे । क्षुतेनैवैतत्सं-बध्यते ॥ १५१ ॥

**प्रशस्ता इति** ॥ कोलादीनां कीर्तनं प्रशस्तम् । दर्शनशब्दश्रवणे अप्रशस्ते । वानरर्क्षयोस्तु दर्शनं शब्दश्रवणं च प्रशस्तम् । कीर्तनमात्रमशुभम् ॥ १५२ ।

**मातङ्गेति** ॥ मातङ्गादीनां कीर्तनस्य विशेषतः प्रशस्तत्वमप्रशस्तत्वं वा न विद्यत इति भावः ॥ १५३ ॥

**वीणेति** ॥ मङ्गलं मङ्गलवस्तु । अङ्गनां 'अङ्गात् कल्याणे' इत्यनुशासनेन कल्याणाङ्गविशिष्टस्त्रीवाचकोयमङ्गनाशब्दः । प्रकृतिसौन्दर्यविशिष्टत्वं भूषणभूषितत्वं च कल्याणत्वम् । शुभदं निमित्तं विद्यात् । एतेषां दर्शनं श्रवणं च शुभदमित्यर्थः ॥ १५४ ॥

छत्रं तोरणहृद्ययानशकटं
स्तोत्रं च वेदध्वनिं
बद्धं चैकपशुं वृषं च मुकुरं
स्वर्णं सवत्सां च गाम् ।
भक्ष्यं चोद्धृतमृत्तिकां बुधवरं
यच्चान्यदिष्टं श्रुतं
दृष्टं श्रोत्रदृशोः शुभं तदखिलं
प्रश्ने निमित्तं विदुः ॥ १५५ ॥

अथ निमित्तान्युपसंहरति ।

लोकाच्छास्त्रमुखात्तथा गुरुमुखा-
दन्यन्निमित्तान्तरं
विज्ञातव्यमतः शुभाशुभफलं
प्राज्ञैः प्रयत्नादिह ।
यद्यत्पृच्छति पृच्छकोन्तिकगतं
तन्नाशचिह्नं भवे-
न्नाशः स्यादिह तस्य तस्य न चिरा-
त्तद्व्यत्यये व्यत्ययः ॥ १५६ ॥

---

**छत्रमिति** ॥ अन्यद्यत् श्रुतं दृष्टं च श्रोत्रदृशोरिष्टम् । तदखिलं प्रश्ने शुभं निमित्तं विदुः । निमित्तशास्त्रवेदिन इति शेषः । यच्छ्रवणे श्रोत्रेन्द्रियप्रसादः, यद्दर्शने नेत्रानन्दः तच्छ्रवणं तद्दर्शनं च शुभदमिति भावः । वीणावेण्वित्यादिकं छत्रं तोरणेत्यादिकं च तदुदाहरणमात्रमिति ज्ञेयम् ॥ १५५ ॥

**अथेति** ॥ तत्कालनिमित्तानां सर्वेषां शुभाशुभत्वकथनमिदन्तया सर्वथैवासाध्यमिति तज्ज्ञानोपायोपदेशपूर्वकं निमित्तकथनपट्टोपसंहारः क्रियत इति भावः ॥

**लोकादिति** ॥ लोकाज्जनवादात् । शास्त्रमुखात् ग्रन्थान्तराण्यालोच्य तेभ्यः । गुरुमुखात् तत्तदवसरोक्तगुरुवाक्येभ्यः । अन्यदस्मत्प्रदर्शितातिरिक्तम् । निमित्तान्तरं निमित्तविशेषः । अतो निमित्तेभ्यः । प्राज्ञैरालोचननिपुणैः । प्रयत्नादवधानेनालोच्येत्यर्थः ।

ज्ञात्वैतत्सकलं सम्यक्समयादि शुभाशुभम् ।
एतैरेवाखिलं वक्तुं शक्यं प्रष्टुः शुभाशुभम् ॥ १५७ ॥

एतत्पृच्छाकालविषयम् ।

॥ इति प्रश्नमार्गे द्वितीयाध्यायः ॥

:०:

# अथ तृतीयाध्यायप्रारम्भः ।

अथ निर्गमनसमये निरूपणीयान्युच्यन्ते ।

प्रश्नकालोद्भवं बुध्वा सदसत्समयादिकम् ।
निर्गच्छेत्समये जीवकालहोरादिके शुभे ॥ १ ॥
शुभाशुभनिमित्तं यत्प्रश्नकालसमुद्भवम् ।
उक्तं निखिलमप्येतच्चिन्तनीयं हि निर्गमे ॥ २ ॥

यद्यदायुर्विवाहादिविषयम् । तन्नाशाचिह्नमायुःप्रश्ने मरणदर्शनकथनादिकं प्रोषितागमनप्रश्ने तत्प्रदेशात् कस्यापि निर्याणं नायातीत्यादिकथनं वा । तद्व्यत्यये आयुःप्रश्ने बालजननश्रवणं रोगशमनकथनमित्यादिकम् ॥ १५६ ॥

**ज्ञात्वेति** ॥ एतत्प्रदर्शितम् । सम्यक्ज्ञात्वा । एतैस्समयादिभिः शुभैश्शुभमशुभैरशुभम् । एवशब्देन वक्ष्यमाणमारूढग्रहस्थित्यादिकं विनापीति सूचितम् ॥ १५७ ॥

**एतदिति** ॥ पृच्छानिर्गममार्गमन्दिरगतीत्यादिफलानिरूपणक्रमे पृच्छाकालानिरूपणीयं सर्वं समयाद्युद्देशक्रमेणात्राध्याये प्रदर्शितम् । निर्गमादीनि तु तृतीयप्रभृतिभिरध्यायैः क्रमेण निरूप्यन्त इति तात्पर्यम् ॥

॥ इति द्वितीयाध्यायः ॥

**प्रश्नेति** ॥ समयादित्यादिशब्देन 'दैवज्ञेने'ति श्लोकोक्तो देशादिर्गृह्यते । निर्गच्छेत् स्वगृहात् पृच्छकगृहं प्रतीत्यर्थः । कालहोरा "दिनद्वादशांशो मतः कालहोरा पतिस्तस्य पूर्वस्य वाराधिनाथः । ततः षष्ठषष्ठाः क्रमेणेतरेषां निशायां वाराधिपात्पञ्चमाद्याः" । इत्युक्तप्रकारेण विज्ञेया ॥ १ ॥

**शुभेति** ॥ वीणावेणुमृदङ्गादिकं शुभनिमित्तम् । हाहाखेदरवादिकमशुभनिमित्तम् । हीत्यनेनास्य युक्तिसिद्धत्वं प्रसिद्धिश्च द्योत्येते ॥ २ ॥

निर्गच्छतोम्बरं सङ्गमेति भूमौ पतेच्च वा ।
छत्राद्यं यत् करस्थं वा भवेदेवाशुभाय तत् ॥ ३ ॥
आगच्छ तिष्ठ मा गच्छ प्रविश क नु गच्छसि ।
इत्यादिवाचः प्रस्थाने भवन्त्यशुभदा दृढम् ॥ ४ ॥
पाषाणादिषु पादस्खलनं स्तम्भादिके तथा शिरसः ।
नेष्टं निर्गमनेन्यान्यपि चिन्त्यानि लोकसिद्धानि ॥ ५ ॥

एतन्निर्गमनविषयम् । अथ मार्गे चिन्तनीयान्युच्यन्ते । अत्र शास्त्रान्तरम् ।

अन्यजन्मान्तरकृतं शुभं वा यदि वाशुभम् ।
यत्तस्य शकुनः पाकं निवेदयति गच्छताम् ॥ ६ ॥

सदसच्छकुनोद्भूतौ
कर्तृभिदास्त्येव तत्फलानुभवे ।
मार्गादिभेदवशत-
स्तदपि च शास्त्रान्तरे कथितम् ॥ ७ ॥

पथ्यात्मानं नृपं सैन्ये
पुरे चोद्दिश्य देवताम् ।

---

**निर्गच्छत इति** ॥ सङ्गं यत्रकुत्राचिद्व्यासङ्गम् । आद्यशब्देन दण्डादीनां सङ्ग्रहः ॥३॥

**आगच्छेति** ॥ इत्यादिवाचः दैवज्ञमन्यं वोद्दिश्य यस्यकस्यापि यात्राप्रतिबन्धकानि वाक्यानि ॥ ४ ॥

**पाषाणेति** ॥ तथा स्खलनमित्यनुषज्यते ॥ ५ ॥

**एतदिति** ॥ एतत् श्लोकपञ्चकोक्तम् । उच्यन्ते अन्यजन्मान्तरकृतमित्यारभ्य व्रजेदित्यन्तेन चतुर्विंशतिश्लोकात्मकेन ग्रन्थेन ॥

**अन्येति** ॥ तस्य कर्मणः । निवेदयति सूचकत्वेनावेदयति ॥ ६ ॥

**सदिति** ॥ शकुनपदं निमित्तानामप्युपलक्षकम् । कर्तुः फलानुभोक्तुर्भिदा विशेषः ॥ ७ ॥

**पथ्येति** ॥ पथ्यात्मानमित्येकाकिगमनविषयम् । नृपं सैन्य इति सेनानिवेशे निमित्तदर्शने सैन्ययात्रायां शकुनदर्शने च चिन्त्यम् । देवतामुद्दिश्येत्यनेन पुरवासिनां समेषां

सार्थे प्रधानं साम्ये तु
जातिविद्यावयोधिकम् । इति ॥ ८ ॥
शकुनफलानामपि भूतानागतवर्तमानत्वम् ।
तत्सम्भवदिग्वशतो ज्ञेयं शास्त्रान्तरोक्तमेतदपि ॥ ९ ॥
आरभ्य स्वोदयादर्कः पूर्वाद्यष्टासु दिक्ष्वपि ।
सञ्चरत्यर्द्धसंयुक्ताः सप्तनाडीर्दिवानिशम् ॥ १० ॥
मुक्तप्राप्तैष्यसूर्यासु फलं दिक्षु तथाविधम् ।
अङ्गारदीप्तधूमिन्यस्ताश्च शान्तास्ततोपराः ॥ ११ ॥
तत्पञ्चमादिशां तुल्यं फलं त्रैकाल्यमादिशेत् ।
परिशेषदिशोर्वाच्यं यथासन्नं शुभाशुभम् ॥ इति ॥ १२ ॥
एतत्सर्वत्र भूतभविष्यद्वर्तमानपरिज्ञाने ग्राह्यम् ।

---

तत्फलानुभव इति सूच्यते । सार्थे प्रधानमित्यनेकेषां संघीभूय । गमने चिन्त्यम् । प्राधान्यं तु जातिविद्यावयोभिश्चिन्त्यम्। तेषां तु प्राधान्यं यथोत्तरमिति यथापूर्वमिति च पक्षद्वयं दृश्यते । साम्ये त्वित्यनेन येनकेनापि कारणेन प्राधान्याप्राधान्ये प्रकारान्तरेण निर्णीते जात्यादेः प्रयोजकत्वं नेति गम्यते ॥ ८ ॥

**शकुनेति ।** आरम्येत्यादिश्लोकद्वयेन शास्त्रान्तरमेव प्रदर्शयति ॥ ९ ॥

**आरभ्येति ॥** सूर्योदयादारम्य सार्धास्सप्त नाडीः पूर्वस्यां दिशि सूर्यसञ्चारः । पुनस्सार्धनाणीसप्तकमाग्नेय्याम् । एवं क्रमेण कल्पनीयम् । एवं च सूर्योदयादारम्य यावत्सार्धनाडीसप्तकमैशानी मुक्तसूर्या पूर्वा प्राप्तसूर्या आग्नेयी एष्यसूर्या । एवमुत्तरत्रापि द्रष्टव्यम् । तत्र मुक्तसूर्या भूतफलदा । प्राप्तसूर्या वर्तमानफलदा । एष्यसूर्या भविष्यत्फलदा । ताश्च मुक्तसूर्यादयः क्रमेणाङ्गारदीप्तधूपिन्यस्तत्संज्ञाः । अङ्गारत्वं गतसूर्यसंबन्धेन दग्धत्वात् । दीप्तत्वं तु सज्वालत्वात् । धूमित्वमासन्नप्रज्वलनत्वात् । ततोपराः पञ्च शान्तास्तत्संज्ञाः । सूर्यसंबन्धाभावात् तत्पञ्चमदिशां त्रैकाल्यं फलं तुल्यमादिशेत् । प्राच्यामिव पश्चिमस्यामाग्नेय्यामिव नैरृत्यामित्यादिक्रमे भूतादिकालफलवत्त्वमादेष्टव्यमित्यर्थः । परिशेषदिशोः दीप्तायास्तृतीयसप्तदिशोः यथासन्नं तृतीयदिशः पूर्वार्धम् । द्वितीयवत् फलदम् । उत्तरार्धे तु चतुर्थवत् भूतफलदम् । सप्तमादिशः पूर्वार्धे षष्ठवद्भविष्यत्फलदम् । उत्तरार्धे पुनः अष्टवद्भूतफलदम् । इति चिन्तनीयम् : 'दीप्तां प्रतिदिशं वाचः' इत्यादिष्वपि संज्ञोपयोगे विज्ञेयः ॥

**एतदिति ।** कालविज्ञाने सर्वत्रातिदेशार्थोयमारम्भः ॥

राजा कुमारो नेता च दूतः श्रेष्ठी चरो द्विजः ।
गजाध्यक्षश्च पूर्वाद्याः क्षत्रियाद्याश्चतुर्दिशः ॥ १३ ॥
गच्छतस्तिष्ठतो वापि दिशि यस्यां प्रतिष्ठितः ।
विरौति शकुनो वाच्यस्तद्दिक्स्थेन समागमः ॥ १४ ॥

अस्यार्थः ।

प्राच्यां खलु शकुनरवो
यदि खलु भविता समागमो राज्ञा ।
राजकुमारेणाग्नौ
याम्यादिष्वेवमेव नेतृमुखैः ॥ इति ॥ १५ ॥

पाषण्डाश्रमवर्णानां सवर्णाः कार्यसिद्धये ।
त एव विपरीताः स्युर्दूताः कार्यविपत्तये ॥ १६ ॥

अथ वक्ष्यमाणानां मार्गेभ्यागमो ग्राह्यः ।

---

**राजेति** ॥ राजेत्यादिकमष्टकमैन्द्याद्यष्टादिक्षु क्षत्रियेत्यादि चतुष्कं पूर्वादिचतुर्दिक्षु च कल्पते । एवं च दिक्षु द्वयोः विदिक्षु एकस्य च प्रत्येकं निरूपणीयत्वमिति लभ्यते । यस्यां दिशि प्रतिष्ठितः शकुनो विरौति । तद्दिक्स्थेन समागमो वाच्य इत्यन्वयः । एतन्निरूपणं न केवलं मार्गे । किं तु पृच्छादावपि योजनीयमिति तिष्ठतःपदेन लभ्यते ॥

**अस्येति** ॥ कथ्यत इति शेषः । वक्ष्यमाणश्लोकेनेति यावत् ॥

**प्राच्यामिति** । राज्ञा पार्थिवेन । क्षत्रियस्याप्युपलक्षकमिदम् । नेता सेनापतिः । वैश्योप्युपलक्ष्यते । क्षत्रियाद्याश्चतुर्दिशः इत्युक्तत्वात् ॥ १५ ।

**पाषण्डेति** ॥ पाषण्डा लिङ्गधारिणः । ते च शाक्यादयः । आश्रमा ब्रह्मचर्यादयः । वर्णा विप्रादयः । सवर्णा रोगिणा सदृशाः । शाक्यस्य शाक्यः । ब्रह्मचारिणो ब्रह्मचारी । विप्रस्य विप्रः । इत्येवमादि द्रष्टव्यम् । विपरीताः शाक्यस्य भिक्षुः भिक्षोश्शाक्यः ब्रह्मचारिणो गृहस्थः गृहस्थस्य ब्रह्मचारी विप्रस्य क्षत्रियः क्षत्रियस्य विप्र इत्याद्येवंरीत्या चिन्तनीयम् । दूतविषयमप्येतन्मार्गनिरूपणीयघट्टे प्रसङ्गादुक्तमिति तत्त्वम् ॥ १६ ॥

**अथेति** ॥ अभ्यागमः अभिमुखमागमनं आनयनमित्यप्यनुषज्यते ॥

यामार्द्धमुदयात्पूर्वमारभ्याष्टासु दिक्ष्वपि ।
परिभ्रमति तिग्मांशुर्यामेष्वष्टासु सर्वदा ॥ २६ ॥

रवौ ज्वाला ततो धूमच्छायामृद्वारिभूमयः ।
भसिताङ्गारकाश्चेति प्रादक्षिण्येन संस्थितम् ॥ २७ ॥

अङ्गारादित्रयं दीप्तं शान्तं मृत्स्नादिकत्रयम् ।
छाया पूर्वे शुभं भस्म पश्चाच्चैवं शुभं भवेत् ॥ २८ ॥

दुश्शकुनसम्भवे यत्कृत्यं तदपि शास्त्रान्तरोक्तमुच्यते ।

एकादशादिमेनिष्टे द्वितीये शकुने पुनः ।
प्राणायामाः षोडश स्युस्तृतीये तु न च व्रजेत् ॥ इति ॥ २९ ॥

एतन्मार्गविषयम् । अथ पृच्छकगृहप्रवेशसमये निरूपणीयान्युच्यन्ते ।

---

**यामार्धमिति** ॥ तिग्मांशुः उदयात्पूर्वं यामार्धमारभ्य अष्टासु यामेषु अष्टासु दिक्ष्वपि सर्वदा परिभ्रमतीत्यन्वयः । यामस्सार्धसप्तनाडिकारूपः दशमश्लोके सूर्योदयादारभ्यैकैकयामं पूर्वाद्येकैकदिक्षु सञ्चार उक्तः । अत्र तु सूर्योदयप्राग्भावियामार्धादारभ्येत्येतावान् विशेषः। अत्र सूर्यसञ्चरणदिशमारभ्य क्रमेण १. ज्वाला, २. धूमः, ३. छाया, ४. मृत्तिका, ५. जलं, ६. भूमिः ७. भसितं, ८, अङ्गारकः इति क्रमेण संज्ञाः । तत्र अङ्गारकज्वालाधूमानां दीप्तत्वं मृज्जलभूमीनां शान्तत्वं इतरयोः छायायाः पूर्वभागस्य भसितोत्तरभागस्य च शुचित्वं छायोत्तरभागस्य भसितपूर्वभागस्य चाशुभत्वं वेद्यम् । अत्र छायायाः दीप्तासन्निकृष्टभागार्धस्य भसितस्य दीप्तासन्निकृष्टोत्तरभागस्य च शुभत्वकल्पनं यद्यपि प्रत्यक्षयुक्तिविरुद्धं तथापि वाचानिकत्वाद्ग्राह्यमेव । शास्त्रवचनासिद्धकार्येषु युक्तेरकिंचित्करत्वात् । अन्यथा तस्य मानत्वभङ्गात् । वस्तुतस्तु नैतच्छ्लोकत्रयं प्रामाणिककोशेषु दृश्यते । इतः पूर्वमेवेतिकरणात् प्रकृतविषयशास्त्रान्तरपरिसमाप्तिर्व्यक्तीभवति । अतः प्रक्षिप्तमेतत् । न तोदक्षममास्तामित्यलम् ॥ २५–२८ ॥

**एकादशेति** ॥ निर्गतः प्रथमं दुश्शकुनं यदि पश्येत्तर्हि निजगृहं प्रत्यागत्य पादप्रक्षाळनाचमनादिकं विधाय एकादश प्राणायामान् प्रायश्चित्ततयाभ्यस्य पुनः प्रतिष्ठेत । तदात्वेपि पुनर्दुश्शकुनदर्शने पूर्ववत् षोडश प्राणायामान् विधाय पुनः प्रतिष्ठेत। पुनरपि दुश्शकुनदर्शने तु न गच्छेदेव । इतिकरणेन शास्त्रान्तरवचनस्य मार्गे निरूपणीयस्य च परिसमाप्तिः प्रदर्श्यते ॥ २९ ॥

प्रश्ने तत्कालजं यद्यन्निर्गमे यद्यद्ध्वनि ।
प्रोक्तं प्रष्टृगृहप्राप्तौ तत्तत्प्रायेण चिन्त्यताम् ॥ ३० ॥

आर्तालयं विशति दैवविदीत एत-
द्द्वारा निरेति यदि कोपि सरुङ्म्रियेत ।
द्वारा तथैव विशतीह यदीतरश्चे-
ज्जीवेत्स नूनमिति मे गुरुणोपदिष्टम् ॥ ३१ ॥

गृहान्तिकं प्रष्टुरिहाभियाते
ततो वधूः प्रश्नविचारिणीत्थम् ।
विनिर्गता मूलफलोपपन्ना
रजस्वलोन्मूलविनाशिनी स्यात् ॥ ३२ ॥

वेदाध्ययनघोषश्च तथा पुण्याहनिस्स्वनः ।
गन्धश्च सुरभिर्वायुः सुखस्पर्शः प्रदक्षिणः ॥ ३३ ॥
वृषस्य चानुलोमस्य स्वनस्तद्वद्गवामपि ।
प्रवेशसमये प्रष्टुरारोग्यादिफलाप्तये ॥ ३४ ॥

शयनासनयानानामुत्तानानां च दर्शनम् ।
न्युब्जानामितरेषां च पात्रादीनामशोभनम् ॥ ३५ ॥

---

**प्रश्न इति** । अतिदेशोयम् । प्रायेणेति यथोचितमेव संयोज्य फलादेशो विधेय इति ज्ञाप्यते ॥ ३० ॥

**आर्तालयमिति** ॥ समयसम्या समकालत्वमावश्यकमिति ज्ञाप्यते । इत: आर्तालयात् । एतद्द्वारा यया द्वारा दैवज्ञोन्तर्विशति तेनैव द्वारेण । कोपि न तु विशेषापेक्षा। इति मे गुरुणोपदिष्टम् । गुरूपदेशलब्धोयमर्थ: प्राधान्येन चिन्तनीय इत्यर्थः ॥ ३१ ॥

**गृहान्तिकमिति** ॥ ततः प्रष्टृगृहात् । प्रश्नविचारिणि दैवज्ञे । उन्मूलविनाशिनी पृच्छकस्य सन्तानसम्पदादिसर्वाभ्युदयविनाशसूचिका । अयमपि श्लोको न सार्वत्रिक: । प्रक्षिप्त: स्यादिति सम्भाव्यते ॥ ३२ ॥

**वेदेति** ॥ अनुलोमस्य प्रष्टृगृहाभिमुखं गच्छत: । दैवज्ञस्य पृच्छकगृहप्रवेशसमये पुण्याहशब्दादिश्रवणं सुरभिगन्धाघ्राणं सुखमारुतस्पर्शश्च पृच्छकारोग्यादिसूचकम् ॥३३,३४॥

**शयनेति** ॥ उत्तानानामूर्ध्वपादानां न्युब्जानामधोमुखानाम् ॥ ३५ ॥

आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा
अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ॥ ३६ ॥
निवाते दीपनाशः स्यान्मन्दिरे यस्य रोगिणः ।
स न जीवति चुल्यादौ चाग्निनाशः सतीन्धने ॥ ३७ ॥

एतत् पृच्छकगृहप्रवेशविषयम् ।

॥ इति प्रश्नमार्गे तृतीयोध्यायः ॥

-:०:-

# अथ चतुर्थाध्यायप्रारम्भः ।

प्रश्नानुष्ठानमेनेन लक्षणान्यपि कानिचित् ।
शास्त्रान्तरेषु दृष्टानि कथ्यन्ते खल्वनन्तरम् ॥ १ ॥
स्नात्वा धृतासितवासा
भृतभस्मा प्राङ्मुखः सुखासीनः ।

---

**आतुरस्येति** ॥ भिद्यन्ते स्वयमेव भिन्नानि भवन्ति । कर्मकर्तरिप्रयोगोयम् । तद्भारिप्रमुखानां कर्तॄणां व्यापाराविवक्षणात् । अमत्राणि पात्राणि । घटादीनि । तस्यातुरस्य ॥ ३६ ॥

**निवात इति** ॥ निवाते सतीन्धने इत्याभ्यां कारणसद्भावे न दोषः ॥ ३७ ॥

**एतदिति** ॥ एतत् 'प्रश्ने तत्कालज'मित्यारभ्य 'सतीन्धने' इत्यन्तम् ॥

॥ इति तृतीयाध्यायः ॥

**प्रश्नेति** ॥ तृतीयाध्यायेन निर्गममार्गमन्दिरगतिसम्भवानि लक्षणानि निरूप्य चतुर्थाध्याये प्रश्नक्रियायां प्रदर्शनं तज्जन्यलक्षणानां निरूपणं च चिकीर्षुराचार्यः प्रथमश्लोकेन चिकीर्षितं प्रतिजानीते । एनेन प्रश्नानुष्ठानेन कर्मत्वेनोपात्तस्य करणत्वेन पुनरुपादानमत्रान्वादेशः । अत एवैनादेशः ॥ १ ॥

**स्नात्वेति** ॥ निमित्तं द्वितीयतृतीयाध्यायोक्तमत्र वक्ष्यमाणं च । प्रश्नविधिं प्रश्नकर्म । प्रारभेत निर्वर्तयेत् । चक्रलेखनादिकमन्येन कारयेत् । अष्टमङ्गलादिकं स्वयं कुर्यात् ॥ २ ॥

आलोच्याथ निमित्तं
प्रश्नविधिं प्रारभेत गुरुभक्त्या ॥ २ ॥
अनासन्ने तु समये मध्याह्नोदययो रवेः ।
प्रश्नकर्म हि कर्तव्यं सुप्रसन्ने दिवाकरे ॥ ३ ॥
प्रश्नानुष्ठानसम्भारसम्भृतौ प्राक्तु भस्मनः ।
आनीतिर्भूतिदार्तस्य दीपस्य तु शुभप्रदा ॥ ४ ॥
सर्वप्रश्नेषु सर्वेषु कर्मस्वपि विशेषतः ।
प्रसादेनैव दीपस्य भविष्यच्छुभमादिशेत् ॥ ५ ॥
वामावर्तो मलिनकिरणः सस्फुलिङ्गोल्पमूर्तिः
क्षिप्रं नाशं व्रजति विमलस्नेहवर्त्यन्वितोपि ।
दीपः पापं कथयति फलं शब्दवान् वेपथुश्च
व्याकीर्णार्चिर्विमलमसकृद्यश्च नाशं प्रयाति ॥ ६ ॥
दीपः संहतमूर्तिरायततनुर्निर्वेपथुर्दीप्तिमान्
निश्शब्दो रुचिरः प्रदक्षिणगतिर्वैडूर्यहेमद्युतिः ।

---

**अनासन्न इति** ॥ रवेर्मध्याह्नोदययोः अनासन्ने समये तदात्व एव पदच्छाया-निमानस्य सौकर्यमिति भावः ॥ ३ ॥

**प्रश्नेति** ॥ दीपस्य आनीतिस्तु शुभप्रदा इत्यन्वयः ॥ ४ ॥

**सर्वप्रश्नेष्विति** ॥ सर्वप्रश्नेषु आयुर्विवाहसन्तानादिषु । सर्वेषु कर्मसु पूजाहोमदानभोजनादिषु ॥ ५ ॥

**वामेति** ॥ वामावर्तः अप्रदक्षिणज्वालः । अल्पमूर्तः ह्रस्वकृशज्वालः । यः विमलस्नेहवर्त्यन्वितोपि क्षिप्रं नाशं व्रजति स इति दीपविशेषणम् । पापं पापकर्मपाकजन्यं फलमशुभं कथयति सूचयति । अत्र वेपथुरित्यत्र दीपस्येत्यध्याहार्यम् । सामानाधिकरण्यसंबन्धो हि दीपवेपथ्वोरनुपपन्नः । यद्वा वेपथुस्तद्वान् । गुणगुणिनोरभेदोपचारात् ॥ ६ ॥

**दीप इति** ॥ संहता अविश्लिष्टा संघातीभूता मूर्तिर्ज्वाला यस्य सः । रुचिरः द्रष्टृमनःप्रसादकः । वैडूर्यहेमद्युतिस्तदन्यतरवर्णः । उच्छ्रितः ऊर्ध्वज्वालः । लक्ष्मीमैश्वर्यम् । चिरां शुभोदर्काम् । शेषमुक्तादन्यल्लक्षणम् । इतः श्लोकद्वयं किंचिद्ग्रन्थभागवर्त्यपि कृतोपयोगीति प्रदर्श्यते ॥ ७ ॥

लक्ष्मीं क्षिप्रमभिव्यनक्ति रुचिरां यश्चोच्छिखो दृश्यते
शेषं लक्षणमग्निलक्षणसमं योज्यं यथा युक्तितः ॥ ७ ॥

स्नेहो यस्येह देहो भवति तदुदरे
वर्तिनी वर्तिरात्मा
ज्वाला चायुस्तदीये विमलमलिनते
सौख्यदुःखे क्रमेण ।
पात्रं गेहं समीरो मृदुपरुषगुणो
बन्धुशत्रुस्वरूपः
प्रष्टुः प्रायेण वृत्तं पिशुनयति महा-
देवतात्मा स दीपः ॥ ८ ॥

---

**स्नेह इति** ॥ यस्य दीपस्य स्नेहः देहः पृच्छकशरीरम् । स्नेहस्य लघुत्वबृहत्त्वमालिन्यवैमल्यादिभिस्तद्गतकीटादिभिश्च पृच्छकशरीरे कार्श्यस्थौल्ये मालिन्यप्रकाशौ कृम्यादिभिरुपद्रवः इत्यादिकं चिन्तनीयमित्यर्थः । वर्तिरात्मेत्यनेन वर्तेर्वल्येन्तराधिरोहणे आत्मनि प्राणाद्यावरणम् । वैमल्ये बुद्धिप्रसादः । इत्यादि चिन्त्यम् । अत्र वर्तिनीति सुप्यजाताविति णिनेरुपपदसद्भाव एवानुशासनात् तदुदरे वर्तिनीत्येकं पदमिति केचित् । 'तत्पुरुषे कृति बहुळ'मिति सप्तम्या अलुगिति तत्पक्षः । यद्वा वर्तो वर्तनं घञन्तः । सोस्या अस्तीति वर्तिनी । 'अत इनिठना'वितीनिर्मतुबर्थे इति समाधेयम् । ज्वाला आयुः । तद्दैर्घ्ये दीर्घायुः । तदल्पत्वेल्पायुरित्यादि बोध्यम् । विमलमलिनते क्रमेण सौख्यदुःखे ज्वालावैमल्ये सुखं तन्मालिन्ये दुःखं चादेश्यम् । पात्रं गेहम् । पात्रस्य पृथुत्वे गृहस्य विशालत्वं शुद्धौ गृहशुद्धिः । अस्य देशाद्देशान्तरनयने पृच्छकस्य मूलगृहाद्गृहान्तरगमनमित्यादि चिन्त्यम् । मृदुपरुषगुणः समीरो बन्धुशत्रुस्वरूपः । मृदुवायुसंबन्धे बन्धुसाहाय्यलाभः । परुषवायुसंबन्धे शत्रुबाधा चेत्यादिविधया वक्तव्यम् । अत्र 'स्नेहः शशाङ्का'दिति बृहज्जातकस्थदशाध्याय्यनुसारेण स्नेहेन पुण्यपापकर्मणामतस्तत्पाकजन्यसुखदुःखानां वर्त्या देहगुणानां ज्वालया आत्मगुणानां च चिन्ता कार्येति दृश्यते । अत एव केचित् 'तदुदरे वर्तिनी वर्तिरायुः ज्वाला चात्मेति' पाठं परिकल्पयन्ति । 'स्नेहो यस्येह देह' इत्यत्रस्थदशाध्यायी-विसंवादस्तु तैर्न परिगण्यते । अतो दशाध्यायीमतमन्यत् । इदंश्लोकोक्तनिरूपणप्रकारोन्यः । उभयप्रामाण्याभ्युपगमेन संवादार्थे उभे अपि विचिन्तनीये इति सिद्धान्त एवाभ्युपगन्तव्य इति मन्यामहे । पिशुनयतीत्यत्र तत्करोतीति णिचि पिशुनं करोतीत्यर्थे पिशुनशब्दस्य 'पिशुनौ

पूर्वाभिप्रेतदात्री शिखिनि शिखिभयं
दक्षिणे प्राणहानि-
नैर्ऋत्यां विस्मृतिः स्याद्वरुणदिशि शिखा
शान्तिदा वायुकोणे ।
शून्या मृत्युञ्जयी स्याद्धनददिशि शिखा
शं विधत्ते शिवाख्ये
वह्नेरूर्ध्वा शिखैषा वितरति वपुषो-
भीष्टवस्तूनि सद्यः ॥ ९ ॥

प्रश्नार्थमापादितपत्रपूर्वान्
छित्वा च भित्वा गुळिकस्थराशौ ।
प्रष्टुष्टमर्क्षे यदि निक्षिपेच्चे-
त्सद्यो मृतिः स्यान्न तु जीवदृष्टे ॥ १० ॥

---

खलसूचकौ" इति कोशात्सूचकपरत्वाभ्युपगमे च आत्मानं पिशुनयतीति कर्माध्याहारेण कथ-ञ्चिदन्वयो नेयः । एवं च वृत्तामित्यत्र विषयीकृत्येत्यध्याहार्यं निर्वाह्यम् । अन्यथा द्विती-यानुपपत्तेः । यद्वा वृत्ते इति सप्तम्यन्तः पाठः कल्पनयीः । वैषयिकाधिकरणे चेयं सप्तमी । इत्यलं विमर्दाक्षमविमर्देन ॥ ८ ॥

**पूर्वेति ॥** पूर्वा पूर्वदिग्व्यापिनी अभिप्रेतदात्री सर्वेष्टसाधयित्री । वह्नेरिशखा विशे-ष्यम् । "शेषं लक्षणमग्निलक्षणसम"मिति वचनाद्दीपलक्षणे योज्यमित्यस्य प्रदर्शनम् । शि-खिनि अग्निकोणे । तदभिमुखेति यावत् । एवं दक्षिणादिष्वपि योज्यम् । विस्मृतिर्विस्म-रणम् । अपस्मारादिमानसव्याधयोऽपि चिन्त्याः + शून्या शून्यताप्रदा समृद्धिनाशिनीति यावत् । धनददिशि मृत्युञ्जयी स्वास्थ्यसाधिका । शिवाख्ये भाग इति कोण इति वा विशेष्य-मध्याहार्यम् । 'अत्र कुत्रचित् फलदात्रीत्वेन शिखाया निर्देशः । अन्यत्र केवलं फलम् । क्वचिच्छिखा फलविधिः । क्वचिल्लटा' । इति यत्तत्तद्विधत्वं तत्तु नियोगपर्यनुयोगानर्हस्य ग्रन्थकर्तुरुचितमेव । अन्वयस्तु तत्तदुचितपदाध्याहारेण यथाकथंचिन्निरुह्यताम् । प्रक्रमभ-ङ्गस्तु लोचननिमीलनेन सह्यतामित्यलं कोमळावमर्दसाहसेन ॥ ९ ॥

**प्रश्नार्थमिति ॥** प्रश्नार्थं प्रश्नक्रियायै । आपादितान् सम्पादितान् । पत्रपूर्वान् उपयुक्तपदार्थान् । गुळिकस्थराशौ । 'ऐन्द्र्यां मेषवृषा'वित्युक्तस्थिरचक्रस्थराशिरत्र ग्राह्यः । प्रष्टुष्टमर्क्षे प्रष्टुर्जन्मचन्द्रादष्टमराशौ वा । निक्षिपेत् । परिचारकोन्यो वा । जीवदृष्टे गुळिक-राशिप्रष्टुष्टमर्क्षयोर्विशेषणमेतत् । सप्तमदृष्टिरत्र ग्राह्या । पक्षान्तरे त्रिकोणदृष्टिरपि ॥ १० ॥

शुद्धतण्डुलसम्पूर्णप्रस्थदीपाद्यलंकृते ।
समे सुमृष्टसंसिक्ते चक्रं लिखतु भूतले ॥ ११ ॥

हस्तप्रमाणे चतुरश्रखण्डे
षडङ्गुलांशैर्विभजेद्दळानि ।
चतुर्दळं पद्ममिहास्तु मध्ये
चतुर्भिरन्यान्यजपूर्वभानि ॥ १२ ॥

केचिन्निन्दन्ति दैवज्ञा भस्मना चक्रलेखनम् ।
तथापि तत्र भस्मैव गृह्णन्ति बहवोधुना ॥ १३ ॥

प्रदक्षिणतया कार्यं राशिचक्रविलेखनम् ।
अनुलोमविलोमेन लेखने विघ्नसम्भवः ॥ १४ ॥

स्थूलरेखा सुखकरी सूक्ष्मा दुःखप्रदायिनी ।
रेखाच्छेदो भवेत् प्रष्टुः सुखकार्यविघातकः ॥ १५ ॥

**शुद्धेति** ॥ शुद्धं धवळम् । तण्डुलमिति धान्यस्याप्युपलक्षणम् । आदिशब्देन केरफलतांबूलपूगाष्टमङ्गलादिसङ्ग्रहः । समे निम्नोन्नतत्वरहिते । सुमृष्टसंसिक्ते यथाविभवं वितानालंकृतत्वादेरपीदमुपलक्षणम् । चक्रं राशिचक्रम् । लिखतु कर्तृविशेषानभिधानात् परिचारकोन्यो वा । न तु दैवज्ञ इति कर्तृकल्पनमुचितम् । चक्रलेखनोक्तप्रकारशुभाशुभानवगमप्रसङ्गात् । तच्छुभाशुभाभिज्ञस्य तत्प्रवृत्त्यनौचित्यात् । अत एव वक्ष्यति 'राशिग्रहस्थितिज्ञानशून्यो वा कश्चने'ति स्वर्णविन्यसनस्थले ॥ ११ ॥

**हस्तेति** ॥ हस्तप्रमाणे हस्तश्चतुर्विंशत्यंगुलपरिमितः । तत्प्रमाणे । चतुरश्रखण्डे समचतुरश्र खण्डे । षडंगुलांशैः अंगुलषट्कपरिमितैरंशैः । दळानि षोडश । विभजेत् समविभागानि कुर्यात् । इह मध्ये चतुर्भिर्दळैः चतुर्दळं पद्ममस्तु । पद्माकारतया कल्पयेत् । अन्यानि द्वादश अजपूर्वभानि मेषादयो राशयः कल्प्याः । ईशकोणस्थखण्डतो दक्षिणदण्डादारभ्य मेषादयो राशयः कल्प्याः । एवं चेशकोणे मीनराशिः स्यात् ॥ १२ ॥

**केचिदिति** ॥ अनेन भस्मनैव लेखनं सांप्रदायिकमिति सिध्यति ॥ १३ ॥

**प्रदक्षिणतयेति** ॥ अनुलोमविलोमेन पूर्वं प्रादक्षिण्येन कञ्चिद्भागं विलिख्य पुनरप्रादक्षिण्येन लेखने इत्यर्थः । विघ्नसंभवः । नत्वभीष्टकार्यासिद्धिः किन्तु मध्ये विघ्नसद्भावादिलंब एव ॥ १४ ॥

**स्थूलरेखेति** ॥ सुखस्य कार्यस्य च विघातकः ॥ १५ ॥

लिखिता सौम्यरेखा प्राग्यदि नूनं धनागमः ।
वारुणी यदि रोगाग्निरैन्द्री चेत्सन्ततिर्भवेत् ॥ १६ ॥
याम्यरेखा यदि भवेन्मरणायैव पृच्छताम् ॥ १७ ॥
चक्रस्य यत्र निम्नत्वमौन्नत्यं वापि दृश्यते ।
प्रष्टुर्निवासभूमिश्च तत्र तत्र नतोन्नता ॥ १८ ॥

चक्रे यत्र तृणानि तत्र तरव-
स्तत्रांबुसिक्ते जलं
ग्रावा यत्र शिलेह यत्र सिकता-
स्तत्र स्थलं चोन्नतम् ।
केरा वा खलु नालिकेरसदृशा-
काराः परे भूरुहो
वल्मीकोत्र पिपीलिकाहृतमृदो
यत्र क्षितौ पृच्छताम् ॥ १९ ॥

संस्पर्शनाद्यैरपि चक्रकर्तुः
प्रष्टुः क्षितेर्लक्ष्म विचारणीयम् ।

**लिखितेति** ॥ सौम्या उत्तरा । वारुणी पश्चिमा । ऐन्द्री पूर्वा । याम्या दक्षिणा ॥

**चक्रस्येति** ॥ यत्र भागे । निवासभूमिश्च चक्रवत् तत्र तत्र भागे नतोन्नता स्यात् । चक्रगतविशेषः पृच्छकगृहे समालोच्य यथोचितमादेष्टव्यः । एतदेवानुपदं विव्रियते ॥ १८ ॥

**चक्र इति** ॥ तृणानि पतितास्तृणखण्डाः । अम्बुसिक्ते जलेनार्द्रे । जलं कूपतटाकादिगतम् । ग्रावा लघीयश्शिलादि । सिकता यत्र भागे तत्र भागे स्थलमुन्नतम् । केराः केरवृक्षाः । भूरुहो वृक्षाः । पिपीलिकाभिराहृता मृदो यत्र अत्र भागे वल्मीकः । एवमादिदृश्यतां युक्त्यालोच्योच्यताम् । यत्र क्षितौ पृच्छतामिति वा पाठः ॥ १९ ॥

**संस्पर्शनाद्यैरिति** ॥ चक्रलेखनानन्तरं लेखनकर्ता प्रथमं यत्रकुत्रचित् स्पर्शनादिकं यत्कर्म करोति तेन पृच्छकसंबन्धिलक्षणकथनपरमेतत् । एषा भूमिः पृच्छकसंबन्धिनी पृच्छकावासभूता च । स करः यदि सांगुलीयः इति योजना । वल्लीपरिवेष्टिताङ्गा इति

विलिख्य चक्रं प्रददाति किञ्चि-
द्द्रव्यं परस्मै यदि भूमिरेषा ॥ २० ॥
परस्वतामेष्यति यत्परस्मा-
दादानमन्यक्षितिलाभशंसि ।
यद्युद्धरेत्स्वाभिमुखं प्रसार्य
हस्तं नगाः स्युर्यदि सांगुलीयः ॥ २१ ॥
करः स वल्लीपरिवेष्टिताङ्गा
ग्रीवा विभूषालभनेपि तद्वत् ।
शाखाविहीनास्तरवोऽङ्गुलीना-
माकुञ्चने स्थाणव एव मुष्टौ ॥ २२ ॥
मुखरोमार्द्धछिन्नं
स्पृशेद्यदि वदेत्सकण्टकान् वृक्षान् ।
नासाश्रवसो रन्ध्र-
स्पर्शे तु विलं भुजङ्गमाखूनाम् ॥ २३ ॥
केशान् विश्लथितांश्च रोम मुखजं
यद्वा स्पृशेन्निर्दिशे-
न्मुञ्जोशीरकुशादिकानपि नसो
वल्मीकमामर्शने ।

---

नगा इत्यस्य विशेषणम् । तद्वत् वल्लीपरिवेष्टिताङ्गा इत्यर्थः । स्थाणवः शाखास्कन्धादिहीना वृक्षाः ॥ २०–२२ ॥

**मुखेति** ॥ सकण्टकान् कण्टकसहितान् किंशुकादीन् । श्रवः कर्णः । नासास्पर्शे लक्षणान्तरमपि वक्ष्यति । भुजङ्गमाखूनां विलं तदावासभूतम् ॥ २३ ॥

**केशानिति** ॥ विश्लथितान् गलितबन्धानिति केशविशेषणम् । मुखजमिति रोमविशेषणम् । मुञ्जा मेखलातृणविशेषः । कुशो दर्भजातिविशेषः । नसः आमर्शने वल्मीकमिति योजना । नसो नासिकायाः । 'पद्द'मिति नसादेशः । अविशेषाभासाद-न्ननासारन्ध्रयोरुभयोरपि ग्रहणम् । रन्ध्रस्योक्तत्वात्पारिशेषिकादण्डस्यैवेत्यन्ये । रन्ध्रस्पर्शे

मेढ्रक्रोडदृशां कुचास्यविलयो-
श्चामर्शनेन्तर्जलं
प्रष्टुर्वास्त्वनिशोघदम्बु कथयेत्
स्विन्नाङ्गसंस्पर्शने ॥ २४ ॥

कक्षापानस्पर्शने वारि दुष्टं
बाहून्नत्यां भूरुहोतीव दीर्घः ।
हस्तानत्यां तत्र वृक्षोतिखर्वो
लोहानि स्युः स्पर्शने दन्नखानाम् ॥ २५ ॥

जान्वादिकेङ्गेस्थियुते स्पृशेच्चेत्
पाषाणजालैर्निचितास्थिभिश्च ।
नाभ्यादिनिम्नावयवाभिमर्शे
श्वभ्रान्विता पृच्छकभूः सकुल्या ॥ २६ ॥

फलविकल्पोस्तिवत्यपरे । आमर्शने स्पर्शने । क्रोडमुदरम् । मेढ्रादीनां स्पर्शने प्रष्टुर्वास्तु समीचीनजलयुक्तम् । स्विन्नाङ्गं स्वेदयुक्तनिजाङ्गम् ॥ २४ ॥

**कक्षेति** ॥ अपानो गुदम् । दुष्टं वारि । प्रष्टुर्वास्तुनीति शेषः । अतीव दीर्घः शाखादिवैरल्यमपि लक्ष्यते । खर्वो ह्रस्वः । लोहानि ताम्रायस्त्रपुप्रभृतीनि । दन्नखानां दन्तानां नखानां च । 'पद्दन्नोमासि'त्यादिसूत्रेण दन्तशब्दस्य ददादेशः । तत्र 'शस्प्रभृतिषु' इत्युक्तत्वात्, अत्र च प्रत्ययपरत्वाभावात् । कथं ददादेशः इति चेत्प्रभृतिग्रहणस्य प्रकारार्थकत्वादिति गृहाण । प्रकारः सादृश्यम् । तच्च प्रत्ययत्वेन । समासघटकपदानां पदत्वसम्पादनाय यथान्तर्वर्तिविभक्तिप्रत्यया गृह्यन्ते । तद्वदत्रापि आदेशसम्पादनाय 'सुपो धातुप्रातिपदिकयोः' इत्यनुशासनेन लुप्तोपि प्रत्ययः आश्रीयतां नाम । अत एव 'मांस्पचन्या उखायाः' इति भाष्यग्रन्थोपि सङ्गच्छते । आदेशा एते केवलं छान्दसाः, न तु लौकिकाः इति पुनरपि यदि प्रत्यवस्थीयते । तर्हि कैयटमतानुसारेण लोकेपि प्रयोगो न दुष्ट इति परिचीयितां कैयटग्रन्थः । स तु स्थितगतिसाधक एवेति पुनरपि यदि बध्यते मर्कटमुष्टिस्तर्हि स्थितमाचार्यवचनमेवेदानीं साध्यतेस्माभिः । न तु प्रयुज्यते स्वयमित्येतावता सन्तुष्यन्तु भवन्त इत्यलम् ॥ २५ ॥

**जान्विति** ॥ जान्वादिके अस्थियुते अङ्गे स्पृशेच्चेत् पृच्छकभूः पाषाणजालैरस्थिभिश्च निचितेति संबन्धः । निचिता व्याप्ता । श्वभ्राणि बिलानि । कुल्याः कृत्रिमाल्पसरितः । ताभिस्सहिता ॥ २६ ॥

जानुस्थं वामबाहुं मृगमपि परशुं
ज्ञानमुद्रां वहन्तं
नागोद्यद्योगवेष्टं दददमृषिगणे
ज्ञानमीशानमीडे ॥ ३२ ॥

मेषाद्या राशयः स्वस्वस्थाने स्वाश्रितभे ग्रहाः ।
परिवारतया पूज्या गुळिकश्च स्वनामभिः ॥ ३३ ॥

ब्रह्मार्पणान्ते वाग्देवीं गुरूंश्चाप्यष्टमङ्गले ।
पुष्पैराराध्य वन्देत प्रदीपे च तथा श्रियम् ॥ ३४ ॥

स्योपरि । ऋषिगणे शुकमुनिमुखमहर्षिसमूहे सम्प्रदानस्याप्याधिकरणत्वविवक्षया सप्तमी । "अनेकशक्तियुक्तस्य विश्वस्यानेककर्मणः । सर्वदा सर्वदाभावात् कदा किंचिद्विवक्ष्यते" । इत्यनुशासनात् । नागः सर्पः । स एवोद्यन् योगवेष्टः योगपट्टबन्धो यस्य तम् । अत्र मेषादिराशीनां सूर्यादीनां नवानां ग्रहाणां गुळिकस्य च परिवारतया परिकल्पनमावश्यकम् । तत्त्वेन तत्पूजाया अनन्तरश्लोके वक्ष्यमाणत्वात् । ईडे इत्यनेन ध्यानमेव प्राधान्येन विवक्षितम् । औपचारिकं तत् पदम् । तत्रैवं ध्यानमिति अवतारितत्वात् । धात्वर्थः स्तुतिस्त्वानुषङ्गिकी बोध्या ॥ ३२ ॥

**मेषाद्या इति** ॥ पूज्याः जलगन्धपुष्पैरिति शेषः । स्वनामभिः । 'मेषाय परमेश्वरपरिवाराय नमः' इत्यादि मन्त्रोच्चारणपूर्वकमित्यर्थः । 'परिवारतया' इति वचनेन परिवारत्वं परिकल्पनीयमेव । न तु मन्त्राङ्गतया योज्यम् । अतो मेषाय नमः इत्यादय एव ग्राह्याः । एतदाशयेनैव स्वनामभिरित्युक्तमित्यन्ये । अत्र राशिपूजायां 'कन्यायै' इति लिङ्गविशेषो मीनाभ्यामिति वचनविशेषश्चाश्रीयेते इति सांप्रदायिकः पन्थाः । ग्रहपूजायां तु 'आसत्येने'त्यादिकास्तत्तदृचोपि ग्राह्या इत्यपरे । तुलाधनुःकुम्भानां नामसु 'तुलाधराय नमः' इत्यादिविधया धरशब्दोप्यनुप्रयोज्यः । आचारानुरोधात् ॥ ३३ ॥

**ब्रह्मेति** ॥ ब्रह्मार्पणं पूजान्ते क्रियमाणं कर्म । तदन्ते वाग्देवीं सरस्वतीम् । अष्टमङ्गले धवळवसनमुकुरसमुद्गकपुस्तकाद्यष्टकरूपे चक्रपार्श्वविन्यस्ते आराध्य 'वाग्देव्यै नमः' इत्याद्युच्चारणपूर्वकमित्यर्थः । प्रदीपे तत्पुरतः ॥ ३४ ॥

अथ प्रक्षाल्य तोयेन स्वर्णं चन्दनभूषितम् ।
पत्रे विन्यस्य कुसुमैरक्षतैरपि योजयेत् ॥ ३५ ॥
वामहस्ते निधायाथ विधायान्येन पाणिना ।
पञ्चाक्षरीं साष्टशतं मनूनन्यांश्च भक्तितः ॥ ३६ ॥
जप्त्वाथैकत्र विन्यस्य प्रारभेताष्टमङ्गलम् ।
संक्षेपेणाथ तत्कर्म कथ्यते गुरुणोदितम् ॥ ३७ ॥
कृत्वा दक्षिणतो राशिचक्रं प्राङ्मुख आसने ।
आसीनः फलकेऽभिन्ने वराटीस्साष्टकं शतम् ॥ ३८ ॥
निधाय मन्त्रवत्प्रोक्ष्य गन्धपुष्पाक्षतैश्च ताः ।
अलंकृत्यार्चयेत्तासु शिवमावाह्य चक्रवत् ॥ ३९ ॥
प्रागाद्याशासु सूर्यारार्यज्ञाच्छार्किविधूरगान् ।
अपि संपूज्य ताः स्पृष्ट्वा स्पृष्ट्वा साष्टशतं जपेत् ॥ ४० ॥
पञ्चाक्षरीं मनूनन्यानपि गुर्वाननाच्छ्रुतान् ।
ततः संप्रार्थयेद्देवं गुरूनपि निजान् ग्रहान् ॥ ४१ ॥

---

**अथेति** ॥ स्वर्णं तन्मयमुद्रां तत्तत्कालसुलभाम् । चन्दनभूषितम् । कृत्वेत्यध्याहृत्य योजना । अक्षतानि त्रिभागधान्यसंमिश्रार्द्रतण्डुलानि ॥ ३५ ॥

**वामहस्त इति** ॥ निधाय विन्यस्तस्वर्णमुद्रं पत्रमिति कर्म लभ्यते । औचित्यात् । साष्टशतं अष्टोत्तरशतावृत्त्या । अन्यान् मनून् यथोपदेशं मन्त्रान्तराणि । अष्टमङ्गलं वक्ष्यमाणं तत्कर्म । उदितमुपदिष्टम् ॥ ३६,३७ ॥

**कृत्वेति** ॥ राशिचक्रं दक्षिणतः कृत्वा राशिचक्रस्योत्तरभागे इत्यर्थः । अभिन्ने छेदभेदादिरहिते श्लक्ष्णे । साष्टकं शतं वराटीः अष्टोत्तरशतपरिमिता वराटिकाः । अभिन्ने फलके निधाय । मन्त्रवत् स्वस्वगृहीतमन्त्रसहितम् । प्रोक्ष्य मन्त्रितेन जलेनेत्यर्थः । ता वराटीः चक्रवत् चक्रे इव 'कैलासाद्रीशे'त्यादिश्लोकोक्तप्रकारेणेत्यर्थः । फलके अभिन्ने इति पदच्छेदः । अन्ये तु फलके भिन्ने इति छित्वा निजासनभूतात् फलकादितरस्मिन् फलक इति व्याचक्षते । तन्नादिहृद्यम् । निजासनस्य फलकमात्रत्वे तात्पर्यायोगात् । चर्मासनादेरपि प्राह्यत्वोपपत्तेः ॥ ३८, ३९ ॥

**प्रागाद्याशास्विति** । प्रागाद्याशासु वराटिकासंघातस्यैन्द्र्याद्यष्टादिक्षु सूर्यादीन् क्रमेण सम्पूज्य । ता वराटीः । स्पृष्ट्वा स्पृष्ट्वा प्रादक्षिण्येन वराटीसंघातं परिमृशन्नित्यर्थः । साष्टश-

एतन्नक्षत्रसंजातस्यैतन्नाम्नोस्य पृच्छतः ।
भूते च वर्तमाने च समये च भविष्यति ॥ ४२ ॥
शुभाशुभानि चेदानीं चिन्तितस्य विशेषतः ।
सम्भवासम्भवाद्यन्यान्यर्थपुत्रगृहादिषु ॥ ४३ ॥
शुभाशुभानि यान्येतान्यखिलान्यपि तत्वतः ।
युष्मत्प्रसादतः स्पष्टं मम चित्ते स्फुरन्त्विति ॥ ४४ ॥
ततः कन्याकुमारो वा स्नात्वा वस्त्राद्यलंकृतः ।
राशिग्रहस्थितिज्ञानशून्यो वा कश्चनापरः ॥ ४५ ॥
उपेत्याराधयेत् पुष्पैर्दीपविघ्नखगेश्वरान् ।
ततोस्य दक्षिणे हस्ते स्वर्णं साक्षतपुष्पकम् ॥ ४६ ॥
दद्यादेतद्वहन् सोपि कृत्वा चक्रप्रदक्षिणम् ।
पश्चात्समीपतस्तिष्ठेच्चक्रस्य प्राङ्मुखः सुधीः ॥ ४७ ॥
ततः प्रष्टा निजाभीष्टं ध्यायंस्तिष्ठतु साञ्जलिः ।
दैवज्ञोथ स्मरन् प्रष्टुरभीष्टं ता वराटिकाः ॥ ४८ ॥
संस्पृशन् संस्पृशन् मन्त्रं मूर्तित्वेपूर्वकं जपेत् ।
त्रिवारं तज्जपस्यान्ते दूतं ब्रूयान्न्यसेरिति ॥ ४९ ॥

---

तमष्टोत्तरशतावृत्या । एवं वक्ष्यमाणश्लोकत्रयोक्तप्रकारेण । एतदो: स्थाने नक्षत्रनामनी संयोज्ये । अश्विनीनक्षत्रसंजातस्य नारायणशर्मनाम्नः इत्यादि ॥ ४०—४४ ॥

**तत इति** ॥ कन्या अनूढा । कुमारः अप्राप्तयौवनः । वस्त्रादिभिरलंकृत: शुभ्रवस्त्रपरिधानवान् भस्मचन्दनादिधारी अंगुलीयाद्यलङ्कारवांश्च । उपेत्य चक्रसमीपं प्राप्य । दीपं विघ्नेश्वरं गणपतिं खगेश्वरान् सूर्यादिग्रहांश्च । अरय लिङ्गमविवक्षितम् । दद्यात्पश्चाक्षरीजपादिकर्तार्चकोत्र कर्तृत्वेन विवक्षित: । चक्रप्रदक्षिणं राशिचक्रस्य प्रदक्षिणत्रयमित्यर्थः । पश्चात्पश्चाद्भागे । सुधीरवहितबुद्धिः प्राङ्मुखः । राशिचक्रदत्तदृष्टिः दैवज्ञवचनप्रतीक्षिश्रोत्रश्च ॥

**तत इति** ॥ प्रष्टा पृच्छकः तत्सम्बन्धी वा । ता वराटिकाः प्रोक्षणमन्त्रजपादिसंस्कृतवराटीः । मूर्तित्वेपूर्वकं "मूर्तित्वे परिकल्पित" इति बृहज्जातकप्रथमश्लोकरूपम् । तज्जपस्य मन्त्रजपस्य । दूतं स्वर्णविन्यासकर्तृपरोत्र दूतशब्दः । न्यसेः इति ब्रूयात् । त्रिवारमित्यत्रापि संबध्यते ॥ ४८, ४९ ॥

तदैव विन्यसेद्दूतः स्वर्णं निजकरस्थितम् ।
चक्रस्थभेषु चैकत्र दैवज्ञस्ता वराटिकाः ॥ ५० ॥
विभजेत्त्रिरुदक्पूर्वं निमित्तानि च चिन्तयेत् ।
प्राक्पृच्छासमये यद्यच्छुभाशुभमुदीरितम् ॥ ५१ ॥
तत्तत्सकलमत्रापि चिन्त्यं स्पर्शशरादिकम् ।
अथ दूतः पदच्छायामानं कुर्यात्समाक्षितौ ॥ ५२ ॥
यस्मिन् राशौ स्थितं स्वर्णं स स्यादारूढसंज्ञकः ।
ज्ञात्वा दैवविदारूढं स्वर्णस्योत्तानतादि च ॥ ५३ ॥
पृच्छकाय फलं किञ्चित्प्रोच्य पूजां समाप्य च ।
वराटीरष्टशस्त्यक्त्वा स्थानत्रितयतः पृथक् ॥ ५४ ॥
शिष्टसंख्यामपि ज्ञात्वा रक्षणीया वराटिकाः ॥ ५५ ॥
आरूढं स्वर्णसंस्थानं छायामप्यष्टमङ्गलम् ।
विलिखेन्मासयाताहःभष्टतारापुरस्सरम् ॥ ५६ ॥

**तदेति** ॥ तदैव दैवज्ञकथनसमकालमेव। एकत्र राशिचक्रस्थितेषु मेषादिषु द्वादशसु अन्यतमे राशौ । त्रिः विभजेत् त्रिधा विभक्ताः कुर्यात् । उदक्पूर्वं प्रथमो भागः उत्तरे द्वितीयो मध्ये तृतीयो दक्षिणे च स्थाप्यः । चिन्तयेत् । एतद्विवरणमेव प्रागित्युत्तरश्लोकेन कृतम् । शरशब्देन श्वाससञ्चारो विवक्षितः । दूतः समशरीरः कश्चिदेवात्र विवक्षितः । समक्षितौ निम्नोन्नतत्वादिरहिते भूभागे । पदच्छायाशब्देनांगुलयवादयोऽपि विवक्षिताः ॥

**यस्मिन्निति** ॥ स्थितस्वर्णो राशिः । दैवविदा आरूढमिति छेदः । उत्तानतादीत्यादिशब्देन पुष्पाक्षतसंबन्धतदसंबन्धभूस्पर्शतदभावांशकविभागादयो ग्राह्याः । किञ्चित्फलं यत्किञ्चन शुभाशुभरूपं फलम् । समाप्य उद्वासनादिनेति शेषः । स्थानत्रितयतः उदङ्मध्यमदक्षिणभागत्रयस्थवराटीसंघातात् । अष्टशः वराटीः त्यक्त्वा अष्टावष्टौ वराटिकाः पृथङ्नीत्वा । शिष्टसंख्यां ज्ञात्वा । अत्र तांबूलसंख्यातद्गुणदोषादिविवरणपूर्वकं तदीयशुभाशुभफलविवरणं तदात्व एव विधेयम् । अन्यथा पुनस्तांबूलानां शोषणादिना यथार्थज्ञानस्य दुःशकत्वात् ॥ ५३—५५ ॥

**आरूढमिति** ॥ मासेति संवत्सरस्याप्युपलक्षणम् । ताराशब्देन गृहनामसांस्कारिकनाम इत्यादयोऽपि ग्राह्याः। दीपलक्षणं तत्काललक्षणं तांबूलसंख्यातांबूलस्वभाव इत्यादीनां स्वरूपं विलेखनमप्यावश्यकमिति बोध्यम् ॥ ५६ ॥

यदत्र कथितं कर्म चक्रलेखनपूर्वकम् ।
संक्षेपेण तदेवाथ पुनरप्युच्यते क्रमात् ॥ ५७ ॥
विलिख्य चक्रं प्रविकीर्य चाक्षतं
संपूज्य भक्त्याथ कृतेष्टमङ्गले ।
आराध्य राशिं कनकेन संस्पृशेत्
प्रष्टा वराटीर्विभजेच्च दैववित् ॥ ५८ ॥
रक्तानि कुसुमान्यत्र गृह्यन्ते कैश्चनापरैः ।
शुक्लानि दृश्यते प्रायेणाद्य तुम्बाभिधार्तवम् ॥ ५९ ।

॥ इति प्रश्नमार्गे चतुर्थोऽध्यायः ॥

---

**यदिति** ॥ वक्ष्यमाणश्लोकस्यावतारिकारूपोयं श्लोकः ॥ ५७ ॥

**विलिख्येति** ॥ प्रथमं चक्रलेखनम् । पुनश्चक्रस्थराशिष्वक्षताविकिरणम् । पुनर्भक्तिश्रद्धाभ्यां पूजनम् । पुनरष्टमङ्गलार्थवराटिकापूजनम् । पुनस्स्वर्णविन्यासकर्तुः दीपादिपूजानन्तरं स्वर्णविन्यसनम्; दैवज्ञस्य वराटिकासंघातात्रिधाविभागः । अष्टमङ्गलशब्देन त्रिधाविभक्तानां वराटिकानां अष्टशः परिशोधनेन लभ्यमाना संख्या गृह्यते । कृतेष्टमङ्गल इत्यत्र तु तदर्थसङ्गीकरणमात्रं विवक्षितम् । अन्यथा पुनर्वक्ष्यमाणवराटीविभागानुपपत्तिप्रसङ्गात् । वराटीविभागस्य दैववित्कर्तव्यत्वं सनिर्बन्धमिति द्योतयितुं तत्र विशिष्य दैवविदिति कर्तोपात्तः। चक्रविलेखनाद्यष्टमङ्गलार्थवराटीपूजान्तक्रियाकलापे तु दैवविदोऽन्यस्य वा तन्त्रप्रवीणस्य कर्तृत्वमुपपद्यत एवेति ध्वनयितुं तत्र कर्तुरनुपादानम् । अक्षतप्रविकरणं पूर्वं यद्यपि कण्ठतो नाभ्यधायि तथापि प्रसिद्धत्वादत्र सङ्ग्रहे प्रदर्शितत्वात्पूजाकर्मण्यत्युपयुक्तत्वाच्च विधेयमेव । 'चक्रं विलिख्ये'ति पूर्वोक्तपद्ये विलेखनं अक्षतप्रविकरणस्याप्युपलक्षणमिति वा व्याख्याय सन्तुष्यन्तु सन्तः । साम्प्रतं तु तत्सर्वत्र प्रश्नकर्मणि मुख्यतया आचर्यत इति सर्वसम्मतः सांप्रदायिकः पन्थाः ॥ ५८ ॥

**रक्तानीति** ॥ शुक्लानीति पूर्वान्वयि । शुक्लानि ग्राह्याणि तत्रापि विशिष्य तुम्बप्रसूनानीत्याचार्याभिप्रायः। 'धृतसितवासाः' 'शुद्धतण्डुल' इत्यादिभिर्धवळवस्तूनां शोभनत्वं रक्तप्रसूनभृदपि व्यसनं प्रयाति इत्यादिभी रक्तवस्तूनामशोभनत्वं चौत्सर्गिकं बोध्यम् ॥५९॥

॥ इति चतुर्थोऽध्यायः ॥

-:o:-

# अथ पञ्चमाध्याय प्रारम्भः ॥

अथ लग्नानयनादिकमुच्यते ॥

प्रश्नकालविलग्नस्य स्फुटावगमने सति ।
फलादेशस्य साफल्यं तथा शास्त्रान्तरोदितम् ॥ १ ॥

तन्त्रे सुपरिज्ञाते
लग्ने छायांबुयन्त्रसंविदिते ।
होरार्थे च सुरूढे
नादेष्टुर्भारती वन्ध्या ॥ इति ॥ २ ॥

तत्र प्रथमं दिनगतनाडिकानोतिरुच्यते ।

छायां तत्कालजां न्यस्य त्यक्त्वा वाक्यं तदूर्ध्वगम् ।
तच्छेषमङ्गुलीकृत्य षष्ठ्या हत्वा विभाजयेत् ॥ ३ ॥
तत्कालाग्रिमभापार्श्ववाक्ययुग्मान्तरांगुलैः ।
लब्धा विनाडिकास्त्यक्तवाक्यनाड्याः परित्यजेत् ॥ ४ ॥

---

**अथेति** ॥ पृच्छानिर्गमेत्याद्युद्देशक्रमानुसारेण प्रश्नक्रियानन्तरं सूत्रस्फुटादिनिरूपणस्य कर्तव्यत्वात्तदुपयोगिनां लग्नस्फुटादीनामानयनमावश्यकमिति तत्क्रियत इत्यर्थः ॥

**प्रश्नेति** ॥ सति सत्येव । अन्यथा तद्वैफल्यमिति भावः ॥ १ ॥

**तन्त्र इति** ॥ तन्त्रे सूर्यसिद्धान्तादिके सुपरिज्ञाते सुष्ठु परीक्ष्यावगते । छायांबुयन्त्रेति घण्टामण्यादीनामप्युपलक्षणम् । होराः पराशरादिकृताः । सुरूढे सुष्ठु विज्ञाय कण्ठस्थे । भारती फलादेशरूपा वन्ध्या अयथार्था ॥ २ ॥

**तत्रेति** ॥ तत्र लग्नानयने । नाडिकाशब्दो विनाडिकादीनामप्युपलक्षकः । सूर्योदयादारभ्य स्वर्णविन्यसनकालपर्यन्तं इयत्यो नाडिका इयत्यो विनाडिकाश्च गता इति तदात्वगृहीतच्छायाप्रमाणेन ज्ञातुमुपायः प्रदर्शित इत्यर्थः ॥

**छायामिति** ॥ छायामित्यारभ्य अंगुलैरित्यन्तं त्रैराशिकम् । तत्र अन्तरांगुलानि प्रमाणानि । षष्टिर्विनाड्यस्तत्फलम् । तत्कालच्छायाया ऊर्ध्वगवाक्यशोधने शिष्टं इच्छाराशिः । वाक्यं तु 'सिंहाजगते दिनपे' इत्यारभ्य ज्योतिश्शास्त्रसुबोधिन्यां प्रकटितम् । तत्र

लभ्यन्तेहस्तदा याता नाडिकाश्च विनाडिकाः ।
ततस्तत्कालसूर्यस्य गम्यलिप्तांशकान् हरेत् ॥ ५ ॥
अर्कयुक्तर्क्षहारेण लभ्यतेर्कोदयात् परम् ।
नाड्यादिकं हि तद्राशेरेतद्दिनगतात्त्यजेत् ॥ ६ ॥
ऊर्ध्वराशिप्रमाणानि त्याज्यान्यपि ततस्त्यजेत् ।
शेषं तद्राशिहारघ्नं लग्नं स्याद्गतराशियुक् ॥ ७ ॥
कुन्दानिघ्ने पृथग्लग्ने प्रष्टृतारा न चेद्भवेत् ।
क्षिप्त्वा काश्चित्कलास्त्यक्त्वा वानेयं प्रष्टृजन्मभम् ॥ ८ ॥
ऊर्ध्वासन्ने क्षिपेत्त्याज्या अधश्चेत्पृच्छकोडुनि ।
स्वर्णं दशदशैकैकनक्षत्रस्येह लिप्तिकाः ॥ ९ ॥
चन्द्रे परहितानीते वीरलिप्तासमन्विते ।
"कालभीमतिशोभाङ्गाये"ति कन्याझषार्कतः ॥ १० ॥

---

राश्यन्तरस्थिते सूर्ये सूक्ष्मम् । किंच यत्र दुष्करमिति पलांगुलं तं प्रमाणीकृत्य देशं विरचितम् । अतो देशतः कालतश्च तस्य वाक्यस्यास्फुटत्वमवसेयम् । किंच त्रैराशिकमप्येतत्स्थूलमेव । छायाया क्रमेण सङ्कोचसद्भावात् । एवं च तत्स्फुटीकृतये छायागणितमेवाश्रयणीयम् । राश्यंशकादीनां सन्धिगतत्वाभावे एतदानीतदिनगतनाडिका अपि कथञ्चिदुपयोक्तव्या भवेयुः । निर्दिष्टप्रकारेण छायागणितेन वा साधिता दिनगतनाडिका लेखनीयाः । 'तत' इत्यारभ्य सूर्योदयराशेस्सूर्योदयात्परं कियदवशिष्टमिति ज्ञातुं त्रैराशिकमेव विधीयते । दिनगतादुदयराशिशिष्टं यावच्छक्यमूर्ध्वराशिप्रमाणान्यपि विशोध्यावशिष्टमुदयराशिगतं स्यात् । शेषमित्यर्धश्लोकेन लग्नस्फुटानयनमपि त्रैराशिकरीत्यैव । राशिप्रमाणानां राशिहारकाणां च देशकालाभ्यां भेदः स्यादिति वस्तुस्थितिर्न विस्मर्तव्या ॥ ३–७ ॥

**कुन्देति** ॥ लग्नस्फुटस्य सूक्ष्मत्वाधानाय क्रियेयम् । अत्र प्रष्टृताराशब्देन पृच्छकस्य जन्मनक्षत्रमनुजन्मनक्षत्रे च गृह्यन्ते । क्षेपत्यागयोः क्रमोनन्तरश्लोकेन वक्ष्यते ॥ ८ ॥

**ऊर्ध्वासन्न इति** ॥ अधः आसन्ने इति समस्तात्पृथक्कृत्य योज्यम् । दश दश लिप्तिका इति प्रायिकम् । दशनिघ्नकुन्दसंख्याकलिप्तानां षष्टेर्नाडिकाभ्यः किञ्चिदाधिक्यसद्भावात् । एवं क्षिप्तानां त्यक्तानां वा लिप्तानां संख्यामनुसृत्य दिनगतेपि किञ्चिद्विनाडिकानां क्षेपस्त्यागो वा विधेय इति तत्त्वम् ॥ ९ ॥

**चन्द्र इति** ॥ वीर इत्यक्षरसंख्यया चतुर्विंशतिः । 'कालभीमतिशोभाङ्गाय' इत्यक्षरसंख्यालभ्या एकत्रिचतुरादिसंख्याः क्रमेण कन्यामीनमासयोः दशमदिनादारभ्य प्रश्ने कं

प्रारभ्यर्णं धनं वीणाचापार्कादृहग्विधुर्भवेत् ।
कोळम्बे मुरहासंख्ये चन्द्रे वीरयुतिर्मता ॥ ११ ॥
सुंभाब्देष्वथ यातेषु संयोज्यैकैकलिप्तिका ॥ १२ ॥

एतद्दृक्चन्द्रानयनं कण्ठाभरणे स्पष्टमुक्तम् । तदपि लिख्यते ।

कोळम्बोसुकलान्तरैरयनयुक्-
तत्कालसूर्योद्भवैः
सौम्यप्रियभाजितैरहितयु-
ग्भास्वद्भुजाकोटितः ।
संयुक्तः शिवकेन वाक्यभिदया
निघ्नो धनेशैर्हृतो
लिप्तायां खलु योजितः परहित-
ग्लावः सदृक्चन्द्रमाः ॥ इति ॥ १३ ॥

दशसु दशसु दिनेषु संस्कार्याः । अत्र कन्यादशमदिनादारभ्य चापदशमदिनान्तं मीनदशमदिनादारभ्य मिथुनदशमदिनान्तं च चन्द्रस्फुटाच्छोध्या, शिष्टमासषट्के चन्द्रस्फुटे योज्या च । परहितगणितरीत्या अहर्मानानयने रविभुजज्याचरावेव गृह्येते । न तु प्राणकलान्तरज्या । दृग्गणितरीत्या तु प्राणकलान्तरज्यापि गृह्यते । इति तत्समीकरणार्थमयं संस्कारः । तत्रायनचलनस्य प्रकृतग्रन्थप्रणयनकालभवं विंशतिभागात्मकत्वं प्रमाणीकृत्य कन्यामीनमासयोः दशमभागोवधितया गृहीतः । अर्क इत्यक्षरसंख्यया दशमभागश्चोच्यते । साम्प्रतं तु कालवशादयनचलनस्य प्रायो द्वाविंशतिभागात्मकत्वमिति भागाष्टकमेवावधितया ग्राह्यमिति वेद्यम् । सुंभाब्देषु अत्राक्षरसंख्यया सुंभशब्देन सप्तचत्वारिंशदुच्यते तावतां वत्सराणामेकैककलासंयोग इत्येतदपि स्थूलमेव । तत्स्थौल्यं तु दृक्करणपरहितकरणसिध्यमानयोश्चन्द्रध्रुवयोरन्तरपर्यालोचने व्यक्तीभवेत् । करणनिपुणानां दैवज्ञानां केवलमयं वास्तवो व्यत्यासो विज्ञेय इत्यलम् ॥ १०–१२ ॥

**एतदिति** ॥ कण्ठाभरणं नाम ग्रन्थान्तरम् ॥

**कोळंब इति** ॥ परहितग्लावः परहितचन्द्रस्य लिप्तायां योजितः । रहितयुगिति कोळम्बविशेषणम् । तरळाङ्कसंख्यान्यूनः कल्यब्दः कोळम्बाब्दतया ग्राह्यः । सौम्यप्रियशिवकशब्दा अक्षरसंख्यया सप्तदश-द्वादश-पञ्चचत्वारिंशदधिकशतानां वाचकाः । धनेशशब्दोपि नवाधिकपञ्चशतस्य । वाक्याभिदया वाक्यान्तरेण । अत्र "गीर्नश्श्रेय" इत्यादि

मान्दि-कालघटिकाम्यां (?) खेचरज्यां विभजेत्त्रिभिः ।
लब्धा विनाडिकास्ताभिर्हत्वा मान्दिघटीः पृथक् ॥ १४॥
हरेन्नीलैर्विघटिका लब्धा स्वर्णं यथाक्रमम् ।
मान्दिनाड्यां सायनार्के मेषजूकादिसंस्थिते ॥ १५ ॥
मान्दिनाड्यस्तदा स्पष्टास्ताभिस्तु गुळिकस्फुटम् ।
आनेतव्यं यथा लग्नं नाड्या दिवसयानया ॥ १६ ॥
एवं लग्नं विधुं मान्दिमानीय विलिखेत्पृथक् ।
तेषां त्रयाणां संयोगस्त्रिस्फुटं विलिखेच्च तत् ॥ १७ ॥
लग्नेन्दुमान्दिसंयोगस्त्रिस्फुटं तच्च भानुयुक् ।
चतुस्फुटं राहुयुक्तमेतत्पञ्चस्फुटं भवेत् ॥ १८ ॥
लग्नेन्दूमानदानाभ्यां हत्वा मान्दिं क्षिपेद्द्वयोः ।
प्राणदेहौ क्रमात्स्यातां पुनर्मान्दिस्सुताडितः ॥ १९ ॥
भानुयुक्तो भवेन्मृत्युर्विलिखेत्त्रीनिमानपि ।

करणसिद्धानि वाक्यानि ग्राह्याणि । इतिशब्देन प्रकृतश्लोकस्य कण्ठाभरणस्थत्वं प्रतीयते । एवं लग्नचन्द्रयोरानयनप्रकारमुक्त्वा श्लोकत्रितयेन गुळिकानयनप्रकारः कथ्यते ॥ १३ ॥

**मान्दीति** ॥ मान्दिकालश्चन्द्रो रुद्रो जय इत्यादिवाक्येन ज्ञेयः । लब्धा विनाडिकाः त्रिंशतो नाडीनां तादात्विकदिनमानस्य चान्तरविनाडिकाः स्युरिति ज्ञेयम् । ताभिरित्यादि त्रैराशिकम् । यदि दिनमानस्यैतावदन्तरं तर्हि मान्दीघटीनां कियदिति । स्वर्णं क्षेप्यं त्याज्यं चेत्यर्थः । ताभिः एवं स्फुटतया लब्धाभिर्मान्दिनाडीभिः । यथा लग्नं दिनगतस्थाने मान्दिनाडीं विन्यस्येत्यर्थः ॥ १६ ॥

**एवमिति** ॥ तात्त्रिस्फुटं च विलिखेत् ॥ १७ ॥

**लग्नेति** ॥ त्रिस्फुटमित्यन्तं पूर्वोक्तानुवादः । विहितस्य पुनर्विधानासाङ्गत्यात् । एते अपि विलिखेदिति शेषपूरणेन लेखनविधिः कल्प्यः । वस्तुतस्तु श्लोकोऽयमप्रामाणिकः प्रक्षिप्त एवेत्यलम् ॥ १८ ॥

**लग्नेन्द्विति** ॥ मानदानसुशब्दाः संख्यापराः । इमान् त्रीन् प्राणदेहमृत्यूनपि विलिखेत् ॥ १९ ॥

प्रश्नकालगता नाडीर्निरयघ्ना विभाजयेत् ।
दिवसस्य प्रमाणेन लब्धं राश्यादिकं फलम् ॥ २० ॥
तत्कालार्के क्षिपेदर्कः स्थिरराशिगतो यदि ।
भचतुष्कं त्यजेच्चास्माद्द्वन्द्वगो यदि योजयेत् ॥ २१ ॥
त्यागयोगौ चरे न स्तः प्राणाप्त्यै विलिखेच्च तत् ॥ २२ ॥

याता नाडीस्तिलघ्ना विभजतु दिनमा-
नेन राश्यादि लब्धं
सूर्यार्यच्छेन्दुवारेष्वजमुखचरभा-
न्त्येष्वसृक्ज्ञार्किवारे ।
वीणादिद्वन्द्वमध्येष्वपि धनमुदितं
मृत्युलब्ध्यै विजह्यात्
स्थानेभ्यश्चोदितेभ्यस्तदिदमपि भवेत्
काल एतौ लिखेच्च ॥ २३ ॥

सार्द्धेन नाडीद्वितयेन गच्छ-
त्यारभ्य सूर्योदयतो दिनेशः ।

**प्रश्नेति** ॥ पञ्चान्तरप्राणस्फुटानयनार्थोऽयमारम्भः । प्रतिदिवसं द्वादशराशीनां दश आवृत्तया भवेयुश्चेद्दिनगतनाडीभिः कियत्य इति त्रैराशिकेन लब्धं स्फुटं तत्कालार्कस्फुटे संयोज्य तत्कालार्कस्य स्थिरराशिगतत्वे राशिचतुष्कावशोधनेन उभयगतत्वे तद्योजनेन च लब्धं पञ्चान्तरप्राणस्फुटमपि विलिखेत् ॥ २०—२२ ॥

**याता इति** ॥ अत्र प्रतिदिनं तिस्र आवृत्तय इति परं पूर्वस्मात्त्रैराशिके विशेषः । सूर्यार्येति रविवारे एको राशिः । गुरुवारे राशिचतुष्टयमित्यादि । असृक्ज्ञेति कुजवारे सभागपञ्चदशकं राशिद्वितयं बुधवारे सभागपञ्चदशकं राशिपञ्चकमित्यादि । एवं चरभान्तस्फुटेषु द्वन्द्वमध्यस्फुटेषु च त्रैराशिकानीतस्फुटं योजिते मृत्युः । शोधिते कालः । एतौ मृत्युकालौ च विलिखेत् । एतयोर्मृत्युकालयोः सञ्चारक्रमः षोडशाध्याये अर्कारजीवबुधेत्यादिकेन षड्डुत्तरशततमेन श्लोकेन स्पष्टीकरिष्यते च ॥ २३ ॥

**सार्द्धेनेति** । पद्यत्रयेणानेन सूर्येन्दुराहुचक्रमुक्तम् । तदानयनप्रकारस्त्वेवम् । दिनगतनाडीर्विनाडीकृत्य पञ्चाशदुत्तरशतेन विभजेत् । लब्धं फलं राशिः । शिष्टं त्रिंशता

चापाद्विलोमादनुलोमयामी
भानोरमुष्यास्तगतः शशाङ्कः ॥ २४ ॥
राहुर्मृगमृगारातिककिमेषालिजूकभे ।
कर्किकुम्भैणमेषाक्षजूकेषु प्रतिलोमतः ॥ २५ ॥
चरत्यर्कोदयात्सार्द्धनाडीद्वितयतोऽन्वहम् ।
लिखेदेतानपीन्दुराहुचक्रमिदं स्मृतम् ॥ २६ ॥

एतैः फलमुपरिष्टादष्टमाध्याये वक्ष्यते ।

गुळिकेन्दुतीक्ष्णमहसां
क्रमान्निजोदयनवांशराशिगतैः ।
प्रतिगृहचारो ज्ञेयो
नवतिप्रमाणैस्तु वामतो गुळिकः ॥ २७ ॥
सोर्कयुतो मृत्युकरो
भयदः सेन्दुश्च मृत्युचक्रमिदम् ॥ २८ ॥

षष्ट्या च हत्वा भागान् कलाश्चानयेत् । तत्स्फुटमेवमानीतं विन्यस्य राश्यष्टकात् पृथङ्न्यस्तादेतद्राशिस्थानं विशोध्यैतद्भागकलास्तदधो योजयेत् । स सूर्यः । षड्राशियुक्तः स एव चन्द्रः । पुनः पञ्चाशदुत्तरशतहरणानीतस्फुटे यावन्तो राशयो गताः मृगमृगारातिकर्क्यादिक्रमेण तावतो राशीन् राहुस्फुटे गतान् सङ्कल्प्य पुनरनन्तरोक्तराशीन्विन्यसेत् । समृगारातिश्चेत् पञ्च । कर्की चेच्चतुरः । एवं पञ्चाशदुत्तरशतहरणानीतस्फुटे राशिरेकोऽपि न चेन्मृगान्त्यत्वेन राशिदशकं विन्यसेत् । एवं विन्यस्ताद्राशेरानीतस्फुटस्य भागान् कलाश्च शोधयेत् । तद्राहुस्फुटं स्यात् । एतत्स्फुटत्रितयमपि विलिखेत् ॥ २४–२६ ॥

**एतैरिति** ॥ अनन्तरोक्तमृत्युचक्रफलमत्रैवोच्यतेति तात्पर्यम् ॥

**गुळिकेति** ॥ अत्र मृत्युचक्रमुक्तम् । तदानयनप्रकारस्त्वेवम् । दिनगतनाडीर्विनाडीकृत्य पञ्चदशभिर्हत्वा लब्धं फलं राशिः । त्रिंशता षष्ट्या च हत्वा भागान् कलाश्चानयेत् आनीतस्फुटमेतत् कुत्रचिद्विन्यसेत् । पुनः सूर्येन्दुगुळिकानां तत्कालस्फुटानि नवभिर्निहत्य नवांशकस्फुटान्यानयेत् । पुनः पूर्वानीतस्फुटं रवीन्दुनवांशकस्फुटयोर्योजयेत् । गुळिकनवांशकस्फुटाच्छोधयेदिति । सोर्कयुतः स एवमानीतो गुळिकः ॥ २७, २८ ॥

अर्केन्द्वारूढोदय-
भांशेशाः स्पष्टगणितशास्त्रेण ।
दृक्तुल्येनानेया
ग्रहाश्च सर्वे तथैवान्ये । २९ ॥

शास्त्रान्तरं च ।

योगे ग्रहाणां ग्रहणेर्कसोमयो-
र्मौढ्ये तथा वक्रगतौ च पञ्चसु ।
दृष्टानुरूपं करणं यदन्वहं
तेन ग्रहेन्द्रान् गणयेत्त्रिवारम् ॥ ३० ॥

यदा यथैव सिद्धान्तो गणिते दृक्समो भवेत् ।
तदा तेनैव संसाध्यं जातकं गणयेद्बुधः ॥ इति ॥ ३१ ॥

लग्नस्फुटस्य भं त्यक्त्वा कलाभागांश्च योजयेत् ।
आरूढभे स्फुटावाप्त्या अमुष्य विलिखेच्च तत् ॥ ३२ ॥

॥ इति प्रश्नमार्गे पञ्चमाध्यायः ॥

---

**अर्क इति** ॥ अर्केन्द्वारूढानां त्रयाणामुदयराश्यधिपा नवांशराश्यधिपाश्च विशिष्या-नेयाः । पृथगुक्तिः फलादेशे सविशेषोपयोगात् । दृक्तुल्येनेति विशेषणेन परहितगणितमत्र न स्वीकार्यं किन्तु दृग्गणितमिति स्पष्टीक्रियते । स्पष्टेति विशेषणेन गणितशास्त्रस्य दृक्तुल्यत्वं स्वीयपरीक्षणेन वेद्यमिति सूच्यते ॥ २९ ॥

**शास्त्रान्तरमिति** ॥ भवतीति शेषः ॥

**योग इति** ॥ ग्रहाणां योगे परस्परसमागमे । मौढ्ये सूर्यासत्तिजन्यास्तमने । अन्वहं बहुदिवसपरीक्षयैव निर्णयमेतदिति भावः । तेन करणेन त्रिवारं गणयेत्सुसूक्ष्मं गण-यित्वानयेदित्यर्थः ॥ ३० ॥

**यदेति** ॥ तेनैव पञ्चसु सिद्धान्तेषु दृक्समतया प्रत्यक्षसिद्धेनैव । जातकं प्रश्नादी-नामप्युपलक्षणम् ॥ ३१ ।

**लग्नेति** ॥ लग्नस्फुटस्य कला भागांश्च आरूढराशौ योजयेत् । तदारूढस्फुटं भवेत् । स्फुटावाप्त्यै अमुष्य इति छेदः । ऐकारस्यायादेशे यलोपः । अमुष्यारूढस्य ॥ ३२ ॥

इति पञ्चमाध्यायः ॥

—:०:—

# अथ षष्ठाध्यायप्रारम्भः ॥

अथ सूत्राणि निरूप्यन्ते ।

आरूढोदयलग्नाभ्यां सूत्रं सामान्यसंज्ञितम् ।
तदीशाभ्यां तु यच्चिन्त्यं तत्स्यादधिपसंज्ञकम् ॥ १ ॥
लग्नांशारूढराशिभ्यां सूत्रमंशकसंज्ञितम् ।
लग्नोडुपृच्छकोडुभ्यां चिन्त्यं नक्षत्रसंज्ञितम् ॥ २ ॥
आरूढतद्दशमतो महासूत्रं विचिन्तयेत् ॥
पृथ्वी सामान्यसूत्रं स्यादापस्त्वधिपसंज्ञितम् ॥ ३ ॥
तेजस्त्वंशकसूत्रं स्यादुडुसूत्रं तु मारुतः ।
आकाशस्तु महासूत्रमित्येतत्सूत्रपञ्चकम् ॥ ४ ॥
प्राधान्येन विचिन्त्यं स्यात्पञ्चभूतात्मकत्वतः ॥
आरूढोदययोर्द्वन्द्वं चरराशिगतं यदि ॥ ५ ॥
द्वन्द्व एकं स्थिरेऽन्यद्वा जीवसूत्रमिति द्विधा ।
आरूढोदययोरेकं चरे स्यादुदये परम् ॥ ६ ॥
द्वितयं वा स्थिरे तद्वन्मृतिसूत्रमपि द्विधा ।
चरसंस्थं तयोरेकमपरं स्थिरसंज्ञितम् ॥ ७ ॥

**अथेति** ॥ अथ लग्नादिस्फुटानयननिरूपणानन्तरं पृच्छानिर्गमेत्युद्दिष्टक्रमेण ॥

**आरूढेति** ॥ सार्धश्लोकद्वितयेनानेन सूत्राणां पञ्चानां निरूपणे साधनानि प्रदर्शितानि । निरूपणप्रकारस्तु 'आरूढोदययो'रित्यादिना वक्ष्यते ॥ १, २ ॥

**पृथ्वीति** ॥ सूत्राणां तत्तद्भूतात्मकतया निरूपणीयाः फलविशेषाः 'सूत्रं यद्भूतसम्बन्धी'ति श्लोकेन वक्ष्यन्ते ॥ ३, ४ ॥

**आरूढेति** ॥ त्रिभिः श्लोकैः सामान्यसूत्रनिरूपणप्रकारः कथितः । तत्र चरस्य जीवत्वं स्थिरस्य रोगत्वं उभयस्य मृतित्वं चावगन्तव्यम् । सङ्करे तु विशेषः प्रदर्शितः ।

द्वयं वोभयराशिस्थं रोगसूत्रमपि द्विधा ।
चिन्तनेंशकसूत्रस्याप्ययं न्यायो विचिन्त्यताम् ॥ ८ ॥
चरे चरास्थिरद्वन्द्वा स्थिरे द्वन्द्वचरास्थिराः ।
द्वन्द्वे स्थिरोभयचरा जीवो रोगो मृतिः क्रमात् ॥ ९ ॥
आरूढस्य च लग्नस्य पत्योरैक्ये च सौहृदे ।
जीवसूत्रं विजानीयात्समत्वे रोगदं भवेत् ॥ १० ॥
तयोश्शात्रवभावे तु सूत्रं तु मरणप्रदम् ॥
गणयेल्लग्ननक्षत्रादारभ्य प्रष्टृजन्मभम् ॥ ११ ॥
त्रिभिस्तां गणयेत्संख्यामेकशेषे तु जीवकृत् ।
द्विशेषे रोगदं सूत्रं निश्शेषे मरणप्रदम् ॥ १२ ॥
आरूढलग्नदशमयोर्द्वितयं चन्द्रराशिगम् ।
यदि जीवनदं सूत्रं द्वयं चेत्सूर्यराशिगम् ॥ १३ ॥
मृत्युसूत्रं तदा ज्ञेयं यदा तु पुनरेनयोः ।
एकं चान्द्रं परं सौरं रोगसूत्रं तदाभवत् ॥ १४ ॥

चिन्तनेंशकसूत्रस्येत्यर्धेन अतिदेशरूपेणांशकसूत्रनिरूपणे लग्नस्थाने लग्नांशो ग्राह्य इत्येतावान् विशेषः ॥ ५—८ ॥

**चर इति** ॥ पूर्वोक्तस्यैव सङ्ग्रहोयम् ॥ ९ ॥

**आरूढस्येति** ॥ सौहृदेऽन्योन्यबन्धुत्वे । एवं समत्वशात्रवभावयोरप्यूह्यम् । तत्र मिथो बन्धुत्वाद्यभावे कथं निर्णयमिति शङ्कायामयमुपदेशः एकस्य बन्धुत्वेऽन्यस्यापि बन्धुत्वे जीवः । समत्वेऽपि जीवः शत्रुत्वे रोगः । एकस्य समत्वे अपरस्य बन्धुत्वे जीवः । समत्वे रोगः । शत्रुत्वे मृत्युः । एकस्य शत्रुत्वे इतरस्य बन्धुत्वे रोगः समत्वे मृत्युः शत्रुत्वेपि मृत्युरिति । अत्रातिशत्रोः शत्रौ अतिबन्धोर्बन्धौ चान्तर्भावो वेद्यः ॥ १० ॥

**गणयेदिति** ॥ लग्ननक्षत्रादुदयलग्नस्फुटगतनक्षत्रात् ॥ ११, १२ ॥

**आरूढेति** ॥ राशीनां सौरचान्द्रत्वविशेषो वराहमिहिरेण स्वहोरायां 'गोजाश्विककिंमिथुनास्समृगा निशाख्याः पृष्ठोदया विमिथुनाः कथितास्त एव । शीर्षोदया दिनबलाश्च भवन्ति शेषा' इति प्रतिपादितः । तत्र निशाख्यानां चान्द्रत्वं दिनबलानां सौरत्वं चेति वि-

जीवसूत्रफलं दीर्घमायू रुक्शमनादि च ।
रोगोत्पत्तिश्च रुग्दैर्घ्यं रोगसूत्रफलं मतम् ॥ १५ ॥
मृतिसूत्रफलं मृत्युः प्रष्टुस्सम्बन्धिनामपि ।
प्रेप्सिताप्तिरपि प्रष्टुः सूत्रे जीवनदायिनि ॥ १६ ॥
रोगदे कार्यनाशादिर्दुःखं भीरपि मृत्युदे ।
अत्र ग्रन्थान्तरं चास्ति तदेवानु विलिख्यते ॥ १७ ॥

आयुर्वीर्यं धनमपि तथा
वर्द्धते जीवसूत्रे
रुक्सूत्रं चेद्धनहतिमनो-
भङ्गदेहप्रपीडाः ।
भीरुग्वृद्धिर्दिनमनुमनः-
कर्मभङ्गोन्त्यसूत्रे
प्रष्टुर्वाच्यं फलमिति हृदं
सर्वपृच्छासु सूत्रैः ॥ १८ ॥

सूत्रं यद्भूतसम्बन्धि मृत्युकृद्वाथ रोगकृत् ।
तद्भूतांशभवान् देहे रोगान् प्रष्टुर्विनिर्दिशेत् ॥ १९ ॥

---

वेकः । 'सिंहः कन्या तुलाळी च कुम्भान्त्यौ सूर्यराशयः । अन्ये तु राशयश्चान्द्रा द्युनिशाराशयश्च ते' ॥ इत्यनुष्टुपान्यत्र च प्रदर्शितः । १३, १४ ॥

**जीवेति** ॥ सार्धश्लोक आयुःप्रश्नविषयः । पुनरेकः श्लोकः कार्यप्रश्नविषयः । अन्तिमोर्धश्लोको बहुषु कोशेषु नैव दृश्यते । अत्र तु रत्नशिखापाठमनुसृत्य संयोजितः वाक्यमेवेदं वृत्ततया प्रश्रितमिति तत्त्ववेदिनः । भीरपि अपिना कार्यनाशादिरनुकृष्यते ॥ १५–१७ ॥

**आयुरिति** ॥ आयुरादिसर्वप्रश्नविषयकोयं विचारः । अत एवोक्तं सर्वपृच्छास्विति । दिनमनु प्रतिदिनम् । पूर्वत्रोत्तरत्र चेदं सम्बध्यते । अन्त्यसूत्रे मृत्युसूत्रे ॥ १८ ॥

**सूत्रमिति** ॥ 'पृथ्वीसामान्यसूत्रं स्या'दित्यादि पूर्वोक्तरीत्या सूत्राणां भूतसंबन्धो ज्ञेयः । तद्भूताङ्गभवान् इति पाठान्तरं दृश्यते । तदेव साधीयः । वक्ष्यमाणश्लोकेन देहे एतान्यङ्गानि एतद्भूतसम्बन्धीनि इत्येव प्रतिपादनदर्शनात् । 'मांसास्थित्वक्सिरारोम पृथ्वी

मांसास्थित्वक्सिरारोम पृथ्वी देहभृतां तनौ ।
स्वेदासृङ्मूत्रशुक्रास्यतोयं तोयमुदाहृतम् ॥ २० ॥

क्षुत्तृडालस्यनिद्राभास्तेजोऽङ्गचलनं मरुत् ।
द्वेषरागौ च मोहश्च साध्वसं च जरा नभः ॥ २१ ॥

एवं हि सर्वजन्तूनां पञ्चभूतमयी तनुः ।
षश्चोक्तान्यत्र सूत्राणि त्रीण्येवान्ये प्रचक्षते ॥ २२ ॥

नक्षत्राधिपसूत्रे द्वे वर्तमानफलप्रदे ।
सामान्यं भूतकालेऽन्ये भविष्यत्फलसूचके ॥ २३ ॥

लग्नादापञ्चमगै-
रानवमस्थैश्च पञ्चमान्नवमात् ।
आलग्नगैरपि भव-
द्भावि च भूतं शुभाशुभं ज्ञेयम् ॥ २४ ॥

देहभृतां तना'वित्यादि । अङ्गचलनं मरुदित्यादिषु भूतांशसंबन्धिरोगा एव कथ्यन्ते न पुनरङ्गानीति चेत्तत्र चलनास्पदमङ्गमित्याद्यर्थकल्पनैव ज्यायसी । 'एवं हि सर्वजन्तूनां पञ्चभूतमयी तनुः' इत्युपसंहारदर्शनात् ॥ १९ ॥

**मांसेति** ॥ पृथ्वी भूमिस्तत्संबन्धीत्यर्थः । आस्यतोयं मुखजलम् । रागद्वेषमोहभयानि मनोविकाराः । जराशब्देन यौवननाशो लक्ष्यते । अत्र पृथिवीमयसामान्यसूत्रस्य रोगत्वे मृत्युत्वे वा मांसास्थित्वक्सिरारोमसु पृच्छकस्य रोगसद्भावो ज्ञेयः । महासूत्रस्य तत्त्वे तु मानसानां रागद्वेषादीनां यौवनक्षयस्य चास्तित्वमादेष्टव्यम्। अत्रान्त्यश्लोकार्धं रत्नशिखापाठानुसारि । तत्तु वृत्तपूरणार्थं स्वयं प्रणीय संयोजितमिति मन्यन्ते तत्त्वविदः ॥

**नक्षत्रेति** ॥ अन्ये अंशकसूत्रमहासूत्रे । एतेन यत्कालसंबन्धिसूत्रस्य रोगत्वं मृत्युत्वं वा तत्कालेऽशुभं च वक्तव्यमिति सिध्यति । कालविभागज्ञानाय प्रकारान्तरमपि वक्ष्यमाणश्लोकेनोच्यते ॥ २३ ॥

**लग्नादिति** ॥ इदमपि सूत्रफलस्य कालविशेषज्ञानायोपयुज्यते । अत्र सूत्राणां राशिस्थित्यभावात् कथमनेन कालविशेषोवगम्यतामिति चेत्तत्तत्सूत्राधिपग्रहाणां लग्नादिभा-

सूत्राणां त्रितयस्य कीर्तितमिह
प्राधान्यमन्यैः परं
तत्कण्ठाभरणे समीरितमिहा-
प्येतत्फलं चोच्यते ।
आरूढोदययोर्द्वयोरपि तयोः
सम्बन्धि चाङ्कांशयो-
रादित्यांशकयोश्च यच्च तदिहा-
रूढस्फुटं गृह्यताम् ॥ २५ ॥

वचतुष्टयस्थत्वे वर्तमानफलप्रदत्वं पञ्चमादिचतुष्कस्थत्वे भविष्यत्फलप्रदत्वं नवमादिस्थत्वे भूतफलप्रदत्वं च वेद्यम् । ग्रहाणां सूत्राधिपत्यं कथमिति चेत्सामान्यसूत्रस्य बुधोऽधिपतिः । अधिपातसूत्रस्य शुक्रः । अंशकसूत्रस्य कुजः । नक्षत्रसूत्रस्य तु शनिः । महासूत्रस्य पुनर्गुरुः । इति वेद्यम् । अत्र किं मानमिति चेत्पृथ्वी सामान्यसूत्रं स्यादित्यादिग्रन्थेन सूत्राणां 'शिखिभूखपयोमरुद्गणानां' इति होरावचनेन ग्रहाणां च पञ्चभूतमयत्वोक्त्या सूत्राधिपत्यमप्युक्तप्रायमिति तत्त्वम् । सामान्यसूत्रस्य पृथ्वीमयत्वस्य भूमिभूताधिपो बुध एवाधिपतिरित्यादिक्रमेण लभ्यत एव । एवं च बुधस्य लग्नादिभावचतुष्कस्थत्वे सामान्यसूत्रफलं वर्तमानकालभवमित्यादिक्रमेण निरूपणीयमिति सिध्यति । श्लोकद्वयोक्तकालनिरूपणप्रकारद्वितयस्य विकल्पेनादेशः इति सिद्धान्तः । संवादोऽप्यत्र चिन्तनीयः । एतच्छ्लोकद्वयं तु केषुचित्कोशेषु न दृश्यते । सूत्रफलनिरूपणे जीवसूत्रफलं दीर्घमायुरित्यादिषु जीवसूत्रशब्देन जीवसूत्राधिक्यं गृह्यते । पञ्चसु सूत्रेषु मध्ये जीवसूत्राधिक्ये दीर्घायुष्यादीति यावत् । कालविशेषेण पृथक्फलचिन्तनेऽपि भूतकाले एकसूत्रमात्रसंबन्धित्वेऽपि तदितरकालयोः प्रत्येकं सूत्रद्वयसंबन्धाच्छुभफलस्याशुभफलस्य च वर्तमानत्व भविष्यत्त्वमपि निर्देष्टव्यम् । नहि कस्यापि कदाचिदपि शुभमात्रमेवाथवाशुभमात्रमेव वा भवेदिति नियमोऽस्ति । दृश्यते च एकस्मिन्नेव समये प्रकारान्तरेण सुखस्य दुःखस्य चानुभवः । इति युक्त्यालोच्यादेष्टव्यमित्यलम् ॥ २४ ॥

**सूत्राणामिति ।** कण्ठाभरणे तत्संज्ञज्योतिश्शास्त्रग्रन्थे । आरूढोदययोरित्ययं प्रकारः सामान्यसूत्रतया कथितचर एव । अङ्कांशौ नवांशौ । आदित्यांशकौ द्वादशांशकौ । नवांशद्वादशांशाभ्यां सूत्रभेदनिरूपणं सामान्यसूत्रानरीत्यैवेत्युपदेशः । आरूढस्फुटं 'लग्नस्फुटस्य भं त्यक्त्वे'त्युक्तप्रकारानीतं इह नवांशद्वादशांशपरिज्ञानविषये ॥ २५ ॥

आरूढोदययोस्तयोश्च नवभा-
गार्कांशसम्बन्धि यत्
सूत्राणां त्रितयं मृतिप्रदमिदं
यद्येनयोर्नाथयोः ।
स्वस्वाङ्कांशदिवाकरांशकपती
स्यातां च चेद्वैरिणौ
दोषे त्रिस्फुटदूतलक्षणदशा-
दीनां म्रियेताप्यरुक् ॥ २६ ॥

सूत्राणां त्रितयेत्र जीवनकरे
चांशेशयोः सौहृदे
शस्ते त्रिस्फुटदूतलक्षणदशा-
छिद्रादिके चाखिले ।
अत्यासन्नमृतेरपीह न मृति-
र्मिश्रेथ सूत्रादिके
जीवेत्कर्मभिरेव नैव सुकरं
दोषेधिके जीवनम् ॥ इति ॥ २७ ॥

**आरूढेति** ॥ प्रथमपादः पूर्वोक्तानुवादरूपः । एनयोर्नाथयोः आरूढोदयाधिपयोः । अङ्कदिवाकरशब्दौ नवद्वादशवाचकौ । दशादीनां जातकवशात्तत्कालीनदशापहारच्छिद्रादीनाम् । अरुगपीति संबन्धः ॥ २६ ॥

**सूत्राणामिति** ॥ मृतिरित्यन्तं म्रियेताप्यरुगिति पूर्वश्लोकोक्तप्रतिद्वन्द्वि । कर्मभिः प्रायश्चित्तादिभिः । अत्र सूत्रत्रितये नवांशकद्वादशांशकाभ्यां सूत्रनिरूपणं तदधिपानामारूढोदयाधिपबन्धुशत्रुत्वादिना कार्यमित्यधिपतिसूत्रवत्कथन प्रकारोपि दृश्यते । सामान्यसूत्रनिरूपणोक्तवदेतन्निरूपणमपि कार्यमित्येव युक्तम् । 'आरूढोदययो'रिति श्लोके यदि चेच्छब्दयोरुभयोरुपादानं 'सूत्राणां त्रितयेत्र जीवनकर' इति श्लोके मध्ये चशब्दप्रयोगश्चात्र गमकम् । सांप्रदायिकश्चायमेव प्रकारः ॥ २७ ॥

एतत्सूत्रविषयम् ।

कुळीरभृङ्गमत्स्येषु दोषदं स्याद्यथोत्तरम् ।
तत्राप्यहीन्द्रपौष्णेषु तथैव त्रिस्फुटं भवेत् ॥ २८ ॥
कर्किवृश्चिकमीनानां त्रिस्फुटं चरमांशगम् ।
मृत्युप्रदं भवेत्प्रष्टुरब्दमासदिनैः क्रमात् ॥ २९ ॥

अत्र ग्रन्थान्तरम् ।

मेषात् केसरिणस्तथैव धनुषो
भानां चतुष्कं क्रमा-
त्सृष्टिस्थानविनाशसंज्ञमजतो
दस्रात्तथा भानि च ।
त्रीणि त्रीणि नवांशका भवनव-
न्नाशर्क्षसन्ध्याह्वये-
ष्वष्टाशीतितमांशकादिषु तथा
नो शोभनं त्रिस्फुटम् ॥ ३० ॥

**एतदिति** ॥ उद्देशक्रमानुसारेणानन्तरं त्रिस्फुटफलं निरूप्यत इति यावत् ॥

**कुळीरेति** ॥ यथोत्तरं कुळीराद्भृङ्गो भृङ्गान्मीनश्चाधिकदोषप्रदः । राशिष्वपि उत्तरोत्तरनक्षत्राणां उत्तरोत्तरनवांशकानां च दोषाधिक्यमित्यर्थः । चरमांशोऽन्त्यनवांशः । आश्लेषाज्येष्ठारेवतीनां तुरीयपादस्थे त्रिस्फुटे क्रमादब्दमासदिनैः प्रष्टुर्मृत्युरादेश्य इति यावत् ॥

**अत्रेति** ॥ एतद्वाक्यमित उत्तरं ग्रन्थान्तरं च बहुषु ग्रन्थेषु न दृश्यन्ते । प्रश्नमार्गप्रणेत्रा स्वग्रन्थे नैतत्संयोजितमित्येव वस्तुस्थितिः । 'मेषादिराशिचतुष्कं' सृष्टिखण्डः । चरराशयः सृष्टिराशयः । 'दस्ररोहिणीपुनर्वस्वादीनि सृष्ट्युडूनि' इत्यादिस्तद्व्याख्यानग्रन्थोऽत्र मानम् । त्रिस्फुटनिरूपणोपयोगित्वात् केषुचित्कोशेषु दृश्यमानत्वाच्चात्र योज्यते ।

**मेषादिति** ॥ मेषादिराशिचतुष्कं सृष्टिखण्डः । सिंहादिः स्थितिखण्डः धनुरादिः संहारखण्डः । अजतो मेषात् । भानि राशयो नक्षत्राणि च । नवांशका भवनवत् । सृष्ट्यादिखण्डकल्पना सृष्ट्यादिभावकल्पना चानेनातिदिश्यते । नाशर्क्षमिति । नाशः संहारः । ऋक्षं राशिर्नक्षत्रं च । ऋक्षसन्धिर्गण्डान्त इति यावत् । नाशपदेन खण्डराशिनक्षत्राणि ग्राह्याणि । अष्टाशीतितमांशकः पृच्छकजन्मांशकात् । आदिशब्दाद्विपत्प्रत्यरवधनक्षत्राष्टमराश्यादयो ग्राह्याः ॥ ३० ॥

कर्कटान्त्यनवभागसंश्रितं
त्रिस्फुटं मरणदायि वत्सरात् ।
मासतो मधुकरान्त्यभागगं
रेवतीचरमभागगं दिनात् ॥ ३१ ॥

त्रिस्फुटं नवहतं निहन्त्विनै-
र्भं विना यदि तदृक्षसन्धिगम् ।
जन्मगं यदि च तत्त्रिकोणगं
मृत्युदं भवति पृच्छतां ध्रुवम् ॥ ३२ ॥

त्रिस्फुटस्य भनवांशयोर्बलं
यस्य तेन जनिचन्द्रसङ्क्रमः ।
मृत्यवेजहरिकार्मुकांशगं
त्रिस्फुटं यदि महत्तरायुषे ॥ ३३ ॥

संयुक्तं गुळिकेन वा यदि खरै-
र्नो शोभनं त्रिस्फुटं
तत्र स्यात्तदुद्भवो यदि निजे
गेहस्य कल्प्यो गदः ।

**कर्कटेति** ॥ कर्किवृश्चिकेति श्लोकोक्त एवानेनानूद्यतेत्यर्थः ॥ ३१ ॥

**त्रिस्फुटमिति** ॥ इनैर्द्वादशभिः । भं विना नवहननानन्तरं राशयः सर्वेपि त्याज्याः। भागकलामात्रस्य द्वादशभिर्गुणनं कार्यमिति यावत् । तत् एवमानीतं नवांश-द्वादशांशस्फुटम् । ऋक्षसन्धिरिति कुळीरभृङ्गमत्स्यानामन्त्यनवांशको विवक्षितः । जन्मशब्देन जन्मनक्षत्रं तत्त्रिकोणशब्देनानुजन्मनक्षत्रे च ग्राह्याणि ॥ ३२ ॥

**त्रिस्फुटस्येति** ॥ बलं बलाधिक्यम् । तेन बलाधिक्यवता राशिना । जन्मचन्द्रो जननकालीनचन्द्राधिष्ठितराशिः ॥ ३३ ॥

**संयुक्तमिति** ॥ तत्र पृच्छकतत्संबन्ध्यादिमध्ये । तदुद्भवस्त्रिस्फुटनक्षत्रजातः । नवकं 'विषोष्णविष्टिगण्डान्तललाटकार्गळवेधताः । गुळिकोहिशिरश्चैते नव दोषा बलोत्तराः॥' इत्युक्तम् । सूक्ष्मश्चेति सृष्टिखण्डसृष्टिराशिसृष्टिनक्षत्रसृष्टिनवांशकानामुपलक्षणम् ॥ ३४ ॥

दोषाणां नवकेन चान्वितमिदं
प्रष्टुर्विपत्त्यै भवे-
त्सृष्ट्यृक्षादिगतं च सद्ग्रहयुतं
दीर्घायुरारोग्यदम् ॥ ३४ ॥

आढ्यक्षोणिसुरागमो विधनवि-
प्रायानमग्नेर्भयं
वासोहानिरथ क्रमात्कलहभ-
ग्नायानमह्यागमः ।
भूदेवत्रितयागमोथ चतुरं-
घ्र्यापच्च बन्ध्वागमो
मृत्योर्लक्षणमश्विभादिनवकं-
त्रय्याश्रिते त्रिस्फुटे ॥ ३५ ॥

यस्मिन् राशौ नवांशे वा त्रिस्फुटं तद्गते विधौ ।
त्रिकोणस्थेथवार्के वा प्रोक्तलक्षणसम्भवः ॥ ३६ ॥

मूर्द्धोष्णज्वरतापकृद्रविरती-
सारं शशीर्मं कुजः
स्तम्भं वाङ्मनसोः करोत्यपि बुधो
हृत्पारवश्यं गुरुः ।

---

**आढ्येति** ॥ कलहभग्नायानं कलहे मिथः कलहे भग्नस्य पराजितस्यायानम् । अह्यागमः सर्पागमनम् । भूदेवत्रितयस्य समुदितस्यागमः । त्रिस्फुटे आश्विमघामूलस्थे प्रश्नदिवसे तत्सन्निकृष्टादिवसेषु वा आढ्यब्राह्मणः पृच्छकगृहं यदृच्छयागतश्चेत्पृच्छकस्य मृत्युरादेष्टव्यः । एवं भरण्यादिस्थे विधनविप्रायानादिकं ज्ञातव्यम् ॥ ३५ ॥

**यस्मिन्निति** ॥ तद्गते तद्राशिगते । त्रिकोणस्थे राश्योस्तयोस्त्रिकोणस्थे । विधावर्के वा तयोरन्यतरस्मिन्नित्यर्थः । प्रोक्तानां पूर्वश्लोकप्रतिपादितानां लक्षणानां संभवः । अन्यदा लक्षणसद्भावेपि न मृत्युरादेष्टव्य इति यावत् ॥ ३६ ॥

**मूर्धेति** ॥ अतीसारं शशी । कुरुत इत्यनुकृष्य योजना । ईर्मं व्रणम् । भृगुः

बुद्धिभ्रंशशरीरतोदकृदतः
शोफं भृगुः पाददो-
स्सङ्कोचं कुरुतेर्कजोथ पतनं
राहुः शिखी भौमवत् ॥ ३७ ॥

सूर्याद्यंशकसंस्थिते रविमुखै-
रण्यन्विते त्रिस्फुटे
तेषामीरित आमयो यदि भवे-
त्प्रष्टुर्मृतिः स्याद्ध्रुवम् ।
यत्र त्रिस्फुटमङ्घ्रिनिघ्नमुडुनि
स्यात्तत्रभे स्याद्रुजः
प्रारम्भोथ ततः परोडुनि भवे-
न्मोहस्तृतीये मृतिः ॥ ३८ ॥

त्रिस्फुटस्थैष्यनाडीभिरानीय भदशां तथा ।
अपहारं छिद्रमतो वत्सरान्तः फलं वदेत् ॥ ३९ ॥

आरूढाष्टमरिःफषष्ठपतय-
स्तत्स्थाश्च नीचस्थिता
मूढाः केन्द्रधनत्रिकोणगखरा
मान्द्यंशराशीश्वरौ ।

बुद्धिभ्रंशशरीरतोदकृत् । अतस्तत्करणानन्तरं शोफं कुर्यात् । अर्कजः पादयोर्दोर्षोर्भुजयो-श्च सङ्कोचं कुरुते । भौमवत् व्रणं कुरुत इत्यर्थः ॥ ३७ ॥

**सूर्येति** ॥ ईरितः पूर्वश्लोकोक्तः आमयो मूर्धोष्णादिः । त्रिस्फुटे सूर्यनवांशकस्थे सूर्यसहिते वा सति मूर्धोष्णादिरोगसद्भावे प्रष्टुर्मृत्युरवश्यमादिश्यतामित्यर्थः । एवं चन्द्रा-दिष्वपि योज्यम् । मृत्युलक्षणसद्भाव एवोत्तरार्धोक्तं चिन्त्यम् ॥ ३८ ॥

**त्रिस्फुटेति** ॥ प्रश्नोष्ठत्रिस्फुटाभ्यामिति वक्ष्यमाणश्लोकेनैतदर्थः स्पष्टीभवेत् ॥३९॥

**आरूढेति** ॥ तत्स्थाः आरूढाष्टमषष्ठरिष्फस्थाः । नीचास्थिताः स्वस्वनीचस्थाः। केन्द्रध-नात्रिकोणगत्वं खराणामेव दोषः। केन्द्रादिस्थत्वं शुभानामेव गुणः। शिष्टं निर्विशेषम्। सप्तमभ-

ये च त्रिस्फुटतारसङ्गमभपा-
स्ते दोषदाः पृच्छतां
केन्द्रादिस्थशुभादयोत्र शुभदा
एतद्रहस्यं परम् ॥ ४० ॥

योंशस्त्रिस्फुटगोस्य यातघटिका
धीघ्ना विभज्य स्थिरैः
शिष्टं त्रिस्फुटतारकादि गणये-
दत्रागतं मृत्युभम् ।
तारं चाथ चतुस्फुटस्थमिह तु
व्याधेः शमः स्याद्यदि
प्रष्टुस्तर्हि चतुस्फुटोडुजनुषं
बन्धुं विशेदामयः ॥ ४१ ॥

त्रिस्फुटस्थगृहगो यदा भवे-
द्भानुरिन्दुरथवात्र वा मृतिः ।

---

पदेन विपत्प्रत्यरवधनक्षत्राणि गृह्यन्ते । वधनक्षत्रस्य दोषाधिक्यं प्रत्यरनक्षत्रस्य तल्लाघवं च द्योतयितुं क्रमत्यागः । दोषदाः स्वस्वदशापहारच्छिद्रेषु । एवं शुभदाः । एतद्रहस्यं परं सारभूतमेतत्सुपरीक्षितेभ्य एवोपदेष्टव्यं शिष्येभ्यः इत्यर्थः ॥ ४० ॥

**य इति** ॥ अस्यांशस्य । धीघ्ना नवगुणिताः । स्थिरैः सप्तविंशत्या । विभज्य शिष्टं त्रिस्फुटतारकादि त्रिस्फुटाधिष्ठितनक्षत्रमारभ्य गणयेत्। अत्रागतं तारं मृत्युभम् । तस्मिन् नक्षत्रे पृच्छकस्य मृत्युः संभवेत् । अथ चतुस्फुटं चतुस्फुटाधिष्ठितनक्षत्रमपि मृत्युभमेव । अत्र चतुस्फुटगतनवांशेनापि त्रिस्फुटवदेव मृत्युभज्ञानमिति केचित्। तदपि संवादार्थं चिन्त्यमेव । व्याधेः शमः पृच्छकस्यारोग्यं स्याद्यदि । चतुःस्फुटोडुजनुषं चतुःस्फुटाधिष्ठितनक्षत्रजातम् । प्रष्टुर्बन्धुं विशेत् संक्रामेत् अत्रैवं क्रियाक्रमः । त्रिस्फुटं विन्यस्य नवभिः संगुण्य राशिं परित्यज्य भागान् द्विगुणीकृत्य तान् कलाश्च नवभिः संगुण्य सप्तविंशत्या हृत्वा शिष्टभागसंख्या त्रिस्फुटनक्षत्रादिगणने ग्राह्या । अत्रायं विशेषः । शिष्टाः कला अपि स्युर्यदि अग्रसंख्योत्तरसंख्या ग्राह्येति । त्रिस्फुटवशाद्दोषसद्भाव एव मृत्युकालनिरूपणमिदमावश्यकम् ॥ ४१ ॥

**त्रिस्फुटस्थेति** ॥ कालनिरूपणे प्रकारान्तरमनेन कथ्यते ॥ ४२ ॥

निर्णयस्त्विह गुरूपदेशतो
जायते बहुपरीक्षणैरपि ॥ ४२ ॥

लग्नाहिमान्दीन्दुरविस्फुटानां
योगे भवेयुर्यदि जन्मभानि ।
वधर्क्षवैनाशिकपौष्णभानि
मृत्युर्विपत्प्रत्यरयोश्च सद्यः ॥ ४३ ॥

लग्नस्यांशमसुं वपुश्शशभृतो
मान्देश्च मृत्युं विदु-
स्तद्योगेक्षणवर्जितो वपुरसू
युक्तक्षितौ चेन्मिथः ।
दीर्घायुर्दृढमादिशेद्यदि तनो-
र्मृत्योर्युतीक्षादिकं
पीडा स्याद्वपुषो रुजाथ तदसो-
र्मोहप्रदं पृच्छताम् ॥ ४४ ॥

द्वन्द्वांशे यदि लग्नचन्द्रगुळिका
मृत्युप्रदा रोगदाः
प्रष्टुस्ते स्थिरभागगा यदि चरां-
शेष्वायुरारोग्यदाः ।

**लग्नेति** ॥ लग्नादीनां योगे पञ्चस्फुट इत्यर्थः । वैनाशिकोष्टाशीतितमांशः । पौष्ण-भं रेवतीनक्षत्रम् ॥ ४३ ॥

**लग्नस्येति** ॥ शशभृतः मान्देश्च अंशमिति संबध्यते । तद्योगेति तच्छब्देन मृत्यु-र्विवक्षितः । तदसोरिति असोः प्राणस्य । तन्मृत्युयोगेक्षादिकम् । आदिना केन्द्रादिसंब-न्धोपि निरूपणीयः । लग्नचन्द्रमान्दीनां स्फुटानि नवाभिः संगुण्य क्रमेण प्राणदेहमृत्युस्फु-टान्यानेयानि ॥ ४४ ॥

**द्वन्द्वांश इति** ॥ द्वन्द्वांशे संहारराशिनवांशके पूर्वानीतप्राणदेहमृत्यूनां संहारराशि-स्थत्व इति यावत् । ते अन्योन्यं त्रिकोणभगता यदि तेषां त्रिकोणसंबन्ध इति यावत् । तच्च-

अन्योन्यं यदि ते त्रिकोणभगता-
भागा महारोगदा
दृष्टा मोहकरा युता मरणदाः
कर्किंत्रिकोणे दृढम् ॥ ४५ ॥

प्राग्लग्नं पञ्चनिघ्नं गुळिकयुतमसुं
प्राहुरिन्दुं वसुघ्नं
मान्धाढ्यं चापि देहं मुनिहतगुळिकं
भानुयुक्तं च मृत्युम् ।
प्राणाधिक्ये तु रोगः शमनमथ रुजां
देहवृद्धौ प्रवृद्धे
मृत्यौ स्यात्तेषु मृत्युर्जनिभमुपगते
सार्पपौष्णेन्द्रभे वा ॥ ४६ ॥

युक्ते तत्त्रितयं भवेद्यदिह भं
तत्स्थेषु सूर्यादिषु
ब्रूयात्तातमुखापदं मृतिमिह
प्रष्टुस्समान्दावहौ ।

न्देन त्रयो नवांशा विवक्षिताः । कर्किंत्रिकोणे युता दृढं मरणदा इति संबन्धः । दृष्टां परस्परं दृष्टिसंबन्धे । युताः एकराशियोगोत्र विवक्षितः ॥ ४५ ॥

**प्राग्लग्नमिति ।** प्रकारान्तरेण प्राणदेहमृत्युस्फुटानामानयनं तैः फलं चात्रोच्यते । प्रश्नमार्गप्रणेत्रा तु 'लग्नेन्दू मानदानाभ्या'मित्यादिना पूर्वमेवायं प्रकारो निरूपितः । वसवोष्टौ । मुनयः सप्त । जनिभमुपगते मृत्याविति शेषः । सार्पपौष्णेन्द्रभे स्थित इति शेषः । ४६ ॥

**युक्त्वेति ।** 'त्रिस्फुटेर्कादिभिर्युक्ते' इति वक्ष्यमाणमेवापदमित्यन्तेनानूद्यते । इह त्रिस्फुटस्थराशौ समान्दावहो स्थिते प्रष्टुर्मृतिं ब्रूयादिति संबन्धः । मान्दौ राहुवर्जित इति यावत् । अर्कतनये इह त्रिस्फुटस्थराशौ स्थिते सति प्रष्टा यः प्रेषितः अस्य दूतस्य विनाशं ब्रूयादिति संबन्धः ॥ ४७ ॥

मान्दौ दैवविदो शुभानि शिखिनि
प्रश्नस्य कर्तुस्तथा
दूतस्यास्य विनाशमर्कतनये
प्रष्टुरिह यः प्रेषितः ॥ ४७ ॥

गतासुतः प्रोक्षणभक्तभादिना
विहीनमान्दिर्जनिगो मृतिप्रदः ।
न चेन्निजाधिष्ठिततारजन्मनो
मृतिप्रदो बन्धुजनस्य पृच्छताम् ॥ इति ॥ ४८ ॥

संहारगमसद्युक्तं प्रष्टुर्देहांशकादिगम् ।
जन्मताराव्रयस्थं च नियमेन मृतिप्रदम् ॥ ४९ ॥

सृष्टिखण्डगृहोडुस्थमथवा शुभसंयुतम् ।
यद्वाजहरिचापांशगतं त्रिस्फुटमायुषे ॥ ५० ॥

त्रिस्फुटस्य दृगाणादि वर्गेशाश्रितराशिपैः ।
तातमातृभ्रातृबन्धुपुत्रभार्याशुभाशुभम् ॥ ५१ ॥

सगुणैस्तैश्शुभं वाच्यं सदोषैश्च तथाशुभम् ।
दोषा दुर्बलतानिष्टस्थितिपापान्वयादिकाः ॥ ५२ ॥

---

**गतासुत इति** ॥ गतासुतः दिनगतप्राणेभ्यः । प्रोक्षणशब्देनाक्षरसंख्यया द्विषष्ट्युत्तरपञ्चशतसंख्या गृह्यते । अत्रैवं क्रियाक्रमः । दिनगतं विन्यस्य नाडिकाः षष्टिगुणेन विनाडीकृत्य ताः षड्भिः संगुण्य प्राणान् कृत्वा प्रोक्षणेन हरेत् । लब्धा राशयः । भागकलाश्च त्रिंशदादिगुणनेन यथावन्नेयाः । लब्धमेतत् स्फुटं मान्दिस्फुटाच्छोधयेत् । शोधितं तत् प्रष्टृनक्षत्रगतं चेत्पृच्छकस्य न चेत्पृच्छकसंबन्धिषु तन्नक्षत्रजातस्य मरणमादेश्यमिति भावः । इतिशब्देन ग्रन्थान्तरपरिसमाप्तिः स्पष्टीक्रियते ॥ ४८ ॥

**संहारगमिति** संहारगं । 'कर्किवृश्चिकमीनाना'मिति श्लोकस्थं त्रिस्फुटमिति पदमत्र विशेष्यम् । संहारशब्देन तत्खण्डराशिनक्षत्राणि ग्राह्यानि । देहांशकोष्टाशीतितमांशकः । आदिशब्देन विपन्नक्षत्रादिसङ्ग्रहः । नियमेन निश्चयेन ॥ ४९ ॥

**सृष्टीति** ॥ दृगाणादयो द्रेक्काणहोरानवांशकत्रिंशांशकद्वादशांशकक्षेत्राणि । तदीशाश्रितराशिपैः क्रमेण तातादीनां षण्णां शुभाशुभं वाच्यमित्यनुकृष्यते । सगुणैः शुभान्

इष्टभावस्थितिर्वीर्ये सद्योगेक्षे च तद्गुणाः ।
द्रेक्काणाद्यधिपैरेव कैश्चिदेवं निरूप्यते ॥ ५३ ॥
त्रिस्फुटेर्कादिभिर्युक्ते पित्रादीनामशोभनम् ।
चतुष्पदांशके भे वा त्रिस्फुटं पापयुग्यदि ॥ ५४ ॥
वाच्यश्चतुष्पदां नाश एवं युक्त्या विचिन्त्यताम् ।
दिवसत्रितयादर्वाक्कलहो हेतुना विना ।
धनहीनस्य वृद्धस्य भूसुरस्य समागमः ॥ ५६ ॥
अग्निभीतिस्ततो नाशः पात्रस्य वसनस्य वा ।
ततः क्षतशरीरस्य रोगिणो वा समागमः ॥ ५७ ॥
ततः सर्पागमः शुद्धविप्रस्यागमनं ततः ।
नाशश्चतुष्पदां यद्वा दासस्य पतनं ततः ॥ ५८ ॥
समीपे कस्यचिन्मृत्युर्व्याधिताष्टमगे विधौ ।
भृङ्गाद्यैर्दीपहानिर्वा लक्षणानि मृतेर्नव ॥ ५९ ॥
दस्रादिनवताराणां त्रिस्फुटे तु त्रिकोणगे ।
त्रिस्फुटांशस्य राशेर्वा त्रिकोणेन्दौ तदुद्भवः ॥ ६० ॥

दोषैरशुभमिति । दुर्बलतादयो दोषाः । इष्टभावस्थित्यादयो गुणाः । द्रेक्काणाद्यधिपैरेवेति मतान्तरम् । एवकारेण तदाश्रितराशिपपर्यन्तानुधावनं व्यवच्छिद्यते ॥ ५०—५३ ॥

**त्रिस्फुट इति** ॥ अर्कादिभिस्सप्तभिः । पित्रादीनां पितृमातृभ्रातृबन्धुपुत्रभार्या (स्त्रीप्रश्ने भर्तृ) भृत्यानाम्। चतुष्पदांशकाः 'पूर्वापरे मृगहयाङ्कदले मृगेन्द्रो मेषो वृषश्च पशव' इत्युक्तः ॥ ५५ ॥

**दिवसेति** ॥ आढ्यश्रोणिसुरेति ग्रन्थान्तरोक्तप्रकारादपरोयं प्रकारः । त्रिस्फुटे दस्रादिनवताराणां त्रिकोणगे सति मृतेर्नवलक्षणानि । इत्यन्वयः । अश्विमघामूलस्थे त्रिस्फुटे हेतुना विना कलहः । दिवसत्रितयादर्वागिति कलहमात्रे संबध्यते । अन्यत्राप्यु प्रश्न दिवसासन्नदिवसेष्वित्येव चिन्त्यम् । पात्रस्य वसनस्य वेति तुरीयलक्षणस्यैव विकल्पद्वयम् । एवं क्षतशरीरस्य रोगिणो वेति पञ्चमस्य । नाशश्चतुष्पदां यद्वा दासस्य पतनमित्यष्टमस्य । भृङ्गाद्यैर्दीपहानिर्वेति नवमस्य । त्रिस्फुटांशस्य राशेर्वा त्रिकोणन्दाविति चन्द्रे त्रिस्फुटराश्यंशात्रिकोणान्यतमस्थे सत्येवोक्तलक्षणसद्भावे मृतिसूचकत्वम् । एतेषां लक्षणानां पृच्छकसन्निकृष्टगृहसम्भवत्वमपि चिन्त्यम् ॥ ५६—६० ॥

ज्वरस्तापस्तनौ मूर्ध्नि विशेषेणोष्णतेजसः ।
अतिसारः क्षुधा भानोर्भूमिपुत्रस्य तु व्रणः ॥ ६१ ॥
ज्ञस्य वाङ्मनसोः स्तम्भः पारवश्यं च नेत्रयोः ।
वेदना सकलाङ्गेषु धीभ्रमश्च गुरोः स्मृतः ॥ ६२ ॥
शोफः शुक्रस्य मन्दस्य सङ्कोचः करपादयोः ।
राहोस्तु पतनं केतोर्व्याधिर्व्रण उदाहृतः ॥ ६३ ॥
त्रिस्फुटेन समेतस्य त्रिस्फुटांशकपस्य वा ।
रोगिणो यदि रोगः स्यान्मरणं तस्य निश्चितम् ॥ ६४ ॥
दशामपहृतिं छिद्रमानीय त्रिस्फुटोडुनः ।
एष्याभिर्घटिकाभिस्तैर्वत्सरान्तःफलं वदेत् ॥ ६५ ॥
त्रिस्फुटोडुसमूलेशा आरूढानिष्टभावगाः ।
तदीशा नीचगा मूढा मान्दीशाश्चाशुभप्रदाः ॥ ६६ ॥

अत्र प्रश्नदशानयने पक्षान्तरमस्ति । तदपि लिख्यते ।

प्रश्नोडुत्रिस्फुटाभ्यां विधिवदुडुदशां
मान्दिनापि प्रतीपं
याताभिर्नाडिकाभिर्नयतु तिसृषु वै
गृह्यतां तासु चैका ।

**ज्वर इति** ॥ समेतस्य ग्रहयोगसम्भवे युक्तस्य । तदभावेंशकपस्य मूर्ध्न्युष्णज्वरेत्यादिश्लोकोक्तानेव रोगानेते प्रायेणानुकुर्वन्तीति ज्ञेयम् ॥ ६१ — ६४ ॥

**दशामिति** ॥ त्रिस्फुटस्यैष्यनाडीभिरित्यादिग्रन्थान्तरस्थश्लोकद्वयानुवाद एवायम् । त्रिस्फुटोडुनः एष्याभिर्घटिकाभिर्दशादिकमानीय वत्सरान्तःफलं वदेत् । समूलेशाः वधप्रत्यरविपन्नक्षत्राधिपाः ॥ ६५, ६६ ॥

**अत्रेति** ॥ तत्पक्षान्तरम् ॥

**प्रश्नेति** ॥ मान्दिना प्रतीपं मान्दिस्फुटनक्षत्रे गताभिर्नाडिकाभिः शिष्टदशानेयेति पुनस्तदधोधो नक्षत्राधिपदशा योज्येति चार्थः । एतदेव याताभिरिति विवृतम् । शुभतदितरदे प्रश्ने यानुरूपा तिसृषु प्रोक्तासु दशासु तादृशी एका गृह्यताम् । आब्दिके मासिके वा

प्रश्ने यात्रानुरूपा शुभतदितरदे
चाब्दिके मासिके वा
खेटाब्दा वासराः स्युस्त्रिगुणितविहृता
वैव नेया दशेन्दोः ॥ ६७ ॥

॥ इति प्रश्नमार्गे षष्ठोध्यायः ॥

—:०:—

## अथ सप्तमाध्यायप्रारम्भः ॥

अथाष्टमङ्गलफलान्युच्यन्ते ।

वामस्थेन फलं भूतं वर्तमानं तु मध्यतः ।
दक्षिणस्थेन भावीनि फलानि च विनिर्दिशेत् ॥ १ ॥
अधोमध्योर्ध्वभागेषु वपुषो दक्षिणादयः ।
युग्मसंख्यावपुर्भागे ग्रहोक्तव्याधिमादिशेत् ॥ २ ॥

प्रश्नो द्विविधः । संवत्सरफलज्ञानार्थो मासफलज्ञानार्थश्च । तत्र पूर्वस्मिन् दशासंवत्सरा-स्त्रिगुणा वासराः कल्पनीयाः । सूर्यस्याष्टादश वासरा इत्यादि । द्वितीयस्मिंस्तु चतुर्भिर्हृता दशासंवत्सरा वासराः कल्पनीया इति । शुक्रस्य पञ्च दिनानीत्यादि । वैव नेया दशे-न्दोरिति पक्षान्तरम् । प्रश्नकालीनचन्द्रस्फुटानीतदशैव न तु त्रिस्फुटमान्दिस्फुटानीतदशे इति तत्सिद्धान्तः ॥ ६७ ॥

इति प्रश्नमार्गे षष्ठोध्यायः ॥

—:०:—

**अथेति** ॥ पृच्छानिर्गमेत्याद्युद्देशक्रमेण त्रिस्फुटफलनिरूपणानन्तरं क्रमप्राप्तमष्टम-ङ्गलफलं निरूप्यत इति यावत् ॥

**वामस्थेनेति** ॥ वामस्थेनोदक्स्थेन । अष्टमङ्गलस्य प्राङ्मुखेन कर्तव्यत्वात् ॥ एकस्थानदशस्थानशतस्थानतया परिकल्पने शतस्थानस्थेन ॥ १ ॥

**अध इति** ॥ दक्षिणादयः दक्षिणमध्यवामाः । ग्रहाणां व्याधिविशेषा वक्ष्यन्ते ॥

**स्थानेष्विति** ॥ भास्करादयः अर्करेत्यर्धश्लोकोक्ताः । ध्वजादयो ध्वजधूमेति नि-र्दिष्टाः । गरुडाद्यास्तार्क्ष्यमार्जारेति कथिताः । पञ्चभूतानि 'ध्वजसिंहौ मही'ति श्लोकदर्शिता-

स्थानेषु त्रिषु चैकादिशेषे स्युर्भास्करादयः ।
ध्वजाद्या गरुडाद्याश्च पञ्चभूतानि च क्रमात् ॥ ३ ॥
अर्कारजीवविच्छुक्रमन्दचन्द्राह्वयः क्रमात् ।
ध्वजधूमहरिश्वोक्षखरमातङ्गवायसाः ॥ ४ ॥
तार्क्ष्यमार्जारसिंहश्वाह्याखुद्विपशशास्तथा ।
ध्वजसिंहौ मही दन्तिवृषौ जलमयौ मतौ ॥ ५ ॥
धूमो वह्निः खरो वायुः श्वकाकौ वियदात्मकौ ॥ ६ ॥
अभीष्टार्थागमं कीर्तिं जयं भूपतिमाननम् ।
सभाजनपदग्रामसत्कृतिं कुरुते रविः ॥ ७ ॥
चोरभूपायुधाग्निभ्यो भयं स्कन्दाच्च भैरवात् ।
कलहज्वरपित्तास्रशिरोनेत्रगदान् कुजः ॥ ८ ॥
गुरुदैवतविप्राणां प्रसादजशुभागमम् ।
दुकूलहेमदन्त्यश्वसुताप्तिं कुरुते गुरुः ॥ ९ ॥
श्वगोमृगादितो भीतिं विष्णुकोपं विचर्चिकाम् ।
त्वग्रोगान् सन्निपातं च कुरुते शीतरश्मिजः ॥ १० ॥
भूषणांबरशय्याप्तिं स्त्रीसुखं मृष्टभोजनम् ।
कृषिगोमहिषीलाभं कुरुते भृगुनन्दनः ॥ ११ ॥

---

नि । अत्र उत्तरभागस्थसंख्यया तत्रत्यान् ग्रहान् ध्वजादियोनीर्गरुडादीन् भूतविशेषांश्चावगम्य वक्ष्यमाणप्रकारेण तत्तत्फलानि भूतकाले आदेष्टव्यानि । एवं मध्यगसंख्यया वर्तमानकाले । दक्षिणसंख्यया भविष्यत्काले च ॥ २—६ ॥

**अभीष्टेति** ॥ अत्र ग्रहनिर्देशे चन्द्र इति सामान्येनोक्तेऽपि फलनिर्देशे पूर्णचन्द्रमा इति कथनेन प्रश्नदिवसे चन्द्रः क्षीणश्चेद्धेमसौख्यादिफलस्य सम्पूर्णतयानुभवो न स्यादित्युक्तप्रायम् । एवं चाष्टमङ्गले संख्याजन्यविशेषकल्पनमन्तरेण तदधिपग्रहाणां बलाबलविशेषेण फलविशेषोऽप्याचार्याभिमत इति पूर्णपदोपादानेन ज्ञाप्यते । उचितं चैतत् । अन्यथा संख्यामात्रेण फलादेशे सुकरेऽर्कारेत्यादिग्रहविशेषकल्पनमपि व्यर्थं स्यात् । अतस्तत्तत्संख्यालभ्यानां ग्रहाणां प्राबल्यदौर्बल्यवशतः इष्टानिष्टस्थितिभेदाच्च निर्दिष्टेषु फलेषु युक्त्या-

वातशूलामयं चोरदुर्जनेभ्यो भयं शनिः ।
कुरुते मरणाद्भीतिं दुर्ग्रहाणां च पीडनम् ॥ १२ ॥
वेश्मसौख्यं मनःप्रीतिं सुहृत्स्वजनसङ्गमम् ।
जलोत्थसस्यपानान्ननार्याप्तिं पूर्णचन्द्रमाः ॥ १३ ॥
कुष्ठपामादिकान् रोगान्नेत्रपादभवानपि ।
विषभीतिं च नीचानां विरोधं कुरुते फणी ॥ १४ ॥
आरोग्यमर्थलाभं च लभते शत्रुनाशनम् ।
पुत्रलाभं च नियमाध्वजसन्दर्शनान्नरः ॥ १५ ॥
चित्तदुःखं महाव्याधिं शत्रुपीडां निरर्थताम् ।
स्थानभ्रंशं विवादं च लभते धूमदर्शनात् ॥ १६ ॥
नीरोगत्वं सुतप्राप्तिं मनःप्रीतिं धनागमम् ।
द्विजभूपालसम्मानं लभते सिंहदर्शनात् ॥ १७ ॥
विप्रत्रासं भयं चैव द्रव्यनाशं रुजं तथा ।
अपमृत्युं विवादं च निर्दिशेच्श्वप्रदर्शनात् ॥ १८ ॥
स्त्रीलाभं पुत्रलाभं च धनलाभं गृहं सुखम् ।
लभते चायुरारोग्यं वृषसन्दर्शनान्नरः ॥ १९ ॥
द्विषदागमं रोगं स्थाननाशं धनक्षयम् ।
कार्यहानिं मनःक्लेशं लभते खरदर्शनात् ॥ २० ॥

त्याल्पभेदकल्पनं कार्यमेव । निर्दिष्टफलानि सामान्यरूपाणि । युक्त्या तद्विशेषः परिकल्प्यादेष्टव्यः । अत्रार्कजीवशुक्रचन्द्राणां ओजसंख्यावगम्यानां शुभफलमितरेषामशुभफलं चेति सामान्यतोवगन्तव्यम् । एवं सूर्यादिग्रहाणां फलविशेषं निरूप्य ध्वजादीनां फलं निरूप्यते ॥ ७—१४ ॥

**आरोग्यमिति ॥** ग्रहाणां सूर्यादीनां राह्वन्तानामष्टानां फलानिर्देशे कृत्वा फल कर्तृत्वं प्रतिपादितम् । ध्वजादीनां तु तन्न । अत एषां ग्रहवत्फलकर्तृत्वं न । किं तु स्वस्वनिर्दिष्टफललाभसूचकत्वमेव । अत एव ग्रहोक्तफलविचारे तत्कर्तृणां ग्रहाणां प्राबल्यदौर्बल्यनिरूपणमिष्टानिष्टस्थित्यादिविशेषपर्यालोचनं च विधेयमिति पूर्णचन्द्रमा इति पूर्वत्र पूर्ण

स्त्रीभोगं धनधान्याप्तिं सुहृदां सङ्गमं सुखम् ।
भूपालरत्नलाभं च कथयेद्गजदर्शनात् ॥ २१ ॥
स्थानभ्रंशं सुहृन्नाशं स्थाननाशं महाभयम् ।
जीवनाशमरेर्मृत्युं लभते काकदर्शनात् ॥ २२ ॥
सर्पादयः क्रमान्मध्ये चत्वारो दक्षिणे पुनः ।
तार्क्ष्यादयश्च चत्वारो यदि ते मरणप्रदाः ॥ २३ ॥
एवं क्रमात्स्थितेष्वेषु मार्जारस्याखुभक्षणम् ।
चकोरश्येनपूर्वाणामुरगग्रहणं तथा ॥ २४ ॥
शशस्य ग्रहणं मांसखण्डं वादाय चागमः ।
कुकुरस्य गृहे प्रष्टुरेतन्मरणलक्षणम् ॥ २५ ॥
ओतौ मध्यस्थिते वाच्यं प्रष्टुस्तल्लङ्घनादिकम् ।
सारमेये ततो भीतिर्व्याघ्रादिभ्योथवा भयम् ॥ २६ ॥
मूषिके मूषिकैर्वस्त्रशयनादिनिकृन्तनम् ।
वायसे वायसस्पर्शः शकृत्पातोस्य वा तनौ ॥ २७ ॥

विशेषणग्रहणेन ज्ञापितम् । एतेन सूर्यादिग्रहफलानां ध्वजादियोनिफलानां च पार्थक्येन निर्देशः किमर्थ इति प्रश्नोपि प्रत्युक्तः ॥ १५—२२ ॥

**सर्पादय इति** ॥ मध्ये वर्तमानफलप्रदे स्थाने । दक्षिणे भाविफलप्रदे । तार्क्ष्यादीनां हनने कर्तृत्वं सर्पादीनां कर्मत्वं चेति विभावनीयम् । क्रमात् तार्क्ष्ये दक्षिणभागस्थे सर्पे मध्यभागस्थे च सति मार्जारकर्तृकाखुकर्मकभक्षणमिति क्रमो नात्र विवक्षितः । किं तु स्थितावेव क्रमविवक्षा । लक्षणचतुष्टये पुनरन्यतममेव ग्राह्यम् । एतज्ज्ञापनायैव मार्जारकर्तृकाखुभक्षणं प्राथम्येन । चकोरादिकर्तृकसर्पग्रहणं द्वैतीयीकत्वेन च प्रत्यपादि शशस्य ग्रहणमित्यत्र कुक्कुरस्येत्यनुकृष्य सारमेयकर्तृकं शशग्रहणमिति व्याख्येयम् । विकल्पार्थको वाशब्दोपि लक्षणेषु क्रमविवक्षाभावं विशदयति । लक्षणानां प्रष्टृदृष्टिविषयत्वे दोषाधिक्यं विज्ञेयम् ॥ २३—२५ ॥

**ओताविति** ॥ स्थानद्वयस्थितसंख्यापेक्षफलनिर्देशानन्तरं मध्यस्थानमात्रस्थितसंख्यापेक्षया निरूपणीयं फलमनेन श्लोकत्रितयेनोच्यते । तत्तदुक्तलक्षणसद्भावे पूर्ववत्पृच्छ-

खरे चतुष्पदाद्भीतिर्धूमे तु भयमग्निजम् ।
एतत्तु सकलं प्रष्टू रोगाद्यशुभसूचकम् ॥ २८ ॥
एकस्य यदि वैर्यन्यो मध्यदक्षिणसंस्थयोः ।
खेटयोरुभयत्रापि पापौ चेच्चाशुभं वदेत् ।
सुहृदावुभयत्रापि पापावपि शुभप्रदौ ॥ २९ ॥
भूतेषु शुभदा पृथ्वी तथैवापः प्रकीर्तिताः ।
वह्निर्वायुस्तथा काशस्त्रयोमी चाशुभप्रदाः ॥ ३० ॥
एकत्र स्यादग्निः
परत्र तोयं च मध्यदक्षिणयोः ।
यदि तर्हि विनिर्देश्यं
प्रष्टू रोगोथवा मरणम् ॥ ३१ ॥
एकस्थानदशस्थानशतस्थानतया पुनः ।
स्थानत्रयं प्रकल्प्यातो नीलभक्तावशेषतः ॥ ३२ ॥

कस्य मरणं नादेष्टव्यम् । किं तु रोगाभिवृध्याद्यशुभफलमेव । तत्रापि विषमसंख्यानां शुभसूचकत्वादशुभसूचकयुग्मसंख्यास्वेव युज्यते निरूपणमेतत् । ओतुर्मार्जारस्तल्लंघनं मार्जारलंघनम्। आदिशब्दात्तद्दंशादिकं ग्राह्यम्। सारमेयः श्वा । ततः सारमेयात् । व्याघ्रादिभ्यः आदिशब्देन वृकादयो दुष्टजन्तवो ग्राह्याः । वायसः काकः । अस्य काकस्य । खरे मूषिक इत्याद्युक्तमपि ध्वजादियोनिविशेषसूच्यत्वात्पृथगुपादानम्। एवं धूमेपि ॥ २६–२८ ॥

**एकस्येति** ॥ पुनरपि सिंहावलोकनन्यायेन सूर्यादिग्रहविशेषजन्यमेव फलं निरूप्यते । मध्यदक्षिणसंस्थयोः खेटयोरन्यतरस्यान्यतरस्मिन् शत्रौ सत्यशुभं फलं वदेत् । तावुभौ पापौ चेदप्यशुभमेव । सुहृदौ परस्परबन्धू 'उभयत्रापि पापौ' चेदित्यस्यापवादोयम् ॥ २९ ॥

**भूतेष्विति** ॥ क्रमप्राप्तं भूतफलमनेन निरूप्यते । अत्र प्रथमश्लोको भूतानामौत्सर्गिकं फलं प्रदर्शयति। द्वितीयस्तु मध्यदक्षिणभागस्थभूतद्वयविशेषजन्यं फलम्॥३०,३१॥

**एकस्थानेति** ॥ एकस्थानेत्यादिश्लोकत्रयेणाष्टमङ्गलोत्थानि तिथीन् वारान् नक्षत्राणि राशीन् नवग्रहान् पञ्चभूतानि च ज्ञातुं क्रियाक्रमो दर्शितः । तत्र वामस्थं शतस्थानतया मध्यस्थं दशस्थानतया दक्षिणस्थमेकस्थानतया च परिकल्प्य त्रिंशदादिभिर्हरणं विधे-

शुक्लप्रतिपदाद्याः स्युस्तिथयः सारशेषतः ।
तारा वाराः सप्तशेषात् प्रियशेषात्तु राशयः ॥ ३३ ॥

नवभक्तावशेषात्तु विज्ञेयाः स्युर्नवग्रहाः ।
तथैव पञ्चभूतानि पञ्चभक्तावशेषतः ॥ ३४ ॥

प्रष्टृष्टमो भवेद्राशिः प्रष्टृनिष्टाश्च तारकाः ।
यदि चेदिह वक्तव्यं पृच्छकस्याशुभं ध्रुवम् ॥ ३५ ॥

एभिस्तिथ्यादिभिर्योगा मृत्युदग्धादयो यदि ।
प्रष्टुर्विपत्तिरादेश्या सुधायोगादयः शुभाः ॥ ३६ ॥

स्थानत्रयेपि युग्माः स्युर्यदि संख्या मृतिर्भवेत् ।
वाममध्यमयोर्युग्मा यदि स्यान्महती रुजा ॥ ३७ ॥

यम् । नीलसारप्रियशब्दान्यक्षरसंख्यारूपाणि । प्रष्टृष्टमेत्यादिश्लोकद्वयेन तज्जन्यफलादेशप्रकारोपि कथितः । मृत्युयोगादीनां निरूपणप्रकारः कालशुभाशुभनिरूपणघट्टे प्रदर्शितः ॥

**स्थानत्रयेपीति** ॥ वाममध्यमयोरिति वचनस्य निर्विषयत्वं केचिदाशङ्कन्ते । 'वराटीः साष्टकं शत'मित्युक्तत्वादष्टोत्तरशतं वराटिकाः स्थानत्रयत्वेन परिकल्प्य स्थानत्रितयेप्यष्टाष्टहरणेन शिष्टा खलु संख्याष्टमङ्गलस्य । तस्माच्चतस्रो द्वादश विंशतिर्वा वराटिका आहृत्य भवेयुः । तथात्वे वाममध्यमयोर्युग्मा दक्षिणे ओजसंख्येति न कदापि संभवेदिति तेषामाशयः । अत्र केचिदेवं समादधते—वाममध्यमस्थानगतसंख्ययोस्सङ्कलने युग्मसंख्या भवेच्चेन्महारोगः फलमिति ; वाममध्यमयोरुभयोरोजसंख्यात्वेपि सङ्कलने युग्मसंख्या भवेदिति । इदं च वस्तुतोपसिद्धान्तरूपं स्यात् । 'ओजसंख्यासु शिष्टास्वि'त्यादिवचनेन निसर्गत ओजसंख्यानां शुभत्वात् । अन्ये तु 'नायमपसिद्धान्तः स्यात् । ओजसंख्यानां शुभत्वं युग्मसंख्यानामशुभत्वं च वाचानिकत्वात्खलु सिध्यति । तथैव वाचानिकत्वादिदमपि सम्मन्तव्यमिति तदाशयः । अपरे तु वामस्थाने मध्यमस्थाने वैकस्मिन् युग्मसंख्यायां महारोगः फलमित्यर्थमभिदधते । वाममध्यमयोरित्येव खलु वचनं न तु वाममध्यमयोरुभयोरपीति । अतः उभयोरपीत्यध्याहृत्य निर्विषयत्वसम्पादनापेक्षयान्यतरस्मिन्नित्यध्याहृत्य सद्विषयत्वसम्पादनमेव साधीय इति तदाशयः । अपरे तु शास्त्रस्य व्यापकत्वायासंभवत्स्वपि विषयेषु लक्षणकथनं शास्त्रीयसम्प्रदायायातमतो न कापि क्षतिः । अत एव पर्जन्यलक्षणप्रवृत्तिरित्यभिदधत्याप्ताः । वराहमिहिराचार्योपि कण्ठत एव विषयमेतमनुमन्यते । यत एव

संख्यां मध्यगतां हत्वा शुभेन विभजेद्दिनैः ।
निश्शेषे मरणं प्रष्टुर्द्विशेषे सुतपञ्चता ॥ ३८ ॥
स्वजनापच्चतुःशेषे षट्छेषे पृच्छकामयः ।
ओजसंख्यासु शिष्टासु सुखारोग्यादिसम्भवः ॥ ३९ ॥
न्यस्य स्थानत्रयं द्वाभ्यां वामस्थं मध्यगं त्रिभिः ।
चतुर्भिर्दक्षिणं स्थानं हत्वा पक्षः सितो यदि ॥ ४० ॥
चलाङ्गं दैवतं कृष्णे पक्षे क्षिप्त्वा हरेद्भुजैः ।
फलराशिगते जीवे शिष्टं प्रियनगैर्नतैः ॥ ४१ ॥
हत्वा वेदाप्तराश्यादि गते च रविजे मृतिः ॥ ४२ ॥

माह— 'पूर्वशास्त्रानुसारेण मया वज्रादयः कृताः । चतुर्थभवने सूर्यात् ज्ञसितौ भवतः कथम् ॥' इति । तत्र कालभेदात् सूर्याच्चतुर्थराशावपि बुधशुक्रस्थितिर्भवेदेवेति केषांचित्समाधानं तु युक्तिनिपुणगणकमनसि न लभतैव पदमित्यलं विमर्दाक्षमविषयविमर्देनेत्येतावति विरम्यते ॥ ३७ ॥

**संख्यामिति ॥** ओजसंख्यास्विति युग्मसंख्यासु सामान्येनाशुभत्वेपि प्रत्येकं विशेषसद्भावात्पृथक्फलोक्तिः । ओजसंख्यासु तु तदभावान्निर्विशेषोक्तिः । युग्मसंख्याशेषे यद्यपि गुणनहरणाभ्यां पूर्वमेव संख्या लभ्यते तथापि ओज संख्याशेषे संख्याभेदो भवेदेवेति क्रियारंभः । वस्तुतस्तु तत्रापि फलविशेषानिर्देशात्क्रियारम्भो वैचित्र्यार्थ इत्येव युज्यते वक्तुम् । शुभदिनशब्दावक्षरसंख्यापरौ । तत्र गुणकारस्य पञ्चचत्वारिंशतः स्थाने पञ्चसंख्यास्वीकारेपि फलभेदो न स्यात् क्रियालाघवं च भवेत् । तथापि क्रियागौरवं शिष्यबुद्धिविकासप्रदमित्याचार्याः क्वचित्तदभ्युपगच्छन्त्येव । अत एव स्थलान्तरेष्वप्याचार्या एवंविधं प्रदर्शयन्ति क्रियाक्रममित्यवधेयम् । अन्ये तु संख्यां मध्यगतामिति एकस्थानदशस्थानशतस्थानतया स्थानत्रयस्य कल्पितत्वान्मध्यदक्षिणगतसंख्ये एकीकृत्य जायमाना संख्यात्र माह्येति मन्यन्ते । एवं च दशाधिका संख्या सर्वत्रापि स्यादेवेति मन्तव्यम् ॥

**न्यस्येति ॥** १. चलाङ्गं, २. दैवतं, ३. भुजः, ४. प्रियः, ५. नगः, ६. नतः, ७. वेदः, एते शब्दा अक्षरसंख्यापराः । निर्याणकालिकशनिजीवस्फुटानयनार्थमिदम् । वार्षिकप्रश्ने वर्षात्पूर्वं मासिकप्रश्ने मासात्पूर्वं च शनेः आनीतस्फुटस्थितिर्जीवस्य फलराशिस्थितिश्च स्याच्चेत्तदात्वे पृच्छकस्य मरणं निश्चयेन स्यादिति भावः ॥४०–४२॥

अष्टमङ्गलमित्युक्तं संक्षेपेण गुरूदितम् ।
गुरुभक्त्येश्वरं ध्यायन् वदेत्सत्यं भवेद्ध्रुवम् ॥ ४२ ॥

॥ इति प्रश्नमार्गे सप्तमोध्यायः ॥

---

# अथ अष्टमाध्यायप्रारम्भः ॥

---

अथ आरूढादिफलमुच्यते ।

आरूढोदयलग्नांशछत्रस्पृष्टाङ्गराशयः ।
चन्द्राधिष्ठितराशिश्च चिन्त्याः षट्प्रश्नकर्मणि ॥ १ ॥

**अष्टमङ्गलमिति** ॥ ज्योतिश्शास्त्रेहं सम्यगधीती, तच्छास्त्रानुरोधेन सर्वमपि फलमादिशेयं, शास्त्रसिद्धान्तबलान्मदादिष्टफलं सर्वमपि यथार्थमेव सम्भवेदिति गर्वेण फलादेशे कृते परिहासपात्रतैव स्यात् । न तु तदादिष्टफलस्य याथार्थ्यमित्युत्तरार्धेन प्रतिपाद्यते । शास्त्रस्य बहुमुखत्वमस्ति यथार्थमार्गावगतौ गुरुप्रसादो दैवानुग्रहसहकृत एव शरणम् । किंचोपश्रुतीनां तत्काललक्षणानां च संभवस्तदवधारणं तन्मूलकफलनिरूपणस्य यथार्थमार्गानुधावित्वं च गुरुप्रसाददैवानुग्रहमात्रायत्तमिति रहस्यम् । अष्टमङ्गलतिथ्याद्यानयने तिथिवारताराराशिभिः फलनिरूपणप्रकार एव कथितः । न तु नवग्रहैः पञ्चभूतैश्च । ग्रहाणां शुभाशुभफलप्रदत्वं बहुशो निर्दिष्टमिति; भूतानां तु भूतेषु शुभदा पृथ्वीत्यादिनात्रैवाध्याये प्रदर्शितमिति तदाशयः । 'स्थानत्रयेपि युग्माः स्यु'रिति श्लोकस्तु केषुचित् कोशेषु न दृश्यते । तत्कोशानुसरणे पूर्वोक्तानामाशङ्कानां तत्समाधानाय जटिलगहनमार्गानुधावनस्य चावकाशो नास्तीति तदनुसारिभिः सन्तोष्टव्यमित्यलम् ॥ ४२ ॥

इति प्रश्नमार्गे सप्तमोध्यायः ।

—:०:—

**अथेति** ॥ निर्देशक्रमेणाष्टमङ्गलफलकथनानन्तरमारूढादिफलकथनमनेन प्रतिज्ञायते ॥

**आरूढेति** ॥ १ आरूढराशिः, २. उदयलग्नराशिः, ३. उदयलग्ननवांशराशिः, ४. छत्रराशिः, ५. स्पृष्टाङ्गराशिः, ६. चन्द्राधिष्ठितराशिः एते षड्राशयः प्रश्नक्रियायां चिन्त्याः । छत्रराशिज्ञानमुत्तरत्र वक्ष्यति । स्पृष्टाङ्गराशिरिति प्रश्नकाले पृच्छकेन स्पृष्टस्याङ्गस्य 'कालाङ्गानि वराङ्गमानन'मित्याद्युक्तप्रकारो राशिर्ग्राह्यः ॥ १ ॥

एषां सदसद्योगा-
दारोग्यसरोगतादि शुभमशुभम् ।
अशुभशुभावस्थाया
बलवत्वात्मष्टुरुक्तमिति शास्त्रे ॥ २ ॥

यदङ्गराशिः संस्पृष्ट आरूढ उदितोथवा ।
तस्मिन् पापयुते ब्रूयात्तदङ्गे रुग्व्रणादिकम् ॥ ३ ॥

आरूढोदयपेन्द्वर्का अपि तच्छुक्रराशिपाः ।
तुङ्गांशे बलवन्तश्चेत्पूर्णावस्थां तु पृच्छताम् ॥ ४ ॥
एते बलविहीनाश्चेद्रिक्तां च कथयेद्दशाम् ।
नीचार्यंशगतास्ते चेदनिष्टफलदा दशा ॥ ५ ॥

आरूढेशे बलविरहिते
रन्ध्रपे वीर्ययुक्ते
तस्मिन् काले विपदतितरां
जायते पृच्छकस्य ।

**एषामिति** ॥ एषां षण्णाम् । अशुभशुभावस्थायाः अत्र हेतुसाध्ययोर्यथासंख्यं न विवक्षितम् । वृत्तानुरोधेन न्यासः । सद्योगे शुभावस्थायाः प्राक्तनशुभकर्मपरिपाकस्य प्राबल्यादारोग्यादिशुभम् । एवमन्यत्रापि । अशुभशुभावस्थायां बलवत्त्वादिति पाठान्तरम् । सद्योगेन शुभावस्थायामसद्योगेनाशुभावस्थायां च मिश्रायां बलवत्त्वाच्छुभाशुभसंबन्धयोः प्राबल्येन फलमादेष्टव्यमिति यावत् । मिश्रे प्राबल्येन फलनिरूपणं न्यायसिद्धं प्रसिद्धं चे-त्येतत्सर्वत्रोपयोक्तव्यम् ॥ २ ॥

**यदङ्गराशिरिति** ॥ तदङ्गे 'कालाङ्गानि वराङ्गमानन'मित्युक्तप्रकारेण तद्राशि-संबन्ध्यवयवे ॥ ३ ॥

**आरूढेति** ॥ १. आरूढाधिपः, २ उदयलग्नाधिपः, ३. चन्द्रः, ४. आ-दित्यः, एते चत्वार एतदधिष्ठितराश्यधिपाश्च पूर्णबलवन्तश्चेत्पृच्छकस्य धनसन्तानादिसमृ-द्धिपरिपूर्णावस्था वक्तव्या । दुर्बलाश्चेद्धनसन्तानादिविरहितावस्था । ते नीचांशकशत्रुनवांश-कगताश्चेच्छत्रूपद्रवव्याध्याद्यरिष्टफलमस्यादेष्टव्यम् ॥ ५ ॥

**आरूढेश इति** ॥ आरूढाधिपस्य दौर्बल्यमष्टमाधिपस्य प्राबल्यं च यस्मिन् का-

आरूढेशः शुभपतिरपि
प्राप्तवीर्यौ विवीर्या
यत्रार्यायुर्व्ययभपतयः
सर्वभाग्यागमोत्र । ६ ॥

अवस्थासप्तकद्वन्द्वं ग्रहाणामस्ति तत्समा ।
भवेच्च पृच्छकावस्था प्रोक्तं शास्त्रान्तरे तथा ॥ ७ ॥
समबन्धुनिजक्षेस्वत्रिकोणोच्चारिनीचभे ।
सप्तावस्था ग्रहाणां स्युरतिबाल्यादयः क्रमात् ॥ ८ ॥
अतिबालश्च बालश्च कुमारो युवभूमिपौ ।
वृद्धो मृत इति स्थानभेदतः क्रमशो दशाः ॥ ९ ॥
सूर्यादुदितमात्रो यः सोतिबालो भवेद्ग्रहः ।
दिनानि सप्त बालः स्यात्कुमारः स्यादतः परम् ॥ १० ॥
युवा वक्रसमारम्भे वक्रगत्यां महीपतिः ।
आसन्नास्तमयो वृद्धः सूर्यलुप्तकरो मृतः ॥ ११ ॥
एवं द्विधा ग्रहावस्था प्रोक्ता वाच्या तु पृच्छताम् ।
आरूढलग्नच्छत्राणामीशेषु बलिनो दशा ॥ १२ ॥

ले भूते वर्तमाने भविष्यति वा तदा विपत्संभवो वाच्यः । आरूढाधिपस्य भाग्याधिपस्य च प्राबल्यं षष्ठाष्टमद्वादशाधिपानां दौर्बल्यं च सर्वभाग्यागमकालसूचकम् ॥ ६ ॥

**अवस्थेति** ।' ग्रहाणामतिबालत्वादयो मृतत्वान्तास्सप्तावस्थाः समराश्यादिषु नीचराश्यन्तेषु सप्तसु स्थानेषु स्थित्या क्रमेण भवेयुः । प्रकारान्तरेणाप्यवस्थासप्तकनिरूपणं कार्यम् । सूर्यादुदितमात्र इति मौढ्यावसानात्परं दिनमात्रमिति यावत् । अतः परं वक्रारम्भात्पूर्वमित्यर्थः । गतेः क्षयारम्भो वक्रारम्भः । आसन्नास्तमयो वृद्धः मौढ्यारम्भात्प्राक्प्रायेण दिनसप्तक इत्यर्थः ॥ ७ — ११ ॥

**एवमिति** ॥ ईशेषु त्रयाणामधिपेषु मध्ये । निर्धारणे सप्तमी । बलिनोधिकबलवतः । इह लोके । प्रथिताः अतिबालस्य वचनेष्वसामर्थ्यादि; बालस्य क्रीडासक्तत्वादि; कुमारस्य विद्याभ्यासश्रद्धादि; यूनः स्त्रीसक्ततादि; राज्ञः परिवारबाहुल्यादि; वृद्धस्य कर्मो-

अतिबालादिकानां ये स्वभावाः प्रथिता इह ।
यून स्त्रीसक्तेत्याद्यास्त एवेह दशा मताः ॥ इति ॥ १३ ॥
उच्चे राशावंशके वा स्थितो यो
वारेशुष्यारूढराशिस्तदुच्चः ।
यद्यारोग्यं दीर्घमायुश्च वाच्यं
प्रष्टुर्मृत्युर्वैपरीत्ये त्वमुष्मात् ॥ १४ ॥
सिंहे कुक्ष्यक्षिजो व्याधिरात्मपीडोष्णरुक्तथा ।
वक्षोजिह्वास्यरोगोरुच्यम्बुरोगास्तु कर्कटे ॥ १५ ॥
शिरोनेत्रभवव्याधिज्वरव्रणविचर्चिकाः ।
भौमभे बुधभे वायुरोधनाशात्वगामयाः ॥ १६ ॥
अरूढे जीवभे बुद्धिभ्रमकर्णामयादयः ।
शुक्रभे व्यञ्जनोत्था रुगरुचिश्चांबुजो गदः ॥ १७ ॥
बुद्धिभ्रमोऽङ्गसादश्च मलयानहतिः शनेः ।
विचर्चिकां च कण्डूतिं ब्रूयात्सर्पान्वितोक्षिते ॥
आरूढे पापसंयुक्ते नियमेन वदेदिदम् ॥ १९ ॥

शक्त्यादिः मृतस्य मूर्छादि । प्रकारद्वयेनावस्थाया भेदे विकल्पनाभयादेशो न्याय्यः । ते स्वभावाः । इहावस्थानिरूपणे ॥ १२, १३ ॥

**उच्चेरिति** ॥ वाराधिपस्योच्चराश्यंशकान्यतरास्थितिरारूढराशेर्वाराधिपोच्चराशित्वं चारोग्यादिप्रदम् । वाराधिपस्य नीचराश्यंशकान्यतरास्थितिरारूढराशेर्वाराधिपनीचराशित्वं च मृत्युप्रदम् ॥ १४ ॥

**सिंह इति** ॥ अत्रारूढराशिवशेन रोगविशेषाः प्रदर्शिताः । राहो राश्याधिपत्याभावादारूढस्य तद्योगदृष्टिसद्भावे विचर्चिकाकण्डूती रोगावुक्तौ । तत्र राहुयोगदृष्ट्यन्यतरसत्त्वे तत्तद्राश्युक्तरोगा विचर्चिकाकण्डूती च वक्तव्या एव । आरूढस्यावश्यमद्भावादेवं सर्वेष्वपि प्रश्नेषु रोगकथनावकाशस्स्यादिति स्वस्थविषयप्रश्नस्य निरवकाशत्वमायातमिति चेन्मैवम् । 'आरूढे पापसंयुक्ते' इत्यर्धेनारूढस्य पापयोग एवेदं नियमेन सम्भवादिति स्वस्थविषयप्रश्ने पापयोगाभावे आरूढेन रोगकथन न कार्यमिति सिध्यति । पापयोगे तु स्वस्थविषयप्रश्नेऽपि तत्तदुक्तव्याधिरासन्नभावीति सारार्थः । अत्र पापसंयुक्ते इति विशेषणं सिंहा-

आरूढलग्नभांशानां मान्दिराशिनवांशयोः ।
योगो रोगप्रदस्तत्र बहुयोगो मृतिप्रदः ॥ २० ॥

कलशमधः शिवकोणा-
न्निशिचरतः सिन्धुकायमुपरिगतम् ।
वेदान्तादनलाद्यं
मारुतकोणात् परेषु तिर्यक्त्वम् ॥ २१ ॥

दिषु सप्तम्यन्तेषु संयोज्य पापयोग एवेदं वक्तव्यमिति केचिदाचक्षते । तन्न । नियमेन पदस्य पृथग्वाक्यकल्पनस्येदंशब्दस्य चानावश्यकतापत्तेः ॥ १५—१९ ॥

**आरूढेति ॥** आरूढलग्नभांशानां १. आरूढराशिः, २. उदयलग्नराशिः, ३. आरूढनवांशकः, ४. उदयलग्ननवांशकः एतेषां चतुर्णां योगः मान्दिराशिनवांशकान्यतरसंयोगः । बहूनां द्व्यधिकानां योगः प्रोक्तसंयोगः । अत्रारूढनवांशः स्वर्णस्थित्या विज्ञेयः । नत्वारूढस्फुटेन । 'इहारूढस्फुटं गृह्यता'मित्यत्रेह तथानुक्तेः । स्वर्णनवांशकज्ञानं तु वक्ष्यमाणश्लोकेन कार्यम् ॥ २० ॥

**कलशमिति ॥** कलशमिति मेषमिथुनसिंहाः । सिन्धुकायमिति तुलाधनुःकुंभाः । वेदान्तादिति कर्किवृश्चिककन्याश्चाक्षरसंख्यया ग्राह्याः । एकं राशिं नवधा विभज्य तत्र यस्मिन् खण्डे स्वर्णविन्यासस्तस्य खण्डस्य नवांशको ग्राह्यः । तत्र मेषमिथुनसिंहेष्वीशानकोणादारभ्याधः खण्डगणनं कर्तव्यम् । एवं तुलादिषु निरृतिकोणादुपरीत्यादि यथोक्तं ग्राह्यम् । अत्र राशिग्राहकेषु कलशसिन्धुकायशब्दौ प्रथमान्तौ, वेदान्तशब्दः पञ्चम्यन्तः, परशब्दः सप्तम्यन्त ; इति गृहीतप्रक्रमभङ्गः सोढव्यः । नवांशकबोधनस्यैव प्राधान्येनाचार्यविवक्षाविषयत्वात् । तदंशेनेशेनापि न्यूनताभावात् । काव्यदोषाणामेकान्ततोऽसंभवो न कुत्रापीत्यालङ्कारिकैः कण्ठोक्तत्वात् । अन्वयस्तु तत्तदुचितपदाध्याहारेण कथञ्चिन्नेयः । वस्तुतस्तु सर्वथा विवक्षितार्थबोधशक्तिविकलोऽयं श्लोको नाचार्यप्रणीतः । किं तु येनकेनापि कुकविना प्रक्षिप्तः । अत एव प्राचीनकोशेषु बहुषु न दृश्यते । एवं च'हारूढस्फुटं गृह्यता'मित्यत्रेहशब्दस्यारूढनवांशकज्ञानविषये इत्यर्थकल्पनमेवोचितम् । न चैवं सति स्वर्णनवांशककल्पनस्य वैयर्थ्यं स्यादिति प्रत्यवस्थातव्यम् । इष्टापत्तेः । नन्वेवं सांप्रदायिकस्य स्वर्णनवांशकज्ञानावश्यकत्वस्य का गतिरिति चेदगतिरेव गतिरिति तत्त्वम् । यद्वा ते गतिसम्पादनायान्विष्यन्त्वित्यलम् ॥ २१ ॥

आरूढे वा विलग्ने वा गण्डान्तांशः सपापदृक् ।
उदेति चेद्भवेन्मृत्युरारूढाष्टमभे तथा ॥ २२ ॥

आरूढे मीनभे भ्रष्टा पङ्गुः स्यात्पापवीक्षिते ।
कूपादौ पतनं वाच्यमारूढेऽलिनि वेन्दुभे ॥ २३ ॥

प्राच्यादीत्युक्तवद्राशीनारूढादीन् न्यसेत् क्षितौ ।
वृक्षादीन्निर्दिशेत्स्वोक्तान् केन्द्रगैश्च बलान्वितैः ॥ २४

गिरितरुकदळीकण्टकि-
वेणूनां क्रमुकनाळिकेराणाम् ।
तालानां च वनानि
क्रमशोऽर्कात्स्वामिवत्तु राशीनाम् ॥ २५ ॥

**आरूढ इति** ॥ आरूढस्फुटे उदयलग्नस्फुटे अष्टमभावस्फुटे वा गण्डान्तसद्भावे मृत्युर्वक्तव्य इत्यर्थः । अत्रापि स्वर्णनवांशको ग्राह्यः । अष्टमराशौ तु लग्ने यावान्नवांशस्तावान्नवांशः कल्प्यः; इति केचित् ॥ २२ ॥

**आरूढ इति** ॥ 'पापवीक्षिते' इत्यळीन्दुभयोरपि विशेषणम् ॥ २३ ।

**प्राच्यादीति** ॥ केन्द्रेषु ग्रहाभावेऽपि केन्द्रराशीनां बलवत्त्वे तत्तद्दिशि तत्तद्राश्युक्तवृक्षाणां सद्भावो वाच्यः । एवं ग्रहाणां केन्द्रेभ्योऽन्यस्थितावपि बलवत्त्वे तत्स्थितराशिवशादीशस्वोक्तवृक्षसद्भावोऽवगन्तव्यः । केन्द्रस्थेत्याद्युक्तं राशिबलं स्वोच्चेरूपमित्याद्युक्तं ग्रहबलं प्राच्यादीति, 'प्राच्यादिगृहे क्रियाद्यां द्वौ द्वौ कोणगता द्विमूर्तयः' इति वराहमिहिरोक्तवदित्यर्थः । आरूढद्वितीयराशिः प्राच्यां तृतीयस्याग्नेय्यामित्यादिक्रमेण न्यासः । राशिग्रहयोर्वृक्षविशेषा अनुपदं वक्ष्यन्ते । रत्नशिलाकारस्तु 'राशिभिः खेचरैर्वक्ष्ये तद्वृक्षांश्चात उत्तरं' इति श्लोकार्धं प्रणीय वृत्तपूर्तिमकार्षीत् । किमर्थमिदमिति न जानीमः । प्रमेयप्रतिपादन एव तात्पर्यम् । न तु वृत्तपूरणे शास्त्रकाराणाम् । अनेकशास्त्रग्रन्थक्षुण्णोऽयं मार्गः । श्लोकार्धेऽन्तविरामो वेदेऽपि सम्मतः । अत एव संहितापाठेऽप्यन्तयोरुभयोर्विच्छिद्यैव पाठः श्रूयते । न त्वभ्युपगम्यते सन्धाय पाठः । एवं च वृत्तपूरणायैवं तत्र तत्र श्लोकार्धप्रणयनं वाक्यानां श्लोकार्धतया विपरिणमनं वा नावश्यकमित्येवास्माकीन आशयः । इतोऽत्र प्रकृतशास्त्रपद्धतयः पण्डिता एव प्रमाणम् ॥ २४ ॥

**गिरीति** ॥ वनानि समूहाः काननानि च ॥ २५ ॥

आरूढस्योर्ध्ववक्त्रत्वं प्रष्टुरभ्युदयवृद्धिकृत् ।
आधोमुख्यं क्षयाय स्यात्तत्कृष्णीयादिषूदितम् ॥ २६ ॥

ऊर्ध्वमुखो यदि राशि-
होरा प्रश्ने नरस्य सिद्धिकरी ।
अन्ये विफले ज्ञेये
शुभयुतदृष्टे शुभाख्ये च ॥ २७ ॥

ऊर्ध्वास्ये तनुगे प्रसूतगतका-
र्यारंभिणां पृच्छता-
मौन्नत्यं महदर्थपौरुषयशः-
स्थानादिकानां भवेत् ।
यद्यारूढमधोमुखं भमखिलै-
र्हीयेत वित्तादिभि-
स्त्यज्येतापि सुहृज्जनैरपि पते-
द्द्वाहादितः पृच्छकः ॥ २८ ॥

**आरूढस्येति** । कृष्णीयादिग्रन्थ एव श्लोकद्वयेन प्रदर्श्यते । 'सूर्यमुक्ताद्या ऊर्ध्वाधस्तिर्यगाननाः' इति वचनेन राशीनामूर्ध्वमुखाधोमुखतिर्यङ्मुखत्वभेदोवगन्तव्यः ॥ २६ ॥

**ऊर्ध्वमुख इति** ॥ नरस्य, लिङ्गमविवक्षितम् । सिद्धिरभीष्टकार्यसिद्धिः । अन्येऽधोमुखतिर्यङ्मुखहोरे । शुभयुतदृष्टे अधोमुखतिर्यङ्मुखत्वेपि ॥ २७ ॥

**ऊर्ध्वास्य इति** । गतः ऊर्ध्वमुखराशौ प्रस्थाय गतः । कार्यारंभिणां पृच्छतामिति विशेषणविशेष्यतया सामानाधिकरण्येन न संबन्धः । प्रसवयात्राकार्यारंभेतरविषयप्रश्नेषु जातके च प्रकृतलक्षणाव्याप्त्यापत्तेः । उत्तरार्धे पृच्छकपदस्य प्रसूताद्युपलक्षकत्वमारूढपदस्योदयोपलक्षकत्वं वैयधिकरण्येनान्वये कल्प्यमिति तु न महते क्लेशाय । अतो लक्षणसङ्कोचापेक्षयाधिक्यव्याप्तेः साधीयस्त्वात्सङ्कोचे युक्त्यदर्शनाच्च वैयधिकरण्येनान्वय एव ज्यायान् । स्थानौन्नत्यं सामान्यपुरुषस्य नृपसचिवत्वादि युवराजस्य राजत्वमित्यादि । चतुर्थपदार्थस्य प्रतिद्वन्द्वितया पूर्वार्धे बन्धुजनलाभो वाहनादिसम्पच्च वक्तव्या ॥ २८ ॥

आरूढाधिपतिः शुभग्रहगृहे
प्रश्ने यदि स्यात् स्थितः
क्षोणीशामरमन्दिरादिषु मनो-
ज्ञेषु स्थितिः पृच्छताम् ।
पापक्षेत्रगतः स चेदिह भवे-
न्म्लेच्छप्रदेशे स्थितिः
सौम्यासौम्यदृगन्वयात्सदसतां
योगश्च तत्रोह्यताम् ॥ २९ ॥

शुभवर्गे लग्नगते
लग्ने वा सौम्ययोगमायाते ।
ब्रूयादभिमतसिद्धिं
प्रष्टु स्थानान्तरप्राप्तिम् ॥ ३० ॥

द्विपदे चतुष्पदे वा
भवने लग्नोपगो ग्रहः पापः ।
तिष्ठति तन्नाशकरो
ज्ञेयः सौम्योपि वृद्धिकरः ॥ ३१ ॥

स्वर्णेनारूढविन्यस्तेनापि प्रष्टुः शुभाशुभम् ।
ज्ञेयं शास्त्रान्तरेषूक्तं तदप्यथ निगद्यते ॥ ३२ ॥

**आरूढाधिपतिरिति** ॥ ऊह्यतां स्त्रीग्रहयोगादिभिस्तत्सहवासादिकमित्याद्यपि चिन्त्यम् ॥२९ ॥

**शुभवर्ग इति** ॥ वर्गस्तु 'क्षेत्रं च होरा द्रेक्काणो नवांशो द्वादशांशकः । त्रिंशांशकश्च सप्तांशो ग्रहाणां सप्तवर्गकः' ॥ इत्युक्तः सप्तविधो ज्ञेयः । लग्नशब्देनारूढमपि ग्राह्यम् । 'लग्नस्फुटस्य भं त्यक्त्वे'त्युक्तस्फुटेन तद्वर्गो ज्ञेयः ॥ ३० ॥

**द्विपद इति** ॥ तिष्ठति, यदीति वाक्यशेषः । तच्छब्देन द्विपादाश्चतुष्पादाश्चोच्यन्ते । वृद्धिकरः तेषामेव ॥ ३१ ॥

**स्वर्णेनेति** ॥ निगद्यते, अनन्तरश्लोकचतुष्टयेन ॥ ३२ ॥

जलगन्धार्तवव्रीहितण्डुला भूतपञ्चकम् ।
तन्मयं हि पुनर्ज्ञेयं जीव एव हि काञ्चनम् ॥ ३३ ॥
पुष्पाक्षतोपरि स्वर्णमुत्तानं पृच्छकायुषे ।
तिर्यङ्मृत्युकरं भूस्थं न्यक्तु बाधागदावहम् ॥ ३४ ॥

ऊर्ध्वं पुष्पाक्षतानां निहितमिह भवे-
त्स्वर्णमूर्ध्वाननं चे-
त्तत्काले वर्द्धनं स्याद्धनसुखयशसां
पृच्छकस्योर्ध्वमूर्ध्वम् ।
तत्तत्राधोमुखं चेत्क्षय उपचयतः
किञ्चिदारभ्य एवा-
थोर्ध्वास्यं चेदधस्तात्क्षयत उपचया-
रम्भणं तत्र वाच्यम् ॥ ३५ ॥

सर्वाधोधोमुखं चेत्क्षय इह तु पुन-
श्चापि सर्वक्षयः स्या-
न्मध्यस्थे हेम्नि चोह्यं फलमपि सकलं
प्रोक्तयैवात्र रीत्या

**जलेति** । तन्मयं हि वपुरिति मध्यमवाक्येन स्वर्णस्य जलादिसंबन्धे दीर्घायुष्यं जलादिवैरल्ये देहकार्श्यमित्यादि युक्त्या वक्तव्यमित्यवगम्यते । अयं श्लोकः केषुचित्कोशेषु न दृश्यते । एतन्निरूपणं तु प्रामाणिकं सांप्रदायिकं च ॥ ३३ ॥

**पुष्पेति** ॥ उत्तानमूर्ध्वमुखम् । तिर्यक्त्वे सति भूस्थत्वं मृत्युलक्षणम् । न्यगधोमुखम् ॥ ३४ ॥

**ऊर्ध्वमिति** । इहारूढे । तत्स्वर्णं तत्र पुष्पाक्षतोर्ध्वभागे । उपचयतो भूतकालीनात् । अधस्तात्पुष्पताक्षताधोभागे । उपचयारंभणमेतावत्पर्यन्तं धनादीनां क्षयः इत ऊर्ध्वमुपचय एवेत्यर्थः ॥ ३५ ॥

**सर्वेति** ॥ इह वर्तमानकाले । पुनर्भाविकाले । सर्वेषां धनसुखादीनां क्षयः । म-

दीर्घायुर्मृत्युनैस्स्वे उपचितधनता
प्राग्दिगादिप्लवत्वे
स्वर्णस्याग्न्यादिकोणप्लवन इह पुन-
र्मृत्युरोगाद्यनर्थाः ॥ इति ॥ ३६ ॥

एतदारूढादिविषयम् । अथ लग्नादिफलमुच्यते ।

मान्दीन्दूदयलग्नांशा मृत्युदेहासवश्चरे ।
आयुरारोग्यदास्त्वेते रोगदैर्घ्यप्रदा स्थिरे ॥ ३७ ॥
द्वन्द्वगास्संयुताश्चैते त्रयः प्रष्टुर्मृतिप्रदाः ।
मोहदाः स्युर्मिथो दृष्टास्त्रिकोणस्था महारुजे ॥ ३८ ॥
योगदृष्ट्यादिसम्बन्धस्त्वायुषे प्राणदेहयोः ।
देहमृत्योस्तु रोगाय प्राणमृत्योस्तु मोहकृत् ॥ ३९ ॥

क्षीणेन्द्वर्कसुतारतीक्ष्णमहसां
वर्गा विलग्नस्थिता
मृत्युव्याधिधनक्षयाद्यशुभदाः
प्रष्टुर्यदीमे विदः ।
धीसामर्थ्यकृतोथ पूर्णशशिनः
शुक्रस्य वा वाक्पते-
रेते कुर्युररोगतार्थतनय
प्राप्त्याद्यभीष्टागमान् ॥ ४० ॥

ध्यस्थे, अधोमुखे सति पुष्पाक्षतमध्यस्थिते । ऊह्यं युक्त्या चिन्त्यम् । प्राग्दिगादिप्लवत्वे क्रमेण दीर्घायुरादिफलचतुष्कम् । नैस्स्वं दारिद्र्यम् । कोणभेदान्न फलभेदः ॥ ३६ ॥

**एतदिति** ॥ लग्नादीत्यादिशब्देन मान्दिचन्द्रप्राणादिपरिग्रहः ॥

**मान्दीति** । मान्द्यादयश्चत्वारश्चरे आयुरारोग्यदाः । त्रयः संयोगे त्वंशो न चिन्त्यः । 'लग्नेन्दू' इत्यानीतप्राणादीनां फलमन्यत् । इदं पुनरन्यदेव ॥ ३७—३९ ॥

**क्षीणेति** । वर्गाः क्षेत्रादयः । विलग्नमुदयलग्नम् । विदो बुधस्य । पापासंयुक्तस्येति यावत् । पापयुक्तस्य तु बुद्धिसामर्थ्यविनाशादयो वाच्याः । 'शुभवर्गे लग्नगते' इत्यादि श्लोकोक्तस्यैवायं प्रपञ्चः ॥ ४० ॥

लग्ने तदीश्वरे चोष्णयुक्ते जूर्त्यादिपित्तरुक् ।
दाहश्च भवनस्याथ सविषत्र्यंशनाडिके ॥ ४१ ॥
यद्राशिसंज्ञो लग्नांशः स राशिश्चेच्छुभान्वितः ।
गतकालः शुभः प्रष्टुरशुभो यदि पापयुक् ॥ ४२ ॥
लग्नांशराशिगे चन्द्रे लोहपात्रक्षतिर्मृतेः ।
लक्ष्म मान्द्यंशराशिस्थे तथा मृद्भाण्डभञ्जनम् ॥ ४३ ॥

मृत्युप्राणशरीरराशिसहितै-
स्तद्दीक्षकैर्वा ग्रहै-
स्तत्तत्प्रोक्तपदार्थलाभविहती
वाच्ये शुभाशापदे ।

**लग्न इति** ॥ उष्णयुक्ते उष्णकालो द्वितीयाध्यायव्याख्याने दर्शितः । विषत्र्यंशो विषद्रेक्काणः स च मेषकुळीरसिंहकन्याधनुमकराणां षण्णां प्रथमो वृश्चिकस्यान्त्योऽन्येषां पञ्चानां मध्यमः । 'पाठात्रिकट्ठुकं रोगं पथ्यारात्रिरिति क्रमात् । मेषादीनां त्रिभागाः स्युर्विषद्रेक्काणसंज्ञिताः' ॥ इति वचनादवगन्तव्यः । अत्र पाठादयोऽक्षरसंख्ययैकद्व्यादिपराः ॥ ४१ ॥

**यद्राशिसंज्ञ इति** ॥ लग्नमुदयलग्नम् ॥ ४२ ॥

**लग्नेति** ॥ लग्नांशराशिगे प्रश्नकाले चन्द्रे उदयलग्ननवांशराशिस्थे सति अयस्ताम्रादिलोहपात्राणां नाशो मरणलक्षणम् । मान्द्यंशराशिस्थे तथेत्यस्य स्थाने मान्द्यंशराशौ तु लग्ने इत्यपि क्वाचित्कः पाठो दृश्यते । अन्ये तु प्रश्नासन्नकाले चन्द्रस्य लग्नांशराशिगमनवेलायां लोहपात्रनाशः मान्द्यंशराशिगमनवेलायां मृत्पात्रभञ्जनं च सर्वथा मरणलक्षणमिति व्याचक्षते । प्रश्ने चिन्तनप्रकारस्य बाहुविध्यं शास्त्रसम्मतमुचितं चेति प्राश्निकैस्सर्वमालोचनीयम् ॥ ४३ ॥

**मृत्युप्राणेति** ॥ अत्र 'मान्दीन्दू वे'ति श्लोकोक्ता मृत्युप्राणादयो ग्राह्याः । लाभः शुभाय विहतिरापदे इति यथासंख्यं ग्राह्यम् । संज्ञाध्यायादयो वराहमिहिरहोरायां द्रष्टव्याः । 'ताम्रायास्ताम्रसिते'त्यादय'स्ताम्रं स्यान्मणिर्हेमत्यादयश्च । नखपूर्वकाः नखदन्तेत्याद्युक्ताः । तृणमुखाः 'तृणकनकोर्णे'त्याद्युक्ताः । ते सहितवीक्षकाः । अस्य मृत्युप्राणशरीरराशित्रितयस्य । पत्या लक्षणं कथनीयमिति वाक्यशेषः ॥ ४४ ॥

संज्ञाध्यायदशाधनाम्निकथना-
स्त्वन्यत्र वोक्ता हि ते
ताम्राद्या नखपूर्वकास्तृणमुखाः
पत्यास्य वा ते न चेत् ॥ ४४ ॥

लग्नेन्दूमानदानाभ्यामित्युक्तानामथो फलम् ।
प्राणमृत्युशरीराणामधुना समुदीर्यते ॥ ४५ ॥

प्राणमृत्युशरीरेषु देहाधिक्ये रुजां शमः ।
प्राणेधिके महान रोगो मृत्युश्चेदधिको मृतिः ॥ ४६ ॥

मृत्यौ ज्येष्ठाहिपौष्णस्थे जन्मभस्थे च पञ्चता ।
मृत्युः प्राणश्च देहश्च क्रमवृद्धाः शुभप्रदाः ॥ ४७ ॥

लग्नेन्दुगुळिकांशैरप्याधिक्यादिविचिन्तनम् ।
एतत्तु क्रियते कैश्चित्तदप्यथ विलिख्यते ॥ ४८ ॥

लग्नांशकेधिके वृद्धी रुजां चन्द्रांशके शमः ।
मान्द्यंशे मृतिराधिक्यं गताभिर्घटिकादिभिः ॥ इति ॥ ४९ ॥

मृत्युकालसतां प्राणे मध्यगे तद्युतेक्षिते ।
प्रष्टुर्मरणमादेश्यं शुभदोस्येन्दुसङ्गमः ॥ ५० ॥

**लग्नेति** । समुदीर्यते वक्ष्यमाणश्लोकद्वयेनोच्यते ॥ ४५ ॥

**प्राणेति** । आधिक्यं राशिना । राशिसाम्ये भागेन । राशिभागयोः साम्ये कलया । जन्मभस्थे जन्मभं प्रष्टृजन्मनक्षत्रम् ॥ ४६, ४७ ॥

**लग्नेति** ॥ घटिकादिभिर्यस्यांशकस्य घटिकाविघटिके अधिके सोंशकोधिकः आधिक्यादिविचिन्तनमित्यादि, पूर्वोक्तपरामर्शकैतदिति विशेषणेन च नवांशकस्फुटानां राश्यादिभिराधिक्यं 'मृत्यौ ज्येष्ठाहीत्युक्तं चात्रातिदिश्यते । एवं च द्वितीयश्लोकोक्तं तस्याप्युपलक्षणमिति कल्प्यम् । अत एव मृत्युर्देहासवश्चेरे इति संज्ञाकरणमपि सार्थकम् ॥ ४८, ४९ ॥

**मृत्युकालसतामिति** ॥ अत्र प्राणः 'प्रश्नकालगता नाडी'त्यादिनानीतः । मृत्युकालौ तु 'याता नाडी'रित्यादिना । असन्तः पापास्तद्युतेक्षिते तच्छब्देन मृत्युकालासन्तो ग्राह्याः ।

आरूढेन तदीशेन लग्नलग्नांशकाधिपैः ।
इन्द्वंशेनेन्दुना युक्तौ मृत्युकालौ मृतिप्रदौ ॥ ५१ ॥
लग्ने राहुयुते चोरारिपुपीडा रवौ मृतिः ।
चन्द्रे देहव्यथार्केन्दुराहुचक्रफलं त्विदम् ॥ ५२ ॥
कालहोराफलं वाच्यं प्रष्टुर्विस्मापनं परम् ।
* विश्वासार्थं प्रभारत्या तदप्यथ विलिख्यते ॥ ५३ ॥
सूर्यस्य कालहोरायां प्रश्नश्चेद्भूमिपागमः ।
नार्यागमः शशाङ्कस्य भूमिपुत्रस्य शस्त्रिणाम् ॥ ५४ ॥
बौध्यां पारशवायानमथवा विद्वदागमः ।
गुरोर्विप्रवरायानं भृगोर्वेश्याङ्गनागमः ॥ ५५ ॥
मन्दस्य वणिगायानं भृत्यबौद्धागमोऽथवा ।
केन्द्रगाश्चेदमी खेटा नियमेन वदेदिदम् ॥ ५६ ॥

एतदुदयलग्नादिविषयम् ।

यद्राशिसंज्ञश्चन्द्रांशः स राशिश्चेच्छुभान्वितः ।
भावी कालः शुभो वाच्यः पापयुक्चेदशोभनः ॥ ५७ ॥

अस्य प्राणस्य । आरूढलग्नलग्नांशकैस्तदधिपैस्त्रिभिश्चन्द्रेण चन्द्रनवांशकेनेत्यष्टाभिर्मृत्युकालयोगो मृतिप्रदः ॥ ५०, ५१ ॥

**लग्न इति** ॥ अर्केन्दुराहुचक्रं सार्द्धेन नाडीद्वितयेनेत्यादिना पञ्चमाध्याये प्रदर्शितम् ॥

**कालेति** ॥ 'एतैः फलमुपरिष्टादष्टमाध्याये वक्ष्यामी'ति प्रतिज्ञातं निर्वर्त्य पृच्छकविस्मापनमात्रफलकं किञ्चित्फलं विलिख्यत इत्यर्थः ॥ ५३ ॥

**सूर्यस्येति** ॥ शशाङ्कस्येत्यादौ कालहोरायामित्यनुवर्तते। शस्त्रिणः आगम इति विभज्यानुषज्यते बौध्यां। बुधस्येयं बौधी तस्याम् । अमी कालहोराधिपाः केन्द्रगाः उदयलग्नात्। नियमेन निश्चयेन । आगमनं च प्रश्नसमये तदासन्नकाले वा। प्रश्नस्थले पृच्छकगृहे वा ॥

**एतदिति** ॥ अथ चन्द्रांशविषयं किंचिदुच्यते इति यावत् ॥

**यद्राशिसंज्ञ इति** ॥ शुभाशुभयोर्विशेषोऽनुपदमेव प्रदर्श्यते ॥ ५७ ॥

जीवस्सुतप्रदो विप्रवरकृन्नीचभांशगः ।
शुक्रो वस्त्राङ्गनादायी विवादे जयकृद्बुधः ॥ ५८ ॥
पूर्णचन्द्रो मनोहारिद्रव्यलाभं प्रयच्छति ।
देवभूमिपयोः कोपं कुर्यादर्कोऽथ भूमिजः ॥ ५९ ॥
वृथैव विग्रहं भूमिविवादं च समावहेत् ।
सूर्यपुत्रः कृषिप्रेष्यपश्वादीनां विनाशकृत् ॥ ६० ॥
चण्डालापाच्छिरोरोगविषसर्पभयं फणी ।
प्रेतबाधां शिखी कुर्यान्मान्दिश्चूर्णाद्युपद्रवम् ॥ ६१ ॥
बुधः पापयुतश्चेत्स विवादे परिभूतिकृत् ।
क्षीणचन्द्रो मनःपीडां करोति परिपृच्छताम् ॥ ६२ ॥
कालः प्रोक्तांशमासोत्र लग्नांशेपि विधिस्त्वयम् ।
प्रश्नकालसुधाभानुक्रियाणां सदृशं फलम् ।
प्रष्टुर्वक्तव्यमित्युक्तं जीवेनैतद्विलिख्यते ॥ ६४ ॥
क्रमाच्चन्द्रक्रियाः पञ्च पञ्च मेषादिराशिषु ।
प्रकल्प्य तत्समं ब्रूयात्सर्वकार्येषु तत्फलम् ॥ ६५ ॥
प्रश्नकाले गुणश्चेन्दोः शुभो यदि शुभप्रदः ।
तथा चाशुभकर्मस्थे चन्द्रे प्रश्नोऽशुभप्रदः ॥ ६६ ॥

**जीव इति** ॥ कालः प्रोक्तांशमासोत्र चन्द्रो मेषांशे चेन्मेषमासः; वृषभांशे चेद्वृषभमास इत्यादि । चन्द्रो मेषांशे चेन्मासादर्वाक्, वृषभांशे चेन्मासद्वयादर्वाक्, इत्यादि । स्वाधिष्ठितराशौ प्रथमनवांशे चेन्मासादर्वाक्, द्वितीयनवांशे चेन्मासद्वयादर्वागित्यादि । तयोपि पक्षाश्चिन्तनीयाः । लग्नांशेपि विधिस्त्वयं यद्राशिसंज्ञो लग्नांश इति प्रदर्शिते शुभाशुभनिरूपणे 'जीवः सुतप्रद' इत्यादिफलविशेषाः कालः प्रोक्तांशमास इति तत्संभवकालश्चैतेनातिदिश्येते ॥ ५८—६३ ॥

**प्रश्नेति** ॥ सुधाभानुक्रियाश्चन्द्रक्रियाः । तासां षष्टिः फलानि । 'स्थानाद्भ्रष्टस्तपस्वी'त्यारभ्य 'सुस्थस्तथास्ते सुखम्' इत्यन्तेन श्लोकत्रयेणोक्तानि प्रसिद्धानि । जीवेनोक्तं बृहस्पतिहोरायामेतत्फलम् । मेषादिराशिषु पञ्च पञ्च चन्द्रक्रियाः प्रकल्प्य भागषट्केनैका

एतच्चन्द्रविषयम् ।

॥ इति प्रश्नमार्गे अष्टमोऽध्यायः ॥

# अथ नवमाध्यायप्रारम्भः ॥

आयुर्विवाहसन्तानप्रभृतिप्रश्नकर्मसु ।
साधारणफलाः प्रायः समयाद्या इतीरिताः ॥ १ ॥

अत्रानुष्ठानपद्धतिः ।

तत्कालजैर्निमित्तैः
प्रष्ट्रारूढोदयेन्दुगुळिकाद्यैः ।
आयुः प्रथमं चिन्त्यं
स्वस्थातुरविषयभेदमवगम्य ॥ इति ॥ २ ॥

ग्रन्थान्तरं च ।

---

चन्द्रक्रिया । चन्द्रे मेषराशौ प्रथमभागषट्कस्थे प्रथमा चन्द्रक्रिया । स्थानाद्भ्रष्ट इति तत्फलम् । मीनराश्यन्तिमभागषट्कस्थे षष्टितमचन्द्रक्रिया सुखमास्ते इति तत्फलम् । एवमन्तराळेऽप्यनुसन्धेयम् । गुणश्चन्द्रक्रिया ॥ ६४–६६ ॥

**एतदिति** ॥ एतत् 'यद्राशिसञ्ज्ञश्चन्द्रांशः' इत्यारभ्य 'चन्द्रे प्रश्नो शुभप्रदः' इत्यन्तम् । एवं च पृच्छानिर्गमेत्याद्युदये·दूद्भवमित्यन्तं निर्देशक्रमेण प्रदर्शितमित्यवगन्तव्यम् ॥

इति प्रश्नमार्गेऽष्टमोऽध्यायः ॥

— :o: —

**आयुरिति** ॥ प्रायश्शब्देन 'नववस्त्रद्युयादीना'मित्यादीनि कानिचिद्विशेषविषयाणीत्यवगन्तव्यम् ॥ १ ॥

**अत्रेति** ॥ पठ्यमानश्लोकस्तत्रत्यः ॥

**तदिति** ॥ प्रथमं लक्षणनिरूपणात् पूर्वम् ॥ २ ॥

**ग्रन्थान्तरमिति** ॥ वक्ष्यमाणश्लोको ग्रन्थान्तरस्थः ॥

आयुः पूर्वं परीक्षेत पश्चाल्लक्षणमादिशेत् ।
अनायुषां तु मर्त्यानां लक्षणैः किं प्रयोजनम् ॥ इति ॥ ३ ॥

इत्यादिभिस्तु वचनैः पूर्वमायुर्निरूपणम् ।
कर्तव्यमिति लग्नाष्टमेशप्रभृतिभिर्ग्रहैः ॥ ४ ॥

आयुरेव विशेषेण प्रथमं चिन्त्यतेधुना ।
स्वस्थमुद्दिश्य वा प्रश्न एष वातुरमित्ययम् ॥ ५ ॥

विवेको विहगैः कार्य इति शास्त्रान्तरोदितम् ॥ ६ ॥

लग्नेशो यदि केन्द्रगः खलु बली
राशौ चरे चांशके
प्रश्नः स्वस्थगतोथ रिःफरिपुगो
लग्नाधिपश्चेत्स्थिरे ।
निर्वीर्यश्च महागदार्तविषया
पृच्छाथ मिश्रः स चे-
त्तोयर्द्धिक्षयवन्मुहुः प्रशमनं
वृद्धिश्च वाच्ये रुजाम् ॥ ७ ॥

पुनरपि ग्रन्थान्तरम् ।

---

**आयुरिति** ॥ पूर्वार्धोक्ते हेतुरुत्तरार्धेन प्रदर्शितः ॥ ३ ॥

**इतीति** ॥ इति सिद्धमिति शेषः ॥ ४ ॥

**आयुरिति** ॥ प्रश्नस्य स्वस्थविषयत्वरोगिविषयत्वविशेषः शास्त्रान्तरोक्तप्रकारेण निरूप्यत इति भावः ॥ ५, ६ ॥

**लग्नेश इति** ॥ लग्नेशस्य केन्द्रगत्वं बलित्वं चरराशिगत्वं चरांशगत्वमिति चतुष्कं स्वस्थविषयप्रश्नलक्षणम् । रिःफरिपुगत्वं दौर्बल्यं स्थिरराशिस्थत्वमिति चतुष्कं महागदार्तविषयप्रश्नलक्षणम् । यथासम्भवमेतदुभयमिश्रणे कदाचिच्छान्तिः कदाचिद्वृद्धिश्चेति तात्पर्यम् ॥ ७ ॥

**पुनरपीति** ॥ लग्नाधिपास्थितिविशेषेण फलनिरूपणविषये इति भावः ॥

तुङ्गस्थिते तनुपतौ सधनः सवीर्यो
जेता द्विषां खलु भवेत्प्रथमानतेजाः ।
प्रष्टाभिमानसहितोथ निजत्रिकोणे
वासो विभूषणलसत्तनुराप्तसौख्यः ॥ ८ ॥
बन्धोर्गृहे निजगृहे च विनष्टवैरी
भार्यातनूजधनबन्धुभिरिद्धमोदः ।
वैर्यृक्षगे रुगनिशं सुतमित्रभार्या-
नाशश्च भूमिपतिपातकचोरपीडा ॥ ९ ॥
नीचस्थिते रिपुनिपीडनतोन्यदेश-
यानं पदाच्च चलनं धनहानिदैन्ये ।
मूढे सपापगुळिके च नृपारिहेतो-
र्वैकल्यमानितरदेशगतो मृतो वा ॥ १० ॥
लग्नेशोष्टमपश्च नीचगृहगौ
यद्वास्तगौ चेदुभौ
प्रष्टा भग्नमनाः सुखेन रहितः
पीडार्तदेहः सदा ।
स्वल्पायुश्चलितः पदादपि निजा-
द्दुर्ध्याङ्गरोगार्दितो
योगेष्वन्येष्वशुभेषु सत्सु कथये-
त्केमद्रुमाद्येष्विदम् ॥ ११ ॥

तुङ्गस्थित इति ॥ तुङ्गस्थित इत्यारभ्य धनहानिदैन्य इत्यन्तेन ग्रन्थेन लग्नाधि-पस्योच्चादनीचपर्यन्तस्थानषट्कास्थितिफलानि पञ्च प्रदर्शितानि । अभिमानसहित इत्यन्तं तुङ्गस्थितिफलम् । अत्र राश्यंशावुभावपि चिन्त्यौ । मूढ इत्यर्धेन मौढ्यावस्थाफलं योगफलं चोक्तम् ॥ ८—१० ॥

लग्नेति ॥ अस्तगौ मूढौ । सदा पीडार्तदेह इति योजना । निजात्पदाच्चलित इति च । सत्सु प्रश्नकालग्रहस्थित्या संभवत्सु । इदं भग्नमनस्त्वादिकम् ॥ ११ ॥

लग्नाधिपश्च मृतिपश्च मिथः समेतौ
यद्वा स्वतुङ्गनिजगेहसुहृद्ग्रहस्थौ ।
लग्नेशशुक्रधिषणाश्च धनत्रिकोण-
केन्द्रस्थिता विदधते खलु दीर्घमायुः ॥ इति ॥ १२

प्रष्टुस्ताराविकोणे स्थितवति गुळिके
जन्मचन्द्राष्टमे वा
नक्षत्रेशे च मान्द्याश्रितभवनपतौ
सत्यपि प्रष्टरि स्वे ।
स्यातर्यप्यष्टमर्क्षे निहित इह पणे
चात्र या जन्मतारा
प्रश्नोडुर्मान्दिगोडुत्रितयपतिषु वा
षट्स्वपि स्वस्थमृत्युः ॥ १३ ॥

होराया इह जीवः स्यात्प्रष्टुरायुर्निरूपणम् ।
देहः फलान्तरज्ञानमिति शास्त्रान्तरोदितम् ॥ १४ ॥

**लग्नाधिप इति ॥** मिथः समेतौ यत्र कुत्रापीति यावत् । दीर्घायुर्विधायकं योगत्रितयमनेनोक्तम् । इतिना तुङ्गस्थित इत्यारब्धस्य ग्रन्थान्तरस्य परिसमाप्तिः प्रदर्श्यते ॥

**प्रष्टुरिति ॥** अनेन श्लोकेन स्वस्थमृत्युलक्षणानि षट्प्रदर्शितानि । पृच्छकस्य मनागप्यस्वास्थ्याभावेपि मृत्युरचिराद्द्रष्टव्यः । नक्षत्रेशे प्रष्टृजन्मनक्षत्राधिपे 'अर्केन्द्वारभुजङ्गजीवशनिविरकेत्वाख्यशुक्राः क्रमादग्न्यादेर्नवकत्रयर्क्षपतय ' इति तदवगमनम् । नक्षत्रेशे गुळिकभवनाधिपतौ सत्येको योगः । प्रष्टरि स्वेष्टमर्क्षे स्यातर्यपि, इति योजना । स्वे निजे । इह पणे निहिते च । इह प्रष्टमर्क्षे । अत्रयोति जन्मताराप्रष्टृजन्मनक्षत्रम् । प्रश्नोडुः प्रश्नकालनक्षत्रम् । मान्दिगोडुर्गुळिकस्थितनक्षत्रम् । त्रितयमेतत्त्रितयम् त्रितयपतिषु प्रष्टृजन्माष्टमस्थितेष्विति शेषः । एतेष्वन्यतमे जन्माष्टमस्थेपि चिन्त्यम् ॥ १३ ॥

**होराया इति ॥** होरा ज्योतिश्शास्त्रस्य फलादेशभागः । वक्ष्यमाणसार्धश्लोकद्वयं शास्त्रान्तरोक्तिः ॥ १४ ॥

आयुश्च लोकयात्रा च शास्त्रेऽस्मिन् द्वे प्रयोजने ।
निश्चेतुं को नु शक्नोति वसिष्ठो वा बृहस्पतिः ॥ १५ ॥
किं पुनर्मनुजास्तत्र विशेषात्तु कलौ युगे ।
लोकयात्रापरिज्ञानं शरीरं कथ्यते बुधैः ॥ १६ ॥
आयुषस्तु परिज्ञानं होराया जीव उच्यते ॥ इति ॥ १७ ॥

लग्नं विलग्नपतिमृत्युतदीशचन्द्राः
प्रष्ट्रायुषोवगमने खलु साधनानि ।
तेषां शुभाशुभदृगन्वयवीर्यवत्ता
निर्वीर्यतादिगुणदोषवशाद्विचिन्त्यम् ॥ १८ ॥

पापान्तरस्थितिशुभेतरदृष्टियोगा
दोषा गुणास्त्रय इमे वपुषः शुभानाम् ।
स्वेशस्य सङ्गमदृशौ च गुणौ भवेतां
दोषा गुणाश्च खलु लग्नवदष्टमस्य ॥ १९ ॥

---

**आयुरिति** ॥ यात्रा जीवनकाले वर्तनम् । कलौ निसर्गतो जनानां प्रज्ञोत्साहवैरल्याधायक इति यावत् । अत्रार्थापत्त्यलङ्कारावधया मनुष्याणामायुर्लोकयात्रापरिज्ञानाशक्तिर्या नाम दृढीकृता सा तस्य दुःसाधत्वमेव विशदयति । न तु सर्वथासाध्यत्वम् । तथा सति शास्त्रारम्भस्यैव वैयर्थ्यापत्तेर्मूलोच्छेदप्रसङ्गात् । न हि स्वयमाचार्यो मनुष्यान् सर्वथाऽसाध्ये वस्तुनि व्यापारयेत् । न च तादृशे व्यापारे प्रोत्साहं जनयेत् । अतो विषयेऽत्र ज्योतिश्शास्त्रवेदिभिः फलादेशाय प्रोत्सहमानैरत्यन्तं श्रद्धया देवब्राह्मणगुरुभक्त्या च सुसूक्ष्मपर्यालोचना प्रवर्तयितव्येतीदंपरमेवैतद्वचनमिति रहस्यम् ॥ १५—१७ ॥

**लग्नमिति** ॥ लग्नमारूढम् । मृत्युरष्टमभावः । तेषां प्रोक्तानां साधनभूतानां पञ्चानाम् । शुभदृष्टिः शुभयोगः प्राबल्यं, इति त्रयो गुणाः । इतरे दोषाः । आदिशब्देन शुभाशुभमध्यस्थित्यादयो ग्राह्याः । सामान्योक्तं विशेषतो दर्शयत्युत्तरश्लोकादिना ॥ १८ ॥

**पापेति** । वपुष इत्युभयत्र योज्यम् । वपुर्लग्नम् । शुभानामिमे त्रयः मध्यस्थितिदृष्टियोगा गुणाः । एवं लग्नाष्टमयोर्गुणदोषौ निरूप्योत्तरश्लोकेन लग्नाधिपस्य गुणदोषौ निरूप्येते ॥ १९ ॥

पापान्वयेक्षणशुभेतरमध्यवास-
मौढ्यारिनीचभगमास्तनुपस्य दोषाः ।
तुङ्गात्मबन्धुभवनस्थितिसौम्ययोग-
वीक्षान्तरस्थितिविलोमगमा गुणाः स्युः ॥ २० ॥

लग्नपस्य गुणा दोषास्तुल्याः स्युर्मृतिपस्य च ।
केन्द्रस्थितिर्मृतीशस्य दोषो लग्नपतेर्गुणः ॥ २१ ॥

चन्द्रस्यारिमृतिव्ययस्थितिरसन्मध्यस्थितीक्षान्वयाः
क्षीणत्वं तनुगत्वमत्र निजनीचाप्तिश्च दोषा इमे ।
पूर्णत्वं शुभमध्यवासयुतिदृग्देवेज्यकेन्द्रस्थता
स्थानं तुङ्गगृहे युतिश्च गुरुणा साङ्के विशेषाद्गुणाः ॥

व्यायारिष्वसदा वासो दीर्घायुष्यकृदीरितः ।
वराहमिहिरेणैव पद्येन गुरुशादिना ॥ २३ ॥

अत्र सारसङ्ग्रहः ।

**पापान्वयेति** ॥ १. पापयोगः, २. पापदृष्टिः, ३. पापमध्यस्थितिः, ४. मौढ्यं, ५. शत्रुक्षेत्रस्थितिः, ६. नीचस्थितिः, एते दोषाः । १. उच्चस्थितिः, २ स्वक्षेत्रस्थितिः, ३. बन्धुक्षेत्रस्थितिः, ४. शुभयोगः, ५. शुभदृष्टिः, ६. शुभमध्यस्थितिः, ७ वक्रं, एते गुणाः ॥ २० ॥

**लग्नपस्येति** ॥ पूर्वार्धेन लग्नाधिपगुणदोषानष्टमाधिपेतिदिश्योत्तरार्धेनात्र विशेषः प्रदर्शितः ॥ २१ ॥

**चन्द्रस्येति** ॥ साधनेषु पञ्चसु शिष्टस्य चन्द्रस्य गुणदोषप्रदर्शनार्थमयं श्लोकः । अत्र तनुगत्वे नीजनीचाप्तिः कीटराशिस्थितिः । सा अङ्के इति छेदः । सा गुरुणा युतिः । 'गुरुशशिसहिते कुळीरलग्ने' इति वचनात् कर्कटकलग्ने गुरुचन्द्रयोगोतीव शुभप्रदः ॥ २२ ॥

**व्यायारिष्विति** ॥ गुरुशादिना गुरुशशिसहित इत्यनेन । भवरिपुसहजोपगैश्च शेषैरिति तदंशेनेति यावत् ॥ २३ ॥

**अत्रेति** ॥ अत्रायुर्निरूपणे । वक्ष्यमाणश्लोकद्वयं सारसङ्ग्रहस्थम् ॥

लग्नं मूर्द्धोदयं चेच्छुभपतिनिहितं
वीक्षितश्चाखिलानां
दीर्घायुष्यप्रदं स्यान्निधनमपि तथै-
वान्यभावा विचिन्त्याः ।
रन्ध्रेशो लग्नपो वा यदि बलसहितौ
चानयोर्वाधिमैत्री
चारूढश्चोर्ध्ववक्त्रः समयजलसमृद्धः
स मूर्द्धोदयाख्यः । २४ ॥

द्रेक्काणाः फणिभूषणा मृतिकराः
कोलाभ गृध्रानना:
स क्रूरा यदि शीतगौ निधनगे
हीनस्य च व्याधिना ।
रन्ध्रे शीतकरो भवेन्मृतिकरः
पृष्ठोदयो लग्नगः
पापाः केन्द्रमृतिस्थिताश्च मृतिदा
रोगार्दितानां नृणाम् ॥ इति ॥ २५ ॥

**लग्नमिति** : लग्नं निधनमपि मूर्धोदयं शुभपतिसहितं वीक्षितं च चेदखिलानां दीर्घायुष्यप्रदं स्यादिति संबन्धः । लग्नमुदयलग्नम् । तथैवान्यभावाः अन्ये लग्नाष्टमतोन्ये । तथैव मूर्धोदयत्वादिगुणयुक्ताश्चेत् प्रष्टुस्तत्तद्भावसम्पद्वाच्येत्यर्थः । वीक्षितमित्यत्र शुभपतिभ्यामिति विभज्य संबध्यते । लग्नपो वा । वाशब्दश्चार्थे । अनयोर्लग्नाष्टमेशयोः । अधिमैत्री परस्परातिबन्धुत्वम् । समयजलसमृद्धः जलवृद्धियुतः । स आरूढः । द्रेक्काणा उदयलग्नवर्तिनः । फणिभूषणाः सर्पयुक्ताः । कोलाभगृध्रानना: कोलमुखा गृध्रमुखाश्च । 'सर्पावृता वृश्चिकाद्यः कर्किमीनान्तिमावपि । कोलास्यो वृश्चिकाद्यश्च मृगकर्क्यादिमावपि ॥ गृध्रास्यस्तौलिमध्यश्च सिंहकुंभादिमौ तथा ।' इति तद्विभागः । चोऽप्यर्थे । किमुत व्याधितस्येत्यर्थापत्तिः 'रन्ध्रे शीतकर' इत्यर्धे द्वौ योगौ । रोगार्दितानामेव मरणप्रदौ । पूर्वश्लोकेन दीर्घायुर्लक्षणमुत्तरश्लोकेन मृत्युलक्षणं चोक्तम् ॥ २४, २५ ॥

तत्कालोद्यद्राशिः प्रष्टारूढश्च लग्नशब्दोक्तौ ।
कृष्णीयादिषु कथितं ताभ्यां द्वाभ्यां फलं हि वाच्यमिति ॥

भूमिष्ठं स्थिरचक्रं
चरति तथाकाश एव चरचक्रम् ।
चक्रद्वितयेन फलं
प्रश्नादौ पृच्छतां वाच्यम् ॥ २७ ॥

उदयारूढर्क्षाभ्यां
शुभाशुभं प्रष्टुरादिशेद्वत् ।
दैवविदो व्ययभाभ्यां
तदायभाभ्यां तथैव दूतस्य ॥ २८ ॥

अथोदयारूढभयोर्द्वयोस्तदा
बलान्वितादृद्वादशभावजं फलम् ।
तथात्मपित्रादिपदार्थकारकै-
रपि ग्रहैरर्कमुखैर्विमृश्यते ॥ इति ॥ २९ ॥

कृष्णीये तु तयोर्विषयविभाग उक्तः । तथा च तदुक्तिः ।

प्रश्नः खलूदयारूढप्राधान्येन द्विधा मतः ।
भास्करोदयवेलायां सञ्चरत्यपि पृच्छके ॥ ३० ॥

**तत्कालेति** ॥ कृष्णीयादिवचनमेवोत्तरश्लोकत्रयेण प्रदर्श्यते ॥ २६ ॥

**भूमिष्ठमिति** ॥ भूमौ तिष्ठतीति भूमिष्ठम् । 'अंबांबगोभूमी'त्यादिना षत्वम् । ऐन्द्यां मेषवृषावित्याद्युक्तप्रकारेण भूमौ लिखितं स्थिरचक्रमित्यर्थः । भ्रमति प्रवहाख्यवाय्व-भिघातहेतोर्ज्योतिश्चक्रसंज्ञया निरन्तरमाकाशे चक्रद्वितयेनारूढलग्नोदयलग्नाभ्यामिति यावत् । लग्नशब्देनोभयं ग्राह्यमिति तात्पर्यम् । दैवविदो दैवज्ञस्य । तदायभाभ्यां तयोरुदयारूढर्क्ष-योरायभाभ्याम् । उदयारूढभयोर्द्वयोर्मध्ये बलान्वितात् ॥ २७ २९ ॥

**कृष्णीय इति** ॥ तदुक्तिः कृष्णीयोक्तिः ॥

**प्रश्न इति** ॥ सूर्योदयसमये समयप्राधान्यात्सञ्चारादिष्वारूढस्य दुर्ज्ञेयत्वाच्चोदयलग्नं ग्राह्यमिति भावः । विद्यया निमित्तशास्त्रज्योतिश्शास्त्रविषयकज्ञानेनेति यावत् ॥ ३० ॥

पृच्छके विघया युक्ते यात्रादिचरकर्मसु ।
उदयेन फलं ब्रूयादेवमादिषु दैववित् ॥ ३१ ॥
कर्मान्ते च दिनान्ते च शयिते पृच्छके निशि ।
प्रदेशे जनसम्पूर्णे मुष्टौ चान्तर्गृहस्य च ॥ ३२ ॥
विषये स्थावराणामित्यादिष्वारूढराशिना ।
चिन्त्यमत्रोभयत्रापि स्वं स्वं छत्रं तदुच्यते ॥ ३३ ॥

मार्ताण्डे वृषतोऽलितश्च चतुरो
राशीनतोन्यांस्तथा
प्राप्तेऽजो मिथुनं क्रमेण च वृषो
वीथ्योथ यावान् भवेत् ।
आरूढादुदयोथ वीथिभवना-
त्तावद्भवेच्छत्रभं
ग्राह्यं स्यात्स्थिरचक्र एतदद्दढे
लग्नांशकश्छादकः ॥ इति ॥ ३४ ॥

निरन्तरोद्यतां भानां कस्याप्यस्त्युदयः सदा ।
तथाप्यारूढवाञ्छा यत्ततोस्यैव प्रधानता ॥ ३५ ॥

**कर्मान्त इति** ॥ कर्मान्ते पृच्छकेन क्रियमाणस्य कर्मणोवसाने । पृच्छके शयिते सति । मुष्टौ मदीयहस्तमुष्टौ किमित्युच्यतामिति प्रश्ने । गृहस्यान्तः पृच्छको गृहान्तर्वर्ती पृच्छति चेत् । आरूढराशिना फलं ब्रूयादित्यनुवर्त्य योज्यम् । छत्रं छत्रराशिः । तच्छत्रम् । उच्यते वक्ष्यमाणश्लोकेनेति यावत् ॥ ३२, ३३ ॥

**मार्ताण्ड इति** ॥ अतोन्यान् कन्यातुलामीनमेषान् । आरूढादुदयो यावान् भवेत् ; वीथिभवनात्तावच्छत्रभं छत्रराशिर्भवेदिति योजना । अदृढे चरचक्रे । लग्नांशकः उदयलग्नवांशकः । छादकश्छत्रराशिः ॥ ३४ ॥

**निरन्तरेति** ॥ स्वमतप्रदर्शकोयं श्लोकः । ज्योतिश्चक्रस्य निरन्तरगतिसद्भावादुदयलग्नस्य सर्वदा संभवे सत्यप्यारूढलग्नस्य सन्धिास्थित्यादिना दुर्बोधत्वेपि स्वर्णविन्यासेन तत्सम्पादनस्य सनिर्बन्धं विहितत्वात्प्राधान्यमारूढस्यैवेति स्वाभिमतमिति भावः ॥ ३५ ॥

एतेषु दोषरहितेषु गुणान्वितेषु
नीरोगताद्यखिलसौख्यमनल्पमायुः ।
दोषान्वितेषु विगुणेषु मृतिश्च रोग-
दैर्घ्यादिकं तु गुणदोषविमिश्रितेषु ॥ ३६ ॥

लग्नं देहोऽष्टमो जीवस्तयोरधिपयोर्बलम् ।
अन्योन्यदृष्टियोगौ च दीर्घाय प्रष्टुरायुषे ॥ ३७ ॥

लग्नाधिपश्च जीवश्च शुक्रश्चारूढकेन्द्रगः ।
एकैकोऽप्यायुषे प्रष्टुः किमु द्वौ किं पुनस्त्रयः ॥ ३८ ॥

अन्योन्यकेन्द्रगेष्वेषु दीर्घमायुरितीतरे ॥ ३९ ॥

सौम्यास्त्रिकोणधनकेन्द्रभवाष्टमस्था
दीर्घायुषे सहजषड्भवगाश्च पापाः ।
अन्यत्रगा मरणरोगकराश्च ते स्यु-
र्मान्दिर्मृतौ मृतिकरोपि गुणेषु सत्सु ॥ ४० ॥

सर्वेषामपि पापानां मान्दिर्दोषप्रदाधिकम् ।
सोतिदोषकरो योगदृग्वर्गवशतः शनेः ॥ ४१ ॥

वराहमिहिरो होराषष्ठाध्यायेऽभ्यधत्त यान् ।

---

**एतेष्विति** ॥ एतेषु लग्नादिषु पञ्चसु साधनेषु । नीरोगता आरोग्यम् । विगुणेषु गुणरहितेषु । गुणदोषविमिश्रितेषु तु रोगदैर्घ्यादिकमित्यन्वयः ॥ ३६ ॥

**लग्नमिति** ॥ तयोरधिपयोर्लग्नाष्टमाधिपयोः । अन्योन्यदृष्टियोगौ । देहजीवयोर्मिथः संबन्धे दीर्घायुष्यमिति न्यायसिद्धमिदमवगन्तव्यम् ॥ ३७ ॥

**लग्नाधिप इति** ॥ अन्योन्यकेन्द्रगेषु लग्नादिव लग्नाधिपादपि. गुरुशुक्रयोः केन्द्रस्थितिर्दीर्घायुष्यप्रदेति तात्पर्यम् ॥ ३८, ३९ ॥

**सौम्या इति** ॥ अन्यत्रगास्ते सहजादिगाः सौम्यास्त्रिकोणादिगाः पापाश्चेति यावत् ॥ ४० ॥

**सर्वेषामिति** ॥ पूर्वश्लोकतुरीयपादोक्तमृत्युलक्षणहेतूपपादकमिदं पद्यम् ॥ ४१ ॥

**वराहमिहिर इति** ॥ अभ्यधत्त 'सन्ध्यायां हिमदीधितिहोरा पापैर्भान्तगतैर्नि-

योगान् मृतिकरान् सद्यस्तत्संवादो विचिन्त्यताम् ॥ ४२ ॥

एतत्प्रश्नवशादायुर्निरूपणविषयम् । अथ जातकवशादायुर्निरूप्यते ।

ग्रहचारदशाप्रश्नफलसंवादसम्भवे ।
सत्येव फलमादेश्यं शुभाशुभमसंशयम् ॥ ४३ ॥
इत्येतया तु शास्त्रोक्त्या प्रश्नजातकयोरिह ।
संवादश्चिन्त्य इत्यायुश्चिन्त्यते जातकेन च ॥ ४४ ॥
पूर्वकर्मफलं भोक्तुं जन्तोर्यदिह जीवनम् ।
आयुस्तत्कर्मशक्त्यास्य दीर्घमध्यात्मतादिकम् ॥ ४५ ॥
अवश्यमनुभोक्तव्यं यत्किञ्चित्फलमस्ति चेत् ।
येनकेनापि योगेन नाभुक्त्वायं म्रियेत तत् ॥ ४६ ॥
शास्त्रान्तरोदितं योगशब्दनिर्वचनं तथा ।
योगस्वरूपसंख्याश्च तत्प्रकारोथ लिख्यते ॥ ४७ ॥
ग्रहाणां स्थितिभेदेन पुरुषान् योजयन्ति हि ।
फलैः कर्मसमुद्भूतैरिति योगाः प्रकीर्तिताः ॥ ४८ ॥

---

धनाये'त्यादिग्रन्थेनेति भावः । वराहमिहिरहोरायाः कण्ठस्थत्वकरणस्य प्रथमाध्याये विहितत्वान्नात्र ते योगाः प्रदर्श्यन्त इति तात्पर्यम् । संवाद इत्युक्तेरत्रोक्तलक्षणानां तेषां च संवादे निश्चयेन मृतिरादेश्येति लभ्यते ॥ ४२ ॥

**एतदिति** ॥ फलानिर्देशक्रमकथनपरपृच्छानिर्गममार्गेत्यादिश्लोकोक्तक्रमेण जातकवशादायुर्विचिन्तनमपि कर्तव्यतया विहितं यथाक्रमप्राप्तमित्यत्रावसरेऽनुसन्धीयतां पिपाठिषुभिः ॥

**ग्रहचारेति** ॥ जन्तोः प्राणिमात्रस्य । इहास्मिन् लोके । जीवनं यत्तदायुरिति योजना । आयुर्जीवितकालो ना इत्यमरवचनमप्येतत्परम् । कर्मणः प्रारब्धस्य अस्यायुषः ॥

**अवश्यमिति** ॥ फलं प्रारब्धकर्मजन्यम् । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ।' इति गीतावचनं तु प्रारब्धेतरसञ्चितादिकर्ममात्रपरम् । योगेन उपायेन ज्ञानादिना । अयं जन्तुः । तत्प्रारब्धकर्मफलम् ॥ ४६ ॥

**शास्त्रेति** ॥ योजयन्तीति योगाः कर्मसमुद्भूतैः प्रारब्धजन्यैः । एतेन योगशब्दं निरुच्य स्थानत इत्यादिना योगस्वरूपसंख्याः कथ्यन्ते ॥ ४७, ४८ ॥

स्थानतो भावतः खेटैः स्थानभावनभश्चरैः ।
स्थानभावसमायोगाद्भावखेचरयोगतः ॥ ४९ ॥
योगाः स्युः षड्विधाः स्थानखेचराभ्यां तु सप्तमः ।
उच्चमूलत्रिकोणादिग्रहाणां स्थानमुच्यते ॥ ५० ॥
भावा लग्नादयः प्रोक्ताः खेचरा भास्करादयः ।
भावस्थानग्रहैः प्रोक्ते योगे ये योगहेतवः ॥ ५१ ॥
तेषां बली यः कर्ता स्यात्स एवास्य फलप्रदः ॥ ५२ ॥
योगायुश्च दशायुश्चेत्यायुर्वै द्विविधं नृणाम् ।
योगोक्तमायुर्योगायुर्दशायुश्च दशाकृतम् ॥ ५३ ॥
योगायुः षड्विधं योगैः षड्विधैस्तान् वदाम्यथ ।
सद्योरिष्टा अरिष्टाख्या योगारिष्टाह्वयास्तथा ॥ ५४ ॥
मध्यदीर्घामितायुर्दा इति योगास्तु षड्विधाः ।
सद्योरिष्टाह्वया योगा वत्सरान्तर्मृतिप्रदाः ॥ ५५ ॥

**स्थानत इति** ॥ योगाः सप्तविधा एव । तत्र प्रथमः स्थानेन 'शुभं वर्गोत्तमे जन्म' इत्यादिः । द्वितीयस्तु भावैरेव । 'अशून्येषु च केन्द्रेषु' इत्यादिः । तृतीयः खेटैरेव । 'सुखिनः प्रकृष्टकार्याः' कुलसमकुलमुख्येत्यादिः । चतुर्थस्तैस्त्रिभिः । स्वोच्चस्वक्षेत्रगतैरित्यादिः । पञ्चमः 'स्थानभावाभ्यां लग्न मूर्धोदय'मित्यादिः । षष्ठो ग्रहभावाभ्यां 'षट्सप्ताष्टमसंस्थै'रित्यादिः । सप्तमः स्थानखेचराभ्यां 'यातेषु सत्त्वसमभेषु' इत्यादिः । योगहेतवो योगकारणीभूताः । तेषां योगहेतूनां मध्ये यः बली स एवास्य योगस्य कर्ता फलप्रदश्च स्यात् ॥ ४९—५२ ॥

**योगायुरिति** ॥ योगैः 'द्वात्रिंश'दादिभिः उक्तं ज्ञापितं आयुः योगायुस्संज्ञम् । दशाकृतमायुर्दायगणने सलग्नग्रहाणां दशायोगेन सञ्जातम् । कालचक्रदशानक्षत्रदशादिकमपि दशाशब्देन ग्राह्यम् ॥ ५३ ॥

**योगायुरिति** ॥ षड्विधं वक्ष्यमाणसद्योरिष्टादिभेदात् । १. सद्योरिष्टयोगः, २. अरिष्टयोगः, ३. रिष्टयोगः, ४ मध्यायुर्योगः, ५. दीर्घायुर्योगः, ६ अमितायुर्योगः । वत्सरान्तः एकवयःपूर्तेः प्राक् । रव्यब्दान्तर्द्वादशवयःपूर्तेः प्राक् । नापेक्षन्ते दशामिमे । द्वादशवत्सरात्पूर्वं दशा नालोचनीयेति भावः । द्व्यष्टिर्द्वात्रिंशत् । भूतसंख्ययाष्टिशब्दः षो-

रव्यब्दान्तररिष्टाख्या नापेक्षन्ते दशामिमे ।
योगा रिष्टाद्वयाद्यष्टिवत्सरान्तर्मृतिप्रदाः ॥ ५६ ॥
अब्दानां सप्ततेरन्तर्योगा ये मध्यमायुषः ।
दीर्घायुषश्शतस्यान्तर्दशापेक्षान्वितास्त्रयः ॥ ५७ ॥
शताधिकसमा जीवेद्योगे जातोमितायुषि ।
आयुर्दायविधिं योगा नापेक्षन्तेमितायुषः ॥ ५८ ॥
एते योगास्तु विज्ञेयाः सारावल्यादिशास्त्रतः ।
त्रिविधं च पुनस्त्वायुर्दीर्घमध्याल्पतावशात् ॥ ५९ ॥
लग्नजन्मपयोः शत्रू निजाष्टमपती यदि ।
समौ वा यदि वा बन्धू स्वल्पमध्यचिरायुषः ॥ ६० ॥
चन्द्रांशेशस्य तद्भूषा नवांशेशोथवा रवेः ।
लग्नेशो वापि यद्येवं स्वल्पमध्यचिरायुषः ॥ ६१ ॥
अथ केचन लिख्यन्तेत्वायुर्दैर्घ्यकरा गुणाः ।
बलवत्त्वं विलग्नेन्द्वोः शुभयोगः शुभेक्षणम् ॥ ६२ ॥
केन्द्रत्रिकोणरन्ध्रार्थेष्वनयोः शुभसंस्थितिः ।
त्रिषडायेष्वसद्वासो विशेषेण गुरूदयः ॥ ६३ ॥

डशपरः । सप्ततेरब्दानामन्तः इति योजना । शतस्य अब्दानामिति संबध्यते । त्रयः रिष्टमध्यायुर्दीर्घायुर्योगाः । दशापेक्षान्विताः दशासंवादोप्येतेषु चिन्तनीयाः । ५४—५७ ॥

**शतेति** ॥ अमितायुषो योगा आयुर्दायविधिं नापेक्षन्ते । सद्योरिष्टादियोगत्रयवदमितायुर्योगस्यापि दशापेक्षा नेति यावत् ॥ ५८ ॥

**एत इति** ॥ सारावल्यादीत्यादिशब्देन जातकादेशादिपरिग्रहः । त्रिविधमायुर्वक्ष्यमाणश्लोकाभ्यां निरूप्यते ॥ ५९ ॥

**लग्नेति** ॥ स्वल्पमध्यचिरायुषः शत्रुसमबन्धुत्वे यथासंख्यं स्वल्पाद्यायुषः । भूषेत्यक्षरसंख्यया चतुष्षष्टितमनवांशकाधिपो ग्राह्यः । एवं शत्रुसमबन्धव इत्यर्थः ॥ ६०,६१ ॥

**अथेति** ॥ अनयोर्विलग्नेन्द्वोः । त्रिषडायेषु तयोरेव । अत्र चन्द्रात् केन्द्रे जन्मेशश्चन्द्राधिष्ठितराश्यधिपः । तयोर्द्वयोरुदयलग्नचन्द्रलग्नाधिपयोः अनयोः कर्तरि षष्ठी । लग्नचन्द्राधिपयोरेकादशस्थितिरित्यर्थः ॥ ६२—६५ ॥

गुरुचन्द्रमसोर्योगः केन्द्रलग्नपतेः स्थितिः ।
जन्मेशसंस्थितिश्चात्र बलवत्त्वं तयोर्द्वयोः ॥ ६४ ॥
अनयोरायसं स्थानमायुर्दैर्घ्यकरा गुणाः ॥ ६५ ॥
आयुषोल्पत्वदा दोषा विलिख्यन्तेथ केचन ।
बलहा निर्विलग्नेन्द्वोः पापदृष्टिसमन्वयौ ॥ ६६ ॥
लग्नजन्मेशयोर्मौढ्यं स्थितिश्चारिव्ययाष्टमे ।
अनयोरपि दौर्बल्यं परिवेषोपरागयोः ॥ ६७ ॥
सन्ध्यायां दिक्प्रदाहादि दुर्निमित्तेषु वा जनिः ।
राशीनां मृत्युभागेषु सन्धिष्वपि तथा जनिः ॥ ६८ ॥
पीनं धनं खरः क्रूरो मन्त्ररत्नं वनं गिरौ ।
दिव्यनारी वरा नित्यं मृत्युभागा अजादिषु ॥ ६९ ॥
मृत्युभागस्थचन्द्रस्य स्थितिः केन्द्रेषु वाष्टमे ।
केन्द्रायुर्मृत्युभागस्थविधोश्चासत्समन्वयः ॥ ७० ॥
चन्द्रो रम्यो लयो मित्रे भूरिकार्यं चिरं भयम् ।
गोपमात्रे मनोरम्यं मृत्युभागा विधोरजात् ॥ ७१ ॥
ग्रहदृष्टस्य चन्द्रस्य स्थितिरष्टमषष्ठयोः ।
शुभानां वक्रिभिः पापैर्दृष्टानां चात्र संस्थितिः ॥ ७२ ॥
केन्द्रत्रिकोणरन्ध्रेषु तथैवाशुभसंस्थितिः ।
आयुरल्पत्वदा दोषा इति केचित्प्रकीर्तिताः ॥ ७३ ॥

---

**आयुष इति** ॥ लग्नजन्मेशयोर्जन्मशब्दश्चन्द्राधिष्ठितराशिपरः । अनयोर्लग्नजन्मेशयोः । परिवेषोपरागौ सूर्याचन्द्रमसोः । दिक्प्रदाहादि आदिशब्देनोल्कापातभूकम्पादयो गृह्यन्ते । मृत्युभागेषु भागा राशेस्त्रिंशांशाः । ते पीनं धनमित्यादिनोक्ताः । एषु लग्नस्थेषु । सन्धिष्वपि । सन्धयो राशिसन्धयः । जनिर्जननम् । पीनधनादिशब्दा अक्षरसंख्ययैकनवादिवाचकाः । मृत्युभागस्थचन्द्रस्येति पूर्वार्धे एको योगः । उत्तरार्धेप्येकः । चन्द्ररम्यादयोप्यक्षरसंख्यया षड्विंशतिद्वादशादिसंख्यापराः। केन्द्राष्टमेषु चन्द्रस्य मृत्युभागे स्थितिरित्येको योगः । केन्द्राष्टमेषु स्थितस्य वा यत्रकुत्रापि भावे मृत्युभागस्थस्य वा चन्द्रस्य पाप-

दीर्घायुषो गुणेषु स्युः सत्सु दोषेष्वनायुषः ।
कल्प्यमायुर्विमिश्रेषु तेषामल्पाधिकत्वतः ॥ ७४ ॥

एवं प्रश्नवशाच्च जातकवशात्
कृत्वायुषो निर्णयं
निर्णीते मरणेस्य रोगसमयौ
वाच्यावथो रोगिणाम् ।
निर्णीतं यदि जीवितं तु शमना-
रम्भादिकं वा रुजां
सन्दिग्धं यदि तद्द्वयं तदुचितं
ब्रूयात्सुधीर्लक्षणम् ॥ ७५ ॥

एतज्जातकवशादायुर्निरूपणविषयम् ।

॥ इति प्रश्नमार्गे नवमाध्यायः ॥



---

योग इत्यन्यः । चन्द्रविषये राशीनां मृत्युभागाश्चन्द्रादिनोक्ता: । पीनादिनोक्तास्तु लग्नविषये । वक्रिभि: पापैर्दृष्टानां शुभानामिति संबन्धः । अत्राष्टमषष्ठयो: ॥ ६६—७३ ॥

**दीर्घायुष इति** । तेषां गुणानां दोषाणां च । अल्पाधिकत्वतः । गुणाधिक्ये दीर्घायुषः । दोषाधिक्ये नायुष इति भावः ॥ ७४ ॥

**एवमिति** ॥ अस्य मरणस्य । आदिशब्देन पूर्णारोग्यलाभ: । तद्द्वयं मरणं जीवितं च । तदुचितं संदेहोचितम् । पूर्वं तिस्फुटादिनोक्तम् ॥ ७५ ॥

इति प्रश्नमार्गे नवमोध्याय: ॥

—— :o: ——

# अथ दशमाध्यायप्रारम्भः ॥

अथ मरणकालश्चिन्त्यते ।

प्रश्नेनापि च जातकेन च मृते-
श्चिन्त्यं हि कालादिकं
तत्र प्राक्समयो गदश्च जनुषा
देशश्च सञ्चिन्त्यते ।
कार्यं कालविचिन्तनं खलु मृते-
र्योगैर्दशान्तर्दशा
मन्दाचार्यदिनेशशीतकिरण-
स्थानैर्विलग्नेन च ॥ १ ॥

योगेषु सत्सु योगोक्तवत्सरान्ते मृतिर्भवेत् ।
दशापेक्षान्विते योगे तत्संवादोपि चिन्त्यताम् ॥ २ ॥

दशापहारचारेषु ग्रहाणां दोषदायिषु ।
मरणं निर्दिशेन्नृणां योगाभावेत्वयं विधिः ॥ ३ ॥

**अथेति** ॥ पूर्वाध्यायोक्तप्रकारेण मरणे निर्णीते तत्समस्यादेष्टव्यत्वात्तच्चिन्तनमुपक्रम्यत इति भावः ॥

**प्रश्नेनापीति** ॥ हि प्रसिद्धौ । तेन ग्रहचारदशाप्रश्नफलेत्याद्युक्तं स्मार्यते । तत्र प्रश्नजातकयोर्मध्ये प्राक् जनुषा जातकेन । जातकवशादायुर्निरूपणस्यानन्तरोक्तत्वादिति भावः । स्थानैः स्थितिभिः । विलग्नेन मरणकालीनेन । मन्दादीनां प्रत्येकमिदं राशिस्थितावस्मिन् लग्ने मृतिर्भवेदित्यादेष्टव्यमिति भावः ॥ १ ॥

**योगेष्विति** ॥ दशापेक्षान्विते 'दशापेक्षान्विताश्रयः' इत्युक्ते । तत्संवादो दशासंवादः ॥ २ ॥

**दशेति** ॥ योगाभावे दशानिरपेक्षयोगसत्त्वे दशाचिन्तनं नावश्यकम् । तत्सापेक्षे तु संवादार्थमेव चिन्तनं कार्यम् । तदुभयाभावे पुनर्दशापहारचारैरेव मरणं निर्देष्टव्यमिति भावः ॥ ३ ॥

अथ दोषदा दशापहारा उच्यन्ते ।

लग्नाद्वा यदि जन्मतो मृतिपती
मृत्युस्थतद्वीक्षकौ
मन्दः क्रूरदृगाणपो गुळिकप-
स्तैर्युक्तराश्यंशपः ।
राहुश्चैषु सुदुर्बलो जनुषि यो
भावेनभीष्टे स्थितः
पापालोकितसंयुतोस्य हि दशा-
वान्तर्दशा मृत्युदा ॥ ४ ॥

पापानां चेद्दशायामपहृतिरसतां
चिन्तनीयोत्र मृत्यु-
र्गोमासर्क्षेश्वराणामपि निजजनिभा-
द्दोषदः पाककालः ।
द्वित्रादीनां दशानां युगपदवसिति-
र्यत्र कालः स कष्टः
सर्वासां वा दशानामवसितिरशुभा
दोषदानां विशेषात् ॥ ५ ॥

दोषो रन्ध्राधिपत्यादिजातः सर्वदशासमः ।
दशासूद्भवास्वेव गोमासर्क्षाधिपत्यजः ॥ ६ ॥

---

**अथेति** ॥ योगानां सारावल्यादिभिरेव विज्ञेयत्वस्य प्रोक्तचरत्वादिति भावः ॥

**लग्नादिति** ॥ क्रूरदृगाणो लग्नोद्यद्द्रेक्काणाद्द्वाविंशो द्रेक्काणः । गुळिकपः गुळिक-शब्देन तदधिष्ठितराशिर्लक्ष्यते । तैर्मृतिपत्यादिभिः । एषु राह्वन्तेषु । जनुषि जननसमये ॥

**पापानामिति** ॥ असतां पापानाम् । गोमासर्क्षेश्वराणां विपत्प्रत्यरवधनक्षत्राधि-पानाम् । पाको दशापहारादिः । द्वित्रादीनां नक्षत्रकालचक्राधानादीनाम् । यत्र यस्मिन् काले । दोषदानां लग्नाद्वेत्याद्युक्तानाम् ॥ ५ ॥

**दोष इति** ॥ सर्वदशासमः नक्षत्रकालचक्रादिदशासु निर्विशेषः । उद्भवासु दशासु नक्षत्रदशास्वेव । नान्यत्र कालचक्राधानादिषु ॥ ६ ॥

दशा नीचस्थमूढानां नियमेन मृतिप्रदा ।
कालचक्रदशायास्तु विशेषोऽथ विगद्यते ॥ ७ ॥

मीनाद्वृश्चिकभं व्रजेद्यदि तदा
षष्ठादथो कर्कटं
सिंहाद्वा मिथुनं ततोपि हरिभं
चापाच्च मेषं तथा ।
कष्टः स्यादिह तत्प्रवेशसमयः
कष्टा दशा चोत्तरा
चारो राश्यनतिक्रमेण शुभदो
राश्यन्तरस्थोऽशुभः ॥ ८ ॥

**दशेति** ॥ नियमेन निश्चयेन । अव्यभिचरितमिदं लक्षणमिति भावः । ननु केचन नीचस्थानां मूढानां च दशाकालं सम्यगनुभूय जीवन्तो दृश्यन्ते ॥ अत इदं वचनं न प्रमाणं प्रत्यक्षविरुद्धत्वादिति चेदत्रेदं ब्रूमः । उत्सर्गापवादबहुळमिदं शास्त्रम् । एतदपवादः कश्चन तदीयजातके स्यात् । योगायुः खलु दशायुषां बाधकम् । तेन भाव्यम् । यद्वा तदीयजातके मरणकाले कालचक्रोत्पन्नाधानादिदशासु यत्रकुत्रचिन्नीचस्थस्य मूढस्य वा दशाकालो भुक्तिकालोऽन्तर्भुक्तिकालो वा स्यादेव । अथवा मृतिप्रदेत्यत्र मृतिशब्देन तत्तुल्यं महदरिष्टं लक्षणया ग्राह्यम् । किञ्च दशानां मृतिप्रदत्वं नैकेन लक्षणेन । किं तु बहुभिः । तत्र द्वित्रिसंवादस्तदीयमरणकाले स्यादेव । 'द्वित्रिसंवादतस्स्फुटमादेश्य'मिति समुद्घुष्यते सर्वैरपि शास्त्रकारैः । अतो न प्रत्यवस्थातव्यम् । नियमेनेति कथने विशेषः । स्वासाधारणो दोषकालः ॥ ७ ॥

**मीनादिति** ॥ ग्रादादित्यत्र गुरुदशानन्तरं कुजदशा तयोः सन्धिरशुभ इति मीनाद्वृश्चिकभमित्यनेन लभ्यते । षष्ठादथो कर्कटं तावीत्यत्र बुधदशानन्तरं चन्द्रदशा तत्सन्धिरशुभः । सिंहाद्वा मिथुनं मलेत्यत्र सूर्यदशानन्तरं बुधदशा, तत्सन्धिरशुभः । ततोपि हरिभं गोमानित्यत्र बुधदशानन्तरं रविदशा, तत्सन्धिरशुभः । चापाच्च मेषं गधकेत्यत्र गुरुदशानन्तरं कुजदशा, तत्सन्धिरशुभः । चारो राश्यनतिक्रमेण शुभदः । अनुलोमे प्रतिलोमे च राशिक्रममविहाय चारः शुभदः । राश्यन्तरस्थोऽशुभः । मीनाद्वृश्चिकभमित्याद्यस्यैवोदाहरणम् ॥ ८ ॥

देहो दक्षिणतारासु वाक्योक्तेष्वादिमं गृहम् ।
जीवः स्यादन्तिमो राशिर्विपरीतं हि वामभे ॥ ९ ॥
देहजीवेशयोरेकस्यासद्योगो गदप्रदः ।
द्वयोरसह स चेन्मृत्युर्दशा चेदशुभा दृढम् ॥ १० ॥

पाण्योर्दक्षिणवामयोश्च गणये-
हस्तादिभान्यङ्गुलि-
त्रय्या मध्यगताः पराश्च करयो-
रेवं चतुर्द्वोडवः ।
तासां वाक्यचतुष्टयं पृथगहं
वक्ष्यामि पादक्रमात्
पाराद्यक्षरसंख्ययात्र कथितो
राशिः पती राशिना ॥ १ ॥

---

**देह इति** ॥ दक्षिणतारासु 'आश्विभरणिकृत्तिकाः पुनर्वसुपुष्यश्लेषाः हस्तचित्ता-स्वात्यः मूलपूर्वाषाढोत्तराषाढाः पूर्वफल्गुन्युत्तरफल्गुनीरेवत्यः ।' इति पञ्च त्रिकाणि संभूय पञ्चदश नक्षत्राणि दक्षिणताराः । इतराणि चत्वारि त्रिकाणि संभूय द्वादश नक्षत्राणि वाम-भानि । तत्र दक्षिणताराभूतेषु पञ्चसु त्रिकेषु आद्यन्त्यानां आहत्य दशानां नक्षत्राणां 'पारं लेभे शान्तं' इति तन्मध्यगानां पञ्चानां 'दासीतावदिति', वामनक्षत्रभूतानां चतुर्णां त्रिकानां आद्य-न्तनक्षत्राष्टकस्य धेनुर्व्याघ्रीति तन्मध्यगतनक्षत्रचतुष्टयस्य प्राप्याबंधीति च पादचतुष्टयवृत्ते-श्चतुर्भिर्वृत्तैर्दशानाथा वेदितव्याः । तत्र एकैकस्मिन् पादे नवनवाक्षराणि । तेषु तेषु दक्षि-णनक्षत्राणां प्रथमाक्षरोक्तं देहः । अन्त्याक्षरोक्तं जीवः । वामनक्षत्राणामाद्याक्षरोक्तं जीवः । अन्त्याक्षरोक्तं देहः । एवं च 'पारं लेभ' इति वाक्ये पाकारोक्तो मेषराशिर्देहः । ळकारोक्त-श्चापराशिर्जीवः ॥ एवमन्येषु सप्तसु वाक्येषु । धेनुर्व्याघ्रीत्यत्र धेकारोक्तश्चापराशिर्जीवः । वकारोक्तः कर्कटकराशिर्देहः । एवमन्येषु सप्तसु वाक्येषु । एतत्कालचक्रदशाविषया ग्रन्था-न्तरे दृष्टाः केचन श्लोकाः अप्यत्र लिख्यन्ते ॥ ९, १० ॥

**पाण्योरिति** ॥ पादक्रमतः नक्षत्रप्रथमपादे जातस्य वृत्तप्रथमपादः । द्वितीयपा-दे वृत्तद्वितीयपादः । इत्यादिक्रमेणेत्यर्थः । तत्पार्श्वभे रोहिण्याद्रौदनक्षत्राष्टके त्रीणि प-रिवर्तनानि । पादचतुष्टये आहत्य षट्त्रिंशद्वर्णाः । तैश्च द्वादशानां राशीनां त्रीणि परिवर्त-नानि भवेयुः । अश्व्यादिभे पारमित्यादिवाक्येन आवर्तनद्वयं मेषात् क्रमादाझषभं मीन-राशिमभिव्याप्य परं मध्यमपरिवर्तनम् । याम्यादिषु पञ्चसु भेषूभयमाद्यन्त्यपरिवर्तनद्वयं

पारं लेभे शान्तः सजळो
नित्यं प्रादात्सीता विमला ।
रूपं प्राप्य स्निग्धकराङ्गं
वाणी तासां दोग्ध्री नान्यत्र ॥ २ ॥

दासी तावन्मूलं खे पात्रं
स्यान्नळोयं रागी विशति ।
सिंहधनाढ्योत्र हसति
भीमो गौरः पुत्रैर्योद्धा ॥ ३ ॥

प्राप्यान्नं धीदासस्तमेव
गौरी योद्धा नित्यं प्रायोरिः ।
गोमान् भुङ्क्ते सह प्राप्यान्नं
धीदासस्तमेव गिरिकः ॥ ४ ॥

धेनुर्व्याघ्रीपारगमेवं
तस्थौ दीप्तो व्योम्नीद्धो दासः ।
तस्मिन् भागे रूपधनाढ्यं
प्रायो रागी शोभा तासां हि ॥ ५ ॥

दस्राग्नेयोडुमातृद्विरसनरविवा-
तासुरोडूत्तराषा-
ढैकाङ्घ्रयन्त्योडुपादक्रमत इह मतं
पारपूर्वं चतुष्कम् ।

आळितो हयान्तं पूर्ववद्व्युत्क्रमेण । अर्कशशिभे सिंहकुळीरराशी व्यत्यासतः क्रमातिक्रमेण । अजनिष्ठं मेषान्तम् । अत्र सूर्यादीनां दशासंवत्सराह: 'मुनिपुत्रः सनिर्धेनुर्नृपस्तापो ध्वनि' इति क्रमादक्षरसंख्यया वेद्याः । प्रथमदशाया गतगन्तव्यांशास्त्रैराशिकेनानेयाः । तत्र प्र-माणं पञ्चदशनाडिकाः । तत्फलं स्वस्ववर्षाणि। इच्छा नाक्षत्रपादे गतगन्तव्यनाडिकाः । अपहारानयनं विस्तरभयान्न प्रदर्श्यते ॥ १—८ ॥

याम्यार्यत्वाष्ट्रवार्बुध्न्युडुचरणगतं
वाक्यकं दासिपूर्वं
प्राप्याद्यं सौम्यमैत्रार्यमभवसुषु तत्
पार्श्वभेधेन्दुपूर्वम् ॥ ६ ॥
त्रीणि स्युः परिवर्तनान्यखिलभे-
ष्वाद्यान्त्यमश्वयादिभे
मेषादाज्ञषभं क्रमात् परमळे-
राचापभं व्युत्क्रमात् ।
याम्यं दिष्वळिनो हयान्तमुभयं
पूर्वान्तिमं पूर्वव--
न्मेषादाज्ञषमन्यदर्कशाशिभे
व्यत्यासतो व्युत्क्रमे ॥ ७ ॥
रोहिण्यादिषु चापतोळिचरमं
प्राक्पाश्विमं स्यात्क्रमा-
न्मीनाद्युत्क्रमतो जनिठ्ठमपरं
तद्वच्च सौम्यादिके ।
मीनादाजभमाद्यमन्त्यमपरं
चापात्क्रमादाळिभं
व्यत्यासः पुनरिन्दुभानुगृहयो-
र्वामोडुषूक्तः क्रमे ॥ इति ॥ ८ ॥

एतद्दशापहाराविषयम् ।

परागपर्ययेष्वार्केरल्पमध्याचिरायुषाम् ।
मरणं निर्दिशेन्नृणां चतुर्थेपि चिरायुषाम् ॥ ११ ॥

---

**एतदिति** ॥ अथ मरणकालीनमन्दस्थितिर्निरूप्यते इति तात्पर्यम् ।॥

**परागेति** ॥ परागेत्यक्षरसंख्यया प्रथमद्वितीयतृतीया उच्यन्ते । पर्ययः परिवृत्तिः द्वादशराशिपरिवर्तनमिति यावत् । अल्पमध्याचिरायुषां क्रमेणेति लभ्यते । चतुर्थेपि अपि-

मान्दित्रिकोणगे मन्दे मरणं रात्रिजन्मनाम् ।
दिनभेहर्भुवामस्तत्रिकोणस्थेऽस्य भांशयोः ॥ १२ ॥

मन्दरन्ध्रेशयोरंशराश्योर्वार्कौ त्रिकोणगे ।
अर्कारूढगृहस्यार्थरिःफयोर्वा त्रिकोणगे ॥ १३ ॥

द्वाविंशत्र्यंशपो यस्मिन् भवने जन्मनि स्थितः ।
तत्त्रिकोणगते वार्कौ निर्दिष्टं मरणं नृणाम् ॥ १४ ॥

एतन्मन्दचारविषयम् ।

लग्नत्र्यंशेश्वराक्रान्तराशेर्जीवे त्रिकोणगे ।
कालहोरेश्वराक्रान्तराशेर्वा मरणं नृणाम् ॥ १५ ॥

यो राशिः सूर्यजाक्रान्तस्तद्धनस्य व्ययस्य वा ।
बृहस्पतिस्त्रिकोणस्थो मरणाय भवेन्नृणाम् ॥ १६ ॥

देहजीवेशयोर्योगराशिगोऽपि बृहस्पतिः ।
पापग्रहाश्च तत्रस्था नृणां मरणदायिनः ॥ १७ ॥

उक्ततृतीयसमुच्चायकः । चतुर्थेऽप्यमितायुषामिति पाठान्तरम् । अमितायुर्योगजानां चतुर्थे पर्यये ॥ ११ ॥

**मान्दीति** ॥ मान्दिशब्देन मान्द्यधिष्ठितराश्यंशौ रात्रिशब्देन रात्रिराशेरात्रिकालौ च लक्ष्यन्ते । 'दिनभेहर्भुवा'मिति अस्य भांशयोरिति चोत्तरार्धे स्पष्टमभिधानात् । त्रिकोणशब्दः स्वं स्वस्मात् पञ्चमनवमे चाभिदधाति ॥ १२ ॥

**मन्देति** ॥ मरणं निर्दिशेदिति पूर्वश्लोकादनुषज्यते ॥ १३ ॥

**द्वाविंशेति** ॥ त्र्यंशो द्रेक्काणः । भवने राशौ ॥ १४ ॥

**एतदिति** ॥ अथ मरणकालीनगुरुस्थितिर्निरूप्यत इति तात्पर्यम् ॥

**लग्नेति** ॥ कालहोरेश्वराक्रान्तराशेः त्रिकोणग इत्यनुषज्यते ॥ १५ ॥

**य इति** ॥ देहजीवेशयोर्लग्नाष्टमाधिपयोर्योगराशिगः स्फुटयोगराशिगतः । पापग्रहास्सूर्यकुजशनिराहुकेतवः । प्रसङ्गादिदमुक्तिः ॥ १६, १७ ॥

राशेर्मन्दाधिरूढस्य तृतीयायात्मजारिषु ।
यत्र स्वदर्शनं न्यूनं तत्रस्थो मृतिदो गुरुः ॥ १८ ॥

एतज्जीवचारविषयम् ।

अष्टमेशाश्रितं राशिमावहत्यहिमत्विषि ।
जन्मतारं विलग्नस्थतारकां वा मृतिर्भवेत् ॥ १९ ॥

अत्रानुष्ठानपद्धतिः ।

आत्मार्कांशकभत्रिकोणसहिते
सूर्ये चरस्थः स चे-
द्यर्कः स्थिरभेष्टमेशनवभा-
गेशर्क्षकोणस्थिते ।
लग्नेशस्थनवांशराशिसहिते
तस्य त्रिकोणेथवा
सूर्ये मृत्युमुशन्ति यद्युभयगः
सोयं भवेज्जन्मनि । इति ॥ २० ॥

एतन्मासविषयम् ।

**राशेरिति** । तृतीयायात्मजारिषु निर्धारणे सप्तमी । यत्र यस्मिन् भावे स्वस्य जीवस्य दर्शनं दृष्टिः न्यूनमितरेभ्योल्पम् । भावस्फुटं दृश्यत्वेन जीवस्फुटं द्रष्टृत्वेन च परिकल्प्य 'दृश्ये द्रष्टृविवर्जिते' इत्याद्युक्तविधया दृष्टिषष्ट्यंशमानीयेदं चिन्त्यम् ॥ १८ ॥

**एतदिति** ॥ अथ मरणमासो निरूप्यत इति यावत् ॥

**अष्टमेति** ॥ आहिमत्विषि सूर्ये । विलग्नस्थतारकां लग्नस्फुटस्थनक्षत्रम् ॥ १९ ॥

**अत्रेति** ॥ वक्ष्यमाणश्लोकस्तद्ग्रन्थस्थः ॥

**आत्मेति** । आत्मनः सूर्यस्य । अर्कांशकभं द्वादशांशराशिः । चरस्थः स चेज्जननसमये सूर्यश्चरराशिगतश्चेत् । अष्टमेशो लग्नात् । कोणं त्रिकोणम् । तस्य लग्नेशस्थनवांशराशेः । उशन्तीच्छन्ति । वश कान्तौ कान्तिरिच्छा । 'यद्यर्कः स्थिरभेष्टमेशनवभागर्क्षत्रिकोणस्थिते' इति पाठान्तरम् ॥ २० ॥

**एतदिति** ॥ अनन्तरं च मरणकालीनचन्द्रस्थितिर्निरूप्यत इति यावत् ॥

सूर्याश्रितर्क्षगे चन्द्रे रन्ध्रेशाश्रितवेश्मनः ।
त्रिकोणोपगते वेन्दौ राह्वारूढोडुनस्तथा ॥ २१ ॥
रन्ध्रेशाधिष्ठितोडौ वा निर्दिष्टं मरणं नृणाम् ॥ २२ ॥

धनेशाश्रितराशेर्वा तस्य सप्तमभस्य वा ।
त्रिकोणस्थे धनेशांशराशिगे वा विधौ मृतिः ॥ २३ ॥

निजजन्मनि यस्मिन् भे गुळिकस्तत्रगे विधौ ।
रोगारम्भस्तदस्तस्थे मरणं दृढमादिशेत् ॥ २४ ॥

एतच्चन्द्रविषयम् ।

प्रमाणगुळिकानीतिस्तद्वशान्मन्दजीवयोः ।
सूर्येन्द्वोश्च स्थितिर्मृत्यौ शास्त्रोक्ताथ निगद्यते ॥ २५ ॥

जातस्याह्नि स षड्गृहो गतनिशा
मान्दिः प्रमाणाह्वयो
रात्रौ प्राग्दिनमान्दिरेव न परं
तद्राशिनाथालये ।

**सूर्येति** ॥ सूर्याश्रितर्क्षगे ऋक्षं राशिः । नक्षत्रमिति केचित् । तथा त्रिकोणोपगते नक्षत्रत्रिकोणं अश्विन्या मघा मूले इत्याद्युक्तक्रमेण ज्ञेयम् ॥ २१, २२ ॥

**धनेशेति** ॥ तस्य धनेशाश्रितराशेः । धनेशो लग्नात् ॥ २३ ॥

**निजजन्मनीति** ॥ तत्रगे गुळिकाधिष्ठितराशिगते । तदस्तस्थे तत्सप्तमस्थे । उभयत्रापि त्रिकोणं चिन्त्यमित्युपदेशः ॥ २४ ॥

**एतादिति** ॥ एत'त्सूर्याश्रितर्क्षग' इत्याद्युक्तम् ॥

**प्रमाणेति** ॥ निगद्यते वक्ष्यमाणश्लोकेन ॥ २५ ॥

**जातस्येति** ॥ स षड्गृहः राशिषट्कसहितः । प्रमाणाह्वयः प्रमाणगुळिकसंज्ञः । तद्राशिनाथालये मन्दो न परं केवलममुष्य नवांशपाश्रितगृहादिषु गुर्वादयोऽपि मृत्युप्रदायिन इति सम्बन्धः । तद्राशिनाथालये । तद्राशिः प्रमाणमान्दिस्थितराशिः । नाथालये नाथाश्रितराशौ । अमुष्य प्रमाणमान्देः । द्वादशत्रिंशांशयोरप्यमुष्येति योज्यम् ॥ २६ ॥

मन्दोमुष्य नवांशपाश्रितगृहे
मृत्युप्रदायी गुरु-
र्भानुर्द्वादशभागपाश्रितगृहे
त्रिंशांशपर्क्षे शशी ॥ २६ ॥

मन्दजीवार्कचन्द्राणां प्रोक्तेष्वेतेषु राशिषु ।
मृतिदा स्वाष्टवर्गेषु हीनाक्षभवनस्थितिः ॥ २७ ॥

अथ प्रकारान्तरेण मन्दादीनां स्थितिरुच्यते ।

मन्देनास्य दृगाणरन्ध्रतपनां-
शेशैर्युतेर्के पृथ-
ग्राशिर्योस्य तदस्तभस्य यदि वा
प्राप्ते त्रिकोणं क्रमात् ।
चन्द्रे तीक्ष्णकरे गुरौ रविसुते
योगांशभस्तेषु वा
मृत्युस्तेष्वथ तैर्निजांशगुणितैः
संवाद ईक्ष्यस्त्विह ॥ २८ ॥

अथ सर्वग्रहाणां मरणकालस्थितिरुच्यते ।

---

**मन्देति** ॥ प्रोक्तेषु राशिषु मध्ये निजनिजाष्टवर्गे यत्र राशावक्षाल्पता तत्र राशौ तत्तास्थितिर्मृतिदेति भावः ॥ २७ ॥

**अथेति** ॥ उच्यते वक्ष्यमाणश्लोकेन ॥

**मन्देनेति** ॥ अस्य मन्दस्य रन्ध्रांशो नवांशः । तपनांशा द्वादशांशः । अस्य मन्दादिषु चतुर्षु पृथक्पृथगर्कयुक्तेषु यो राशिस्तस्य त्रिकोणमिति संबन्धः । तदस्तभस्य चतुर्णां प्रत्येक सप्तमराशेः मन्दार्कयोगराशेश्चन्द्रः, मन्दद्रेकाणाधिपार्कयोगराशे रविः । एवमन्यावपि । योगांशभस्थेषु तेषु मन्दार्कयोगस्फुटनवांशराशौ चन्द्रः, मन्दद्रेकाणाधिपार्कस्फुटयोगनवांशराशौ रविः । एवमन्यावपि । निजांशगुणितैः अंशगुणनप्रकारो वक्ष्यमाणश्लोके स्पष्टीभविष्यति ॥ २८ ॥

**अथेति** ॥ उच्यते वक्ष्यमाणश्लोकद्वयेन ॥

द्वेधा न्यस्य विहङ्गमस्फुटमजा-
घातांशसंख्याहते
तत्रैकत्र कलीकृतादितरत-
स्तत्रांशकस्योद्यतः ।
निघ्नाद्यातकलाभिरानखहृता
लिप्ताः समायोजये-
त्तत्रायातगृहे भवेत्स मरणे
शुद्धेथवा चक्रतः ॥ २९ ॥

आत्मारूढादर्थरिष्फत्रिकोणे-
ष्वत्यल्पाक्षे मन्दिरे स्वाष्टवर्गे ।
न्यूनालोके चाखिलानां ग्रहाणां
सञ्चारः स्यान्मृत्युदोनर्थदो वा ॥ ३० ॥

अथ मरणलग्नमुच्यते ।

विलग्नादष्टमो राशिरष्टमेशाश्रितश्च यः ।
लग्नेशांशकराश्योर्यो रन्ध्रराशी इतीह ये ॥ ३१ ॥

**द्वेधेति ॥** विहङ्गमस्फुटं ग्रहस्फुटम् । द्वेधा उभयत्र न्यस्य । तत्र तयोर्मध्ये । एकत्र एकस्मिन् स्फुटे । अजान्मेषादारभ्य यातानां गतानामंशानां नवांशानां संख्यया हते गुणिते । सा संख्याष्टोत्तरशतादधिका न कदापि भवेदिति ज्ञेयम् । इतरतः स्फुटात् । कलीकृतात् । तत्र स्फुटे उद्यतोंशस्य यातकलाभिः ता द्विशतात् न्यूना एव भवेयुरिति ज्ञेयम् । निघ्नाद्गुणितात् । आनखेन शतद्वयेन हृताः हरणेन लब्धाः । लिप्ताः समायोजयेत् । अजाद्या-यातांशसंख्याहते स्फुटे । तत्रायातगृहे एवं क्रियया लब्धस्फुटराशौ । अथवा चक्रतो राशि-द्वादशकात् शुद्धे शोधिते । एवमानीतस्फुटराशौ यो राशिस्तत्र वा । स तत्तद्ग्रहः ॥ २९ ॥

**आत्मारूढादिति ॥** आत्मारूढात्स्वस्वाधिष्ठितराशेः । अर्थरिष्फत्रिकोणेषु चतुर्षु मध्ये ॥ ३० ॥

**अथेति ॥** उच्यते सार्धश्लोकद्वयेन ॥

**विलग्नादिति ॥** लग्नेशभवनस्य लग्नेशाधिष्ठितराशेः ॥ ३१ — ३३ ॥

चत्वारस्तत्त्रिकोणेषु लग्नगेन्यतमे मृतिः ।
यद्वा लग्नांशकर्क्षस्य लग्नेशभवनस्य वा ॥ ३२ ॥

मरणं निर्दिशेन्नृणां चतुर्थभवनोदये ॥ इति ॥ ३३ ॥

द्वित्रिसंवादतः स्पष्टमादेश्यमिति यत्र भे ।
लक्षणानि बहून्यत्र वाच्या मन्दादयः स्फुटम् ॥ ३४ ॥

परस्परं च संवादं मन्दादीनां निरीक्ष्य च ।
पञ्चतासमये तेषां सम्यङ्निश्चिनुयात्स्थितिम् ॥ ३५ ॥

एतज्जातकवशान्मरणकालनिरूपणविषयम् ।

प्रश्नेनापि च वक्तव्यो मृतिकालस्तनो मृतौ ।
मन्दार्यार्कविधुस्थानलग्नादिकमथोच्यते ॥ ३६ ॥

मान्द्यंशराशिगो मन्दो गुरुर्लग्नांशराशिगः ।
आरूढराशिगो भानुर्मान्दिराशिगतः शशी ॥ ३७ ॥

एते मृतिप्रदाः प्रष्टुः संवादश्चेत्परस्परम् ॥ ३८ ॥

दूतवाक्यान्त्यवर्णोक्तराशिगेत्यन्तदोषदे ।
मन्दगुर्वर्कचन्द्रेषु मृतिस्तद्भवनोदये ॥ ३९ ॥

---

**द्वित्रीति** । इतिना द्वित्रिसंवादतः स्पष्टमित्येतन्न केवलं मरणकालनिरूपणविषयम् । किं तु ज्योतिश्शास्त्रे सर्वफलसामान्यनिरूपणविषयमिति स्पष्टीक्रियते । सम्यङ्निर्याणशन्यादीनां मिथः संवादं सुसूक्ष्ममालोच्यादेष्टव्यमिति भावः ॥ ३४, ३५ ॥

**एतदिति** । एतत् 'कार्यं कालविचिन्तन'मित्यारभ्योक्तम् ॥

**प्रश्नेनेति** । उच्यते एकोनविंशत्या श्लोकैः ॥ ३६ ॥

**मान्द्यंशेति** ॥ मान्द्यंशराशिः प्रश्नकालीनमान्दिस्थितनवांशराशिः । एते मन्दादयः । संवादश्चेत्परस्परं मन्दादीनां चतुर्णामित्यर्थः ॥ ३७, ३८ ॥

**दूतेति** ॥ मन्दगुर्वर्कचन्द्रेषु प्रश्नकालीनेषु मध्ये अत्यन्तदोषदे, अष्टमाद्यनिष्टस्थानस्थित्या वा पापयोगादिना वा । वर्णोक्तराशयो वक्ष्यमाणश्लोकेन स्पष्टीक्रियेरन् ॥ ३९ ॥

द्रामिळा द्वादशाचः स्युर्वर्गाद्यन्ता यरान्विताः ।
मेषादिषु क्रमाद्योऽन्याः शेषा मेषादिषट्स्वपि ॥ ४० ॥
लग्नांशराशिगे चन्द्रे प्रष्टू रुग्वर्द्धनं यदि ।
स्वांशराशिगते मोहो मृतिर्मान्द्यंशराशिगे ॥ ४१ ॥
चन्द्रमान्द्यंशकौ युक्तौ यदि तद्राशिगे विधौ ।
मोहः सत्यर्कमान्द्यंशयोगे तत्र गते मृतिः ॥ ४२ ॥
लग्नेन्दू मानदानाभ्यामित्यानीतस्फुटत्रये ।
यमकण्टकमायोज्य योडुस्तस्यां च पञ्चता ॥ ४३ ॥
गुळिकोडुत्रिकोणस्थस्तथा रन्ध्रेशराशिगः ।
मृत्युदोर्कस्तथा मान्दिनक्षत्रं च मृतिप्रदम् ॥ ४४ ॥
त्रिस्फुटस्थोडुतो यावत्त्रिकोणमुरगोडुनः ।
तावद्वत्सरमासाहर्नाडिकान्ते भवेन्मृतिः ॥ ४५ ॥
लग्नेशस्य तदंशेशे बन्धुमित्राहिताध्यरौ ।
स्वभप्रतीपतो मान्दिर्दिनरात्रौ मृतिप्रदः ॥ ४६ ॥

**द्रामिळा इति** ॥ द्रामिळानामकाराद्यौकारान्ता अचो द्वादश । हलस्तु वर्गाद्यन्ताः क, ङ, च, ञ, ट, ण, त, न, प, म, य, र इति द्वादश । अकारककारौ मेषे । आकारङकारौ वृषे । एवमौकाररेफौ मीने । शेषाः ल, व, ळ, ळ, र, न इत्येते षड्वर्णाः मेषादिकन्यान्तेषु षट्सु राशिषु । लकारो मेषे, वकारो वृषे । एवं, नकारः कन्यायाम् ॥

**लग्नांशेति** ॥ स्वांशराशिगते प्रश्नकालीनचन्द्राधिष्ठितनवांशराशिगते ॥ ४१ ॥

**चन्द्रेति** ॥ युक्तौ यदि प्रश्नकाले चन्द्राधिष्ठितनवांशराशिर्गुळिकाधिष्ठितनवांशराशिश्चैक एव चेत्तत्रगते विधौ ॥ ४२ ॥

**लग्नेन्द्विति** ॥ 'दिव्यो नम्यो नटस्तज्ञः प्राज्ञश्चन्द्रो वरः क्रमात् । यमकण्ठकनाड्यः स्युः सूर्यवारादितः क्रमात् ॥' इति यमकण्ठकनाडीः सूर्यादिवारेषु विज्ञाय गुळिकस्फुटवदानीतं यमकण्ठकस्फुटं, लग्नेन्दूमानदानाभ्यामित्याद्यानीतं प्राणदेहमृत्यूनां स्फुटत्रयं च संयोज्य लब्धे चतुस्फुटे यन्नक्षत्र तन्नक्षत्रस्थे चन्द्रे मरणमिति भावः ॥ ४३ ॥

**गुळिकेति** ॥ उरगोडुनः आश्लेषोडुनः । त्रिकोणमाश्लेषाज्येष्ठारेवतीनामन्यतमम् । तदंशेशे लग्ननवांशकाधिपतौ लग्नेशस्य बन्धौ । तावद्वत्सरान्ते मृतिः एवमातिशतौ तावन्नाडि-

एष्यनाडीसमाहर्मासाब्दान्ते लग्नचन्द्रयोः ।
बलीयसो नवांशस्य दोषाधिक्याल्पतावशात् ॥ ४७ ॥

लग्नांशैष्यविनाडीभिः समाहर्मासवत्सरैः ।
मृतिर्लग्नपतेः शत्रौ समे बन्धौ तदंशपे ॥ ४८ ॥

मृत्युप्रदनवांशैष्यविनाड्यश्च मृतिप्रदाः ।
प्रोक्तवल्लग्नपारातिसमबन्धौ तदंशपे ॥ ४९ ॥

अत्रानुष्ठानपद्धतिश्च ।

क्रूराहिमृत्युगुळिकादिषु यावति स्या·
लग्नांशकात्प्रभृति कष्टतमो नवांशे ।
तत्कष्टभाववशतः खलु तावतीषु
वाच्यो गतासु दिनमाससमासु मृत्युः ॥ ५० ॥

कान्ते मृतिः । स्वभप्रतीपतः, मान्दिर्दिनराशिस्थितश्चेद्रात्रौ मरणं, निशाराशिस्थश्चेद्दिवा । एतत्तु न प्रश्नविषयम् । किं तु जातकविषयम् । तथा वक्ष्यति च ॥ ४४—४६ ॥

**एष्येति** ॥ लग्नचन्द्रयोर्मध्ये बलाधिकस्य नवांशे एष्याभिर्नाडीभिः समाहर्मासाब्दान्ते । दोषाधिक्येति प्रश्नस्य मरणसूत्रादिदोषाधिक्ये तावदहरन्ते ॥ ४७ ॥

**लग्नांशेति** ॥ एकोंशः पञ्चदशनाडिकात्मकः । तस्य शतनवकं हि विनाडिका भवेयुः । तत्रैष्याभिर्विनाडीभिः । तदंशपे लग्नांशपे लग्नपतेः · शत्रौ सति तावद्भिरहोभिः ॥

**मृत्युप्रदेति** ॥ मृत्युप्रदः अष्टमाद्यनिष्टस्थितमान्द्यादिः । अथवा त्रिस्फुटमान्दिमृत्युकालादिः । तदधिष्ठितनवांशो मृत्युप्रदनवांशः । प्रोक्तवत्तन्नवांशैष्याविनाडीसमाहर्मासवत्सरैरित्यर्थः ॥ ४९ ॥

**अत्रेति** ॥ वक्ष्यमाणश्लोकत्रितयमनुष्ठानपद्धतिग्रन्थः ॥

**क्रूराहीति** ॥ क्रूरा मन्दादयः । गुळिकादीत्यादिना त्रिस्फुटादिसंग्रहः । तेषु मध्येऽनिष्टस्थित्यादिना कष्टतमो लग्ननवांशकादारभ्य यावति नवांशे । तत्कष्टभाववशतः कष्टभावः, कष्टत्वं तद्वशतः । कष्टत्वेधिके तावत्सु दिनेषु गतेषु मृत्युरित्यादि ॥ ५० ॥

कष्टोऽहिमृत्युगुळिकादिषु यत्र राशौ
तत्कालजं निधनदं यदि वा निमित्तम् ।
तस्य त्रिकोणजुषि कष्टतमे तदानीं
चन्द्रार्कजीवरविजेषु मृतेर्विचिन्त्या ॥ ५१ ॥

लग्नारूढपयोर्द्वयोर्बलवतः
प्रारभ्य यस्मिन् गृहे
नक्षत्रेथ दृगाणके नु भवति
प्रश्ने नवांशेपि वा ।
वृक्षादेः पतनाद्यनिष्टमसुमत्-
प्राणप्रणाशोपि वा
स्थानं वा गुळिकादिकस्य भविता
तावद्दिनादौ मृतिः ॥ इति ॥ ५२ ॥

आरूढोदययोरष्टमेष्टमेशाश्रितालये ।
पिण्डाष्टवर्गे हीनाक्षे राशौ वा लग्नगे मृतिः ॥ ५३ ॥

**कष्ट इति** ॥ आदिशब्देनात्रापि त्रिस्फुटादिसङ्ग्रहः । तत्कालजं प्रश्नकालजम् । निधनदं निमित्तं मरणनिमित्तम् । अत्र राशिना ऐन्द्र्यां मेषवृषावित्याद्युक्ता दिग्ग्राह्या । चन्द्रार्कजीवरविजेषु मध्ये कष्टतमे । तस्य राशेस्त्रिकोणजुषीति सम्बन्धः ॥ ५१ ॥

**लग्नेति** ॥ लग्नारूढपयोर्लग्नाधिपारूढाधिपयोर्द्वयोर्मध्ये । बलवतो बलाधिकस्य । राशेः नक्षत्रात् द्रेक्काणान्नवांशाच्चारम्य । यस्मिन् यावति राश्यादिचतुष्के । तावद्दिनादौ तावति दिनमाससंवत्सरे । अत्र राशिगणने द्वादशभ्यः नक्षत्रगणने सप्तविंशतेः । द्रेक्काणगणने षट्त्रिंशतो नवांशगणनेष्टोत्तरशताच्च न्यूना दिनादिसंख्या स्यादिति ज्ञेयम् । वृक्षपतनादिनिमित्तसम्भवकालीनप्राग्लग्नराशिनक्षत्रादिपर्यन्तं गणनीयम् । गुळिकादिस्थाने तु तत्तत्स्थितराश्यादिपर्यन्तमिति भेदः। वृक्षपतनादिप्राणिप्रणाशयोस्तत्सम्भवस्थलेन ऐन्द्र्यां मेषवृषावित्याद्यनुसृत्य राशिं निश्चित्य तत्पर्यन्तं गणनीयमिति केचित् । लग्नारूढभयोर्द्वयोरिति केचन पठन्ति । तन्मते लग्नस्फुटमारूढस्फुटं च ग्राह्यम् ॥ ५२ ॥

**आरूढेति** ॥ पिण्डाष्टवर्गः समुदायाष्टवर्गः ॥ ५३ ॥

श्लोकस्यास्योत्तरार्द्धं यत्तज्जन्मविषयं तथा ।
स्वभप्रतीपतो मान्दिरित्यर्द्धं च पुरोदितम् ॥ ५४ ॥

एतत्प्रश्नवशान्मरणकालनिरूपणविषयम् । पुनरपि काश्चन मरणकालग्रहस्थितय उच्यन्ते ।

द्वादशजन्माष्टमगाः पुंसां दिननाथभौमशनिजीवाः ।
वित्तक्षयं प्रवासं रोगान् जनयन्ति भीतिं वा ॥ ५५ ॥
चन्द्रस्तु निधनं प्राप्तः सप्तमं बुधलोहितौ ।
द्वादशं भास्करः षष्ठं भृगुपुत्रः समाश्रितः ॥ ५६ ॥
तृतीयं देवमन्त्री च राहुकेतुशनैश्चराः ।
जन्मस्थाः प्राणसन्देहं कुर्वन्त्येते न संशयः ॥ ५७ ॥
प्रथमे च चतुर्थे च सप्तमेचाष्टमे व्यये ।
क्रूरग्रहाः प्रदीप्यन्ते दीप्तपावकसन्निभाः ॥ ५८ ॥
चतुर्थे निधने चान्त्ये चन्द्रो नित्यमरिष्टकृत् ।
शुभः शशी च जन्मस्थो न स्याज्जन्मादिनं तथा ॥ इति ॥ ५९ ॥

**श्लोकस्येति** ॥ उत्तरार्द्धे पिण्डाष्टवर्ग इत्यादिकम् । जन्मविषयं जातकविषयम् । प्रश्नविषयमर्पीत्यर्थः ॥ ५४ ॥

**एतदिति** ॥ एतत् मान्द्यंश इत्याद्युक्तम् । उच्यते श्लोकपञ्चकेन ॥

**द्वादशेति** ॥ द्वादशजन्माष्टमगाः जन्मकालीनचन्द्राधिष्ठितराशेर्द्वादशादिस्थाः । एवमुत्तरत्रापि ॥ ५५ ॥

**चन्द्र इति** ॥ प्राणसन्देहं कुर्वन्ति । त्रिचतुरा एवं स्थिता इति भावः । न संशयः । अष्टानामेवं स्थिताविति भावः ॥ ५६, ५७ ॥

**प्रथम इति** ॥ दीप्तपावकसन्निभाः प्रदीप्यन्ते । मरणसन्देहं कुर्वन्तीति यावत् ॥ ५८ ॥

**चतुर्थ इति** ॥ जन्मदिनं जन्मनक्षत्रम् ॥ ५९ ॥

॥ इति प्रश्नमार्गे दशमोध्यायः ॥

— :o: —

इत्थं विचिन्त्य निश्चित्य ससंवादं परस्परम् ।
खेचराणामवस्थानं समयः कथ्यतां मृतेः ॥ ६० ॥

॥ इति प्रश्नमार्गे दशमाध्यायः ॥

## अथ एकादशाध्यायप्रारम्भः ॥

अथ मरणनिमित्तान्युच्यन्ते ।

क्रमेण मरणं वह्निसलिलायुधजूर्तिभिः ।
अज्ञातरोगतृट्क्षुद्भिरर्काद्यैरष्टमास्थितैः ॥ १ ॥
दृष्टेष्टमे तु सूर्याद्यैस्तत्प्रोक्तास्थ्यादिजामयैः ।
मृत्युर्यद्वाथ तत्प्रोक्तापित्तवह्न्यादिसम्भवः ॥ २ ॥
अस्थि रक्तं च मज्जा त्वग्वसा शुक्लं च वस्नसा ।
एवं हि धातवः सप्त सूर्यादीनां प्रकीर्तिताः ॥ ३ ॥
पित्तं वातकफौ पित्तं वातपित्तकफाः कफः ।
कफवातौ च वातश्च सूर्यादीनां प्रकीर्तिताः ॥ ४ ॥

---

**अथेति** । उच्यन्ते अष्टादशभिः श्लोकैः । जातकवशेनेति शेषः ॥

**क्रमेणेति** ॥ जूर्तिर्ज्वररोगः । अज्ञात इदन्तया निर्णेतुमशक्यः । तृट्प्रमेहः । जलालाभो वा । क्षुद्रक्तरोधः । अन्नालाभो वा ॥ १ ॥

**दृष्टेष्टम इति** ॥ सूर्यादीनामस्थ्यादीनि पित्तादीनि चानुपदमेव वक्ष्यन्ते ॥ २ ॥

**अस्थीति** ॥ मज्जा अस्थ्यन्तर्गतः स्नेहविशेषः । वसा मांसव्यापी स्नेहः । वस्नसा स्नाय्वपरपर्यायः सुसूक्ष्मः सिराभेदः । आयुर्वेदीयास्तु वसात्वग्वस्नसानां यद्यपि धातुत्वं नेच्छति । तथापि वसा मांसे त्वग्रसे वस्नसा मेदसि चान्तर्भवतीति सुशकः शास्त्रान्तरविरोधपरिहारः ॥ ३ ॥

**पित्तमिति** ॥ अत्र प्रकीर्तिता इत्येतद्वातपित्तकफा इत्यत्र प्राधान्येनान्वेति । पित्तमित्यादिष्वन्यत्र तु लिङ्गवचनविपरिणामेनेति वेदितव्यम् । अन्यथा “ नपुंसकमनपुंसकेनैक-

कालाङ्केष्वष्टमो राशिर्ग्रहो वाष्टमवीक्षकः ।
जन्मकाले स्थितो यत्र तत्राङ्के तद्गदोद्भवः ॥ ५ ॥
ग्रहयोगेक्षणाभावे निधने निधनाधिपः ।
द्वाविंशत्र्यंशपो वापि स्वगुणैर्मरणप्रदः ॥ ६ ॥
धातवश्च त्रिदोषाश्च प्रोक्ता वह्न्यादयो गुणाः ॥ ७ ॥
मन्दे सूर्यादिसंयुक्ते तेषां योऽस्थ्यादिरीरितः ।
रोगेण तत्र जातेन पुरुषस्य भवेन्मृतिः ॥ ८ ॥
भानुना वासृजा दृष्टे दक्षांगेरुरसृग्भवः ।
अतिसारो निशाभर्त्रा वेपथुश्चन्द्रसूनुना ॥ ९ ॥
गुरुणा श्वयथुः पादे दक्षिणाङ्के च वेदना ।
क्षयः शोफश्च शुक्रेण कासश्वासादि नेक्षिते ॥ १० ॥

---

वचान्यतरस्याम्" । इत्यनुशासनविरोधः स्यात् । अथवा एते दोषाः प्रकीर्तिता इत्यध्याहृत्य योजयितव्यम् । एवमेतादृशेषु स्थलान्तरेष्वपि विभावनीयम् । प्रकीर्तिता इत्यस्य स्थाने उदाहृता इति केचन पठन्ति ॥ ४ ॥

**कालाङ्केष्विति** ॥ कालाङ्केषु । वराङ्गमाननमित्याद्युक्तेषु मध्ये । यत्र यस्मिन्नङ्के । तद्गदोद्भवः तस्य ग्रहस्य राशेर्वा गदानामुद्भवः उत्पत्तिः ॥ ५ ॥

**ग्रहेति** । अत्र गुणशब्दो दोषप्रतिपक्षं न गुणमभिधत्ते किन्तु धातुत्रिदोषवह्न्यादिरूपमेव । एतदेव धातवश्चेत्याद्यर्द्धेन स्पष्टीकारि ॥ ६, ७ ॥

**मन्द इति** । तेषां सूर्यादीनाम् । तत्र अस्थ्यादितत्तद्धातौ । पुरुषस्येत्येतत् स्त्रीणामप्युपलक्षकम् ॥ ८ ॥

**भानुनेति** । दृष्टे मन्दे इत्यनुवर्त्य योजनीयम् । दक्षाङ्गे दक्षिणावयवे । अरुः व्रणः । असृग्भवो रक्तोत्पन्नः । "व्रणोऽस्त्रीयामीर्ममरुः" इत्यत्र ईर्मशब्दसाहचर्यादरुश्शब्दस्य क्लीबत्वेऽप्यत्र पुंस्त्वमेव । असृग्भव इति पुल्लिङ्गविशेषणात् । न च तत्रासृग्भवमिति नपुंसकलिङ्गमेव विशेषणमिति वाच्यम् । बहुकोशसम्मतत्वादस्य पाठस्य । अथवा "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इत्यनुशासनबलेन पुंस्त्वमप्यभ्युपगन्तव्यमेव । कोशान्तरं वा मृग्यमित्यलम् । समासनेसुनिर्गमे इति सर्वत्र सम्बध्यते । एवं च मरणहेतु रोगलक्षणमेतदिति तत्त्वम् । नेक्षिते येनकेनाप्यदृष्टे सति कासश्वासादि । द्राघीयसी दीर्घतरा चिरकालानुबन्धिनीति यावत् ।

राहुणा सन्धिसादादि मान्दिनोन्मादसंभवः ।
मूर्च्छा द्राघीयसी मन्दे यमकण्टकवीक्षिते ॥ ११ ॥
अरुरर्द्धप्रहारेण समासन्नेसुनिर्गमे ।
कालदृष्टे रवेः पुत्रे नृणां सञ्चरतां मृतिः ॥ १२ ॥

मान्द्यारूढनवांशकामगृहगाः
सौम्या सुमृत्युप्रदाः
पापस्तत्रगतास्तु दुर्मृतिकरा-
स्तेष्वर्क उर्वीपतेः ।
क्षीणेन्दुः सलिले युधि क्षितिसुतः
सूर्यात्मजो वञ्चना-
द्राहुः पन्नगदंशनान्मरणदो
यद्वा विषस्पर्शनात् ॥ १३ ॥

एतत् प्रश्नेपि चिन्त्यम् ।

जूर्त्या तोयविकारतश्च पिटका-
घ्रुष्णामयैर्वायुना
गुल्माक्षोत्थितवेदनाभिरधिकं
शोफप्रमेहक्षयैः ।

---

यमकण्कानयनं पूर्वमेव प्रदर्शितम् । अर्द्धप्रहारकालावपि मान्दिवादेवनेयौ । तयो रविवारादिषु नाडिकाक्रमस्तु "वन्द्यश्चन्द्रस्तनुर्दिव्यो नागो नित्यो रुरू रवेः अर्द्धप्रहारनाड्यः स्युर्मान्दिवत् स्फुटमानयेत्" इति "नागः प्राज्ञो रुरुः प्राज्ञस्तनुर्भव्यस्तनू रवेः । कालनाड्यस्तु कथ्यन्ते" इति च वचनाभ्यामवगन्तव्यः । सञ्चरतां मृतिः । अनायासेन मरणमित्यर्थः ॥ ९—१२ ॥

**मान्द्यारूढेति** ॥ कामगृहं सप्तमराशिः । सुमृत्युः सुखमरणम् । तत्र मान्द्यारूढनवांशके । दुर्मृतिर्दुर्मरणम् । सामान्योक्तं दुर्मरणमेव विशेषतो विविनक्ति तेष्वित्यादिना । उर्वीपतेः राजसकाशात् । सलिले जले । पतनादिति शेषः । युधि युद्धमध्ये । वञ्चनात् अन्येन पञ्चयित्वा मारणं क्रियेतेति भावः । विषस्पर्शनात् अन्येन दत्ताद्विषात् । स्पर्शनमत्र दानपर्यायः । "स्पर्शनं प्रतिपादनम्" इत्यमरः ॥ १३ ॥

**एतदिति** ॥ एतन्मान्द्यारूढेत्याद्युक्तम् । अपिर्जातकसमुच्चायकः ॥

**जूर्त्येति** ॥ इनादीनां सूर्यादिशन्यन्तानाम् । सप्तानां त्र्यंशगे द्रेक्काणगते । यथाक्रमं

कासश्वाससमीरतो मृतिरिना-
दीनां शनौ त्र्यंशगे
त्र्यंशेशा यदि तेऽहिवीक्षितयुता
मृत्युर्विषोत्थामयैः ॥ १४ ॥

सौम्यानामंशराशीन् गतवति रविजे
स्वर्क्षतुङ्गादिगे वा
जीवर्क्षस्थे विशेषान्म्रियत इह गृहे
पुत्रमित्राद्युपेतः ।
नीचारात्यालयस्थे रविभुवि रहितो
बन्धुभिर्दुःखितः सन्
सर्पत्र्यंशेऽत्र तिष्ठत्यहिगुळिकसमे-
तेक्षिते सर्पदष्टः ॥ १५ ॥

मन्दे भौमयुतेऽथवा रवियुते
क्षेत्रस्थिते चानयो-
र्भूते वह्निमये स्थितेऽगुगुळिको-
पेतेक्षितेऽग्नौ मृतिः ।
एवंभूतशनौ जलग्रहयुते
तत्राम्बुपातादभि-
र्दोषेऽसत्युदितेम्बुभूतखचर-
क्षेत्रान्विते वारिणि ॥ १६ ॥

---

जूर्त्यादिभिः कासश्वाससमीरान्तैः सप्तभिर्मृतिः स्यात् । जूर्तिर्ज्वरः । तोयविकाराः शोफ-
महोदरादयः । वायुना वायुकोपेन । गुल्मश्चाङ्गोत्थितवेदनाश्चेति द्वन्द्वः । अङ्गशब्देन सर्वाङ्गा-
णि विवक्ष्यन्ते । ते त्र्यंशेशा शन्यधिष्ठितद्रेक्काणाधिपाः ॥ १४ ॥

**सौम्यानामिति** । सौम्यानां शुभानाम् । इह शनौ । जीवर्क्षस्थे विशेषात् ।
अत एव जीवर्क्षगशन्याश्रयफलं स्वन्त इत्युक्तं वराहमिहिरेण। अत्र शनौ सर्पत्र्यंशे सर्पद्रेक्का-
णे । ते च पूर्वं प्रदर्शिताः ॥ १५ ॥

**मन्द इति** । अनयोर्भौमरव्योः । अगू राहुः । एवंभूतशनौ राहुगुळिकयोगदृष्टि-

त्र्यंशे कोलमुखे स्थिते मृगगणै-
गृध्रानने पक्षिभि-
स्तत्राप्यस्तु बलोनता गुळिकयो-
गेक्षादिकं भास्करैः ।
नेष्टस्थानगताश्च मान्दिगृहपाः
सूर्यादयो दुर्बला-
स्तातान्मातृसहोत्थबन्धुतनय-
स्त्रीभ्यः स्वतो मृत्युदाः ॥ १७ ॥

---

युक्ते शनौ । जलग्रहौ शुक्रचन्द्रौ । तप्ताम्बुपात उष्णजले निपतनम्; स्वाङ्गे तस्य निपतनं वा । दोषे असतीति च्छेदः । उक्तदोषाभावेपि जलभूतास्थित्या जलग्रहक्षेत्रस्थित्या जलग्रह-योगेन च वारिणि मरणम् । अत्र दोषे सति इति केचिच्छिन्दन्ति । राहुगुळिकयोगदृष्टि-रूपे दोषे सम्भवतीत्यर्थः । युक्तं चैतत् । राहुगुळिकयोगदृष्टिसत्त्वेनैव दुर्मृतिसामान्यं साध्य-ते । तादृशस्य शनेर्भौमरविसम्बन्धोपि मृतिं यथा विशिष्य लक्षयति । एवं तादृशस्य श-नेरम्बुभूतान्वितत्वादिकं वारिणि मरणरूपं विशेषं साधयत्युपपन्नमेतदवगन्तव्यम् । भूतस्थि-तिस्तु "द्रेक्काणे हि नवांशकास्त्रय इमे यामैश्चतुर्भिर्युता यामे भूमिमुखोऽसमे युजि वियत्पूर्वश्च भूतक्रमः । सपादा नाडिका नाडी पादोना च घटीदळम् । नाडीपादश्च भागाः स्युर्यामे भूम्यादितः क्रमात्" । एवं ग्रहस्फुटानि पञ्चभूतानि वेद्यानि । एकस्मिन् द्रेक्काणे त्रयो नवां-शकाः । एकस्मिन् नवांशके पञ्चदशनाडिकात्मके चत्वारो यामाः । पादोनचतुर्नाडिका-त्मकाः तत्र प्रथमतृतीययोर्यामयोर्भूम्यादिक्रमेण द्वितीयतुरीययोर्वियदादिक्रमेण च भूतस्थि-तिः । तत्र पृथिव्याः सपादा नाडिका, अपामेका नाडी, तेजसः पादोनघटी, वायोरर्द्धघटी, आकाशस्य घटिकापादः, इति भूतस्थितिर्विज्ञेया ॥ १६ ॥

**त्र्यंश इति ॥** स्थिते मन्द इत्यध्याहर्तव्यम् । कोलमुखे त्र्यंशे स्थिते सति मृगगणै-र्हेतुभिर्मृत्युरिति सम्बन्धः । गृध्रानने त्र्यंशे पक्षिभिः तत्रोक्तयोगद्वयेपि गुळिकशब्दो राहोरप्युप-लक्षकः । तद्योगदृष्ट्यादिकस्यापि दुर्मरणसाधकत्वोक्तेः । यद्वा आदिशब्दाद्राहुयोगदृष्टी गृह्ये-ताम् । भास्करैः शनेः । नेष्टस्थानात । सूर्यो गुळिकभवनाधिपो दुर्बलोनिष्टस्थश्च यदि पि-तृनिमित्तं मरणम् । चन्द्रादयश्चन्मातादीनामत्तम् । स्वतः आत्महत्ययेति भावः । द्रेक्काणा-नां कोलमुखत्वादिकं वराहमिहिरहोरास्थद्रेक्काणाध्यायादवगन्तव्यम् ॥ १७ ॥

दौर्बल्यादियुते शनौ क्षितिभुवा
युक्तेक्षिते पश्चता
चामुण्ड्यादिनिपीडयारगुळिको-
पेतेसिबाणादिभिः ।
मन्दे मान्दिविवस्वदीक्षितयुते
कोपेन शम्भोस्तदी-
यावासाहितवासभूतकृतया
जूर्त्या मृतिं निर्दिशेत् ॥ १८ ॥

एतज्जातकवशान्मृत्युनिमित्तादिनिरूपणविषयम् ।
मृत्युरोगनिमित्तानि कथितानीति जातकात् ।
अथ मृत्युप्रदा रोगाः कथ्यन्ते प्रश्नलग्नतः ॥ १९ ॥

वीक्षते योऽष्टमं खेटस्तस्य रोगस्तु मृत्यवे ।
तदभावेऽष्टमस्तस्य द्वयाभावे तदीशितुः ॥ २० ॥
अत्यग्निं वेदनामन्तर्ज्वरं चार्कोऽथ चन्द्रमाः ।
छर्दिमूर्ध्वानने तिर्यग्वक्त्रे मूत्रादिबन्धनम् ॥ २१ ॥
अतिसारं तृषं चाधोवक्त्रे शोफं तु सर्वगः ।
उष्णप्रसरणं दाहं रक्तक्षोभभवं व्रणम् ॥ २२ ॥

---

**दौर्बल्येति** ॥ शम्भोः कोपेन हेतुना । तदीयवासे शिवक्षेत्रे अहितवासैर्भूतैः कृतया जूर्त्या ज्वरेण ॥ १८ ॥

**एतदिति** ॥ एतत् "क्रमेण मरणं वह्निसलिले" त्याद्युक्तम् ।

**मृत्युरोगेति** ॥ कथ्यन्ते वीक्षते योऽष्टममित्यादिना ॥ १९ ॥

**वीक्षत इति** ॥ तदभावे वीक्षिकाभावे । द्वयाभावे अष्टमस्थाष्टमवीक्षकयोरुभयोरभावे । ग्रहाणां रोगानुपदमेव प्रदर्श्यते ॥ २० ।

**अत्यग्निमिति** ॥ ऊर्ध्वानने चन्द्रश्छर्दिं कुर्यात् । शोफं तु सर्वग इत्युक्तं शोफं च । सर्वगः ऊर्ध्वाधस्तिर्यगाननराशिस्थः । शोफश्चन्द्रस्य सामान्यरोगः । छर्द्यादयो विशेषरोगा इति तात्पर्यम् । 'भार्गवाजीतिं श्वयथुं अथ दाहं मोहं च कुर्यात्' इति योजना ।

भूमिजोथ बुधः कुर्याच्छीतज्वरमतिभ्रमौ ।
सन्निपातरुजं चाथ गुरुर्बुद्धेरनार्जवम् ॥ २३ ॥
अजीर्तिं श्वयथुं चाथ दाहं मोहं च भार्गवः ।
तृष्णारुचिसमस्ताङ्गतोदांस्तरणिनन्दनः ॥ २४ ॥
वायुक्षोभमहिर्मान्दिर्हिक्कामपि सिरोद्गमम् ।
सूर्यादिगुळिकान्तानामिमे रोगाः प्रकीर्तिताः ॥ २५ ॥
सूर्याद्यैर्भास्करादीनामंशैर्वा त्रिस्फुटे युते ।
ये रोगा मृत्युदाः प्रोक्ताश्चिन्तयेदिह तानपि ॥ २६ ॥
चन्द्रे लग्नांशराशिस्थे वृद्धिमेति मनागपि ।
आमयो यो भवेदेष मरणायैव पृच्छताम् ॥ २७ ॥
लग्नमान्द्यंशकाभ्यां यदुदितं पात्रभञ्जनम् ।
त्रिस्फुटस्थोडुना यच्च लक्ष्म तच्चेह चिन्त्यताम् ॥ २८ ॥

अत्र कण्ठाभरणम् ।

अथ अजीर्तिश्वयथ्वोरनन्तरम् । जलकारकः शुक्रोजीर्तिश्वयथू प्रथमं तदनन्तरं दाहमेहौ च कुर्यादिति भावः । अत्राजीर्तिं श्वयथुं चेति पूर्वान्वयितया केचन परिकल्पयन्ति । तन्मते इमौ गुरोरेव रोगौ । इदमप्युपपद्यते । गुरोः कफकारकत्वादजीर्तिश्वयथ्वोः प्रायः कफजन्यत्वात् । मध्यवर्ती अथशब्दश्च तत्पक्षे आरम्भद्योतकः । उभयस्यापि युक्तिसिद्धत्वाद्देहलीप्रदीपन्यायेनेदं पदद्वयमुभयत्रापि योज्यमिति मन्यामहे ॥ २१—२५ ॥

**सूर्याद्यैरिति** ॥ प्रोक्ताः 'ज्वरस्तापस्तना'वित्यादिग्रन्थेन षष्ठाध्याये ॥ २६ ॥

**चन्द्र इति** ॥ प्रश्नकालीनलग्ननवांशराशौ चन्द्रे तिष्ठति वर्धते चेद्रोगो मरणायैवेति भावः ॥ २७ ॥

**लग्नेति** ॥ यल्लक्ष्म उदितं 'चन्द्रे लग्नांशराशिस्थ' इत्यादिना । त्रिस्फुटस्थोडुना यल्लक्ष्म 'दिवसान्तितयादर्वाक्कलह' इत्यादि । तच्च तदुभयमपि । इह मरणलक्षणनिरूपणविषये ॥ २८ ॥

**अत्रेति** ॥ अनन्तरश्लोकचतुष्कं तत्रस्थम् ॥

मृत्युपतिर्यदि भानुः
प्रबलजनस्यागमो विगृह्य भवेत् ।
आसन्ने सति मरणे
प्रष्टुः स्यात् कोपि कलहो वा ॥ २९ ॥

चन्द्रश्चेद्वनितागमो यदि कुजः
कांक्षा गुळक्षीरयो-
र्वक्तव्यामयिनोथवा खलु वदे-
दानीतिमात्रानयोः ।
आयानं विदुषो बुधो यदि गुरु-
र्विप्रस्य शुक्रो यदि
व्यापद्विप्रचतुष्पदां यदि शनिः
स्याद्दुष्टनीचागमः ॥ ३० ॥

मृत्युश्चेत्फणियुक्स वा शिखियुतो
भिक्षाशिसर्पागम-
स्तस्मिन केतुयुते भवेच्च पतनं
तत्रारचन्द्रान्विते ।

**मृत्युपतिरिति** ॥ मृत्युपतिः मृत्युस्फुटराश्यधिपः । प्रबलजनस्य कलहायमानस्य । लक्षणयोरनयोरन्यतरदृष्टं चेत्पृच्छकस्य मरणमासन्नमित्यादिश्यतामिति भावः । एवमुत्तरत्रापि ॥ २९ ॥

**चन्द्र इति** ॥ मृत्युपतिरित्यनुवर्तते । चन्द्रो मृत्युपतिश्चेदिति योजना । वनितागमो रोगिगृहे । कांक्षा रोगिणः । आनीतिं येन केनाप्यानयनम् । अत्र रोगिगृहे । अनयोर्गुळक्षीरयोः । गुरुर्यदि विप्रस्य आयानमिति सम्बध्यते ॥ ३० ॥

**मृत्युरिति** ॥ स मृत्युः । भिक्षाशिसर्पागमः मरणलक्ष्म भवेदित्यन्वयः । तस्मिन् मृत्यौ । तत्र मृत्यौ । आयुरारोग्यदे प्रश्ने मृत्युपतिरित्याद्युदितमेतच्च एतदेव स्वक्ष्मलक्ष्म भवेत् । किं तु देहासुनाथादिभिः एतत् । मृत्युरित्यस्य स्थाने प्राणदेहावेव योज्याविति विशेषः ॥ ३१ ॥

ब्रूयाद्राजनभञ्जनं मरणक-
क्ष्माथायुरारोग्यदे
प्रश्ने रुक्च्छमलक्ष्म चैतदुदितं
देहासुनाथादिभिः ॥ ३ ॥

छर्दिः शोफोतिसारो मरणकरगदा-
स्त्रिस्फुटांशेब्जभृग्वो-
र्धाम्न्यूर्ध्वास्याद्यभेदादिनकरकुजयो-
रुष्णसञ्चारदाहौ ।
चेतोवाक्स्थम्भनं वा विद इह तु गुरो-
र्द्विभ्रमोपेतवाणी-
रोधः श्वासस्य वायोः स्खलनमपि शने-
र्दृष्टयुक्तैश्च तैस्तैः ॥ इति ॥ ३२ ॥

प्राणो लग्ननवांश-
श्चन्द्रनवांशः समीरितो देहः ।
गुळिकनवांशो मृत्युः
कालः स्यात्त्रिस्फुटस्यांशः ॥ इति च ॥ ३३ ॥

एतत्प्रश्नवशान्मरणरोगनिरूपणाविषयम् । अथ जातकेनैव म-
रणदेश उच्यते ।

---

**छर्दिरिति ।** त्रिस्फुटांशे अब्जभृग्वोश्चन्द्रशुक्रयोः । धाम्नि श्वेते सति । ऊर्ध्वा-
स्याद्यभेदात् छर्द्यादयो मरणकरगदाः स्युः । दृष्टयुक्ते च तैस्तैः । त्रिस्फुटांशे चन्द्रशुक्राभ्यां
दृष्टे युक्ते वा सत्यपि । छर्द्यादीनां मरणलक्षणत्वमादेश्यम् । एवं दिनकरकुजादिष्वपि ॥ ३२

**प्राण इति ।** मृत्युपतिर्यदीत्याद्युक्ते प्राणादयो लग्ननवांशादय एव ग्राह्याः । न
तु लग्नेन्दू मानदानाभ्यामित्याद्यानीताः ॥ ३३ ॥

**एतदिति ॥** एद्वीक्षते योष्टमं खेट इत्याद्युक्तम् । उच्यते मृत्युस्स्यादित्यादिना ॥

मृत्युः स्याच्चरभे विदेश उभये
मार्गे स्वदेशे स्थिरे
ग्राम्यारण्यजलात्मके तु निधने
ग्रामे जलेष्ववन्तिके ।
स्वच्छम्लेच्छनतोन्नतेषु सदसत्-
क्षेत्राध ऊर्ध्वानने
दीपादीनपि निर्दिशेज्जननव-
च्छेनाष्टमेनामुना ॥ ३४ ॥

स्वजन्मनि विलग्नांशपत्योः प्राण्याश्रितेन च ।
राशिना स्वपराध्वादिप्रदेशेषु वदेन्मृतिम् ॥ ३५ ॥

स प्राणी चेदन्यखेटैः समेतः
संदृष्टो वा तेषु वीर्यान्वितस्य ।
लग्नांशाधीशस्य वा देहभाजां
देवांम्बादिस्थानभेदेषु मृत्युः ॥ ३६ ॥

लग्नलग्नेशयुग्द्रष्टा वास्ति चेत्कश्चनामुना ।
जीर्णसंस्कृतगेहादौ मरणं कैश्चनेरितम् ॥ ३७ ॥

**मृत्युरिति** । निधने चरभे सति विदेशे मृत्युः स्यादित्यादि । स्वच्छेति निधने सतां क्षेत्रे स्वच्छदेशे । असतां क्षेत्रे म्लेच्छदेशे । अधोमुखे नतप्रदेशे ऊर्ध्वमुखे उन्नतप्रदेशे। दीपलक्षणमुपरि सुरतप्रश्ने वक्ष्यते ॥ ३४ ॥

**स्वजन्मनीति** ॥ लग्नाधिपलग्ननवांशाधिपयोर्मध्येऽधिकबलवतश्चरादिस्थित्या सदसत्क्षेत्रादिस्थित्या च पूर्वश्लोकोक्तवदेत्र निरूपणीयमिति भावः ॥ ३५ ॥

**स इति** ॥ पूर्वश्लोकोक्तः । तेषु युक्तद्रष्टृषु मध्ये । वीर्यान्वितस्याधिकबलस्य ॥ देवाम्ब्वादिस्थानभेदेषु 'देवांम्ब्वग्निविहारकोशशयनक्षित्युत्कराः स्युः क्रमा'दिति वराहमिहिरोक्तस्थानेषु । देहभाजां मृत्युरिति सम्बन्धः ॥ ३६ ॥

**लग्नेति** ॥ १ लग्नस्थः, २. लग्नाधिपसंयुक्तः, ३. लग्नद्रष्टा, ४. लग्नाधिपद्रष्टा, एतेषु बलवता 'जीर्णं संस्कृतमर्कजे क्षितिभुवा दग्ध'मित्यादिवराहमिहिरश्लोकोक्तगृहेषु । मरणं कैश्चनाचार्यैरीरितम् ॥ ३७ ॥

एतन्मरणस्थाननिरूपणविषयम् ।

ज्ञात्वा कालादि सर्वं तदशुभशुभते
चापि बुध्वाथ तेषां
सर्वेषां चेच्छुभत्वं गदशमनमरं
दीर्घमायुश्च वाच्यम् ।
सर्वेषां चाशुभत्वं यदि मृतिरचिरा-
न्मिश्रतायां तु तेषां
मन्दं शान्ती रुजां वा मृतिरधिकतया
स्यात् सतां चासतां च ॥ ३८ ॥

एवं निरूप्य निर्णीते मरणे सति पृच्छताम् ।
तस्य कालं च रोगांश्च देशांश्चेति विनिर्दिशेत् ॥ ३९ ॥

॥ इति प्रश्नमार्गे एकादशाध्यायः ॥

**एतदिति** ॥ एत'न्मृत्युः स्याच्चरभ' इत्याद्युक्तम् ॥

**ज्ञात्वेति** ॥ कालादि आदिशब्देन देशस्ववायुदशादीनां निर्गममार्गादिसंभवानां च सङ्ग्रहः । तदशुभशुभते तस्य कालादेरशुभशुभते । अरं शीघ्रम् । अचिरान्मृतिरिति संबन्धः । तेषां शुभाशुभानाम् । सतां शुभानामधिकतया मन्दं रुजां शान्तिः, असतामशुभानामधिकतया मन्दं मृतिः ॥ ३८ ॥

**एवमिति** ॥ तस्य मरणस्य । इति प्रदर्शितप्रकारेण । विनिर्दिशेत् अस्मिन् काले अस्मिन् देशे अनेन रोगेण, अनेन प्रकारेण मरणमिति कथयेत् ॥ ३९ ॥

॥ इति प्रश्नमार्गे एकादशोऽध्यायः ॥

— :•: —

# अथ द्वा॰शाध्यायप्रा॰म्भः ॥

अथ रोगविशेषा उच्यन्ते ।

निर्णीते सति जीवने खलु रुजां
शान्त्यै चिकित्सां वदे-
दज्ञातेषु गदेषु दुष्करतरा
सा चापि यस्मात्ततः ।
कर्तव्यो गदतत्वबोध इह त-
द्बोधाय भेदा रुजां
कथ्यन्ते खलु तत्र रोगशमने
कार्याः क्रियाश्चोचिताः ॥ १ ॥

तत्तदुक्तामया वाच्या अनिष्टस्थानगैर्ग्रहैः ।
इष्टस्थितैस्तथारोग्यं तदेवाथ निगद्यते ॥ २ ॥

पपा लाभतृतीयगाः सहजवैर्यन्त्याष्टमेभ्योन्यगाः
सौम्या मान्दिरपि त्रिकोणमृतिकेन्द्रेभ्योपरत्र स्थितः ।
सर्वेमी कथयन्त्यनामयतनुं प्रष्टारमेवं स्थिता
रोगग्रस्तकळेबरं च कथितेभ्योन्यत्र ते संस्थिताः ॥ ३ ॥

**निर्णीत इति** निर्णीते समयादिभिर्निश्चिते । रुजां रोगाणाम् । सा चिकित्सा । ततो हेतोः । तद्बोधाय गदतत्वबोधाय । रोगशमने विषये तदर्थमिति यावत् । क्रियाश्च कथ्यन्ते इति संबन्धः ॥ १ ॥

**तत्तादिति** ॥ तत् इष्टस्थितत्वमनिष्टस्थितत्वं च । तत्तदुक्तामयाः तत्तद्ग्रहोक्तरोगाः ॥ २ ॥

**पापा इति** ॥ सर्वे एवं स्थिताः । कथितेभ्योन्यत्र लाभतृतीयेतरेषु पापाः सहजवैर्यन्त्याष्टमेषु शुभाः त्रिकोणमृतिकेन्द्रेषु मान्दिश्च ॥ ३ ॥

आरोग्यदा ग्रहा यत्र सुस्थसंज्ञास्तु तत्रगाः ।
रोगदा यत्र ते दुस्थास्तदुक्तं सारसङ्ग्रहे ॥ ४ ॥

षष्ठान्त्याष्टमदांबुलग्ननवमापत्येषु ये दुर्बलाः
पापाः षष्ठमृतिव्ययेष्वपि शुभा दुस्था भवन्ति ग्रहाः ।
लग्नेशाध्यरयोतिरोगमृतिदा दुस्थेषु सुस्थाश्च ते-
नुक्तस्थानगताः शशाङ्कसहिताः स्वं स्वं फलं कुर्वते ॥ ५ ॥

अत्र ग्रन्थान्तरमपि ।

द्विण्मृत्युव्ययसंस्थितैस्तदुदितान्
व्याधीन् वदेल्लग्नव-
द्रष्ट्रा तत्सहितेन वा तनुगतै-
स्तद्द्रष्टृभिर्वा ग्रहैः ।
ऊर्ध्वास्ये चरभे गळोपरि गळा-
त्तिर्यङ्मुखे च स्थिरे
द्वन्द्वेधोमुखगेप्यधः कटितटात्
लग्नस्थिते व्याधयः ॥ ६ ॥

**आरोग्यदा इति** ॥ यत्र पूर्वश्लोकोक्तप्रकारेण येषु भावेषु । तत्रगाः तद्भावस्थिताः ॥ ४ ॥

**षष्ठेति** ॥ षष्ठादिष्वष्टसु पापाः । षष्ठादिषु त्रिषु शुभाः । दुस्थेषु मध्ये लग्नेशस्य अध्यरयोतिशत्रवः । अतिरोगमृतिदाः । ते शुभा अशुभाश्च अनुक्तस्थानगताः सुस्थाः । शशाङ्कसहिताः सर्वेपि सुस्था एव । स्वं स्वं फलं कुर्वते । दुस्था अशुभफलं सुस्थाः शुभफलं चेति भावः ॥ ५ ॥

**अत्रेति** ॥ अत्र रोगविशेषनिरूपणविषये ॥

**द्विडिति** ॥ ऊर्ध्वास्ये चरभे च लग्नस्थिते सति गळोपरि व्याधयः । तिर्यङ्मुखे स्थिरे च गळात् अधः कट्या ऊर्ध्वमित्यर्थः कटितटात् आपादतलम् । तदुदितान् तत्तद्ग्रहकथितान् ॥ ६ ॥

सूर्यादीनां कुक्षिहृन्मूर्द्धवक्षा-
स्यूरू वक्त्रं जानुनी चांघ्रियुग्मम् ।
अङ्गानि स्युर्व्याधियोगे ग्रहाणां
वक्तव्या दौर्बल्यदौस्थ्यादिभाजाम् ॥ ७ ॥

वराङ्गपूर्वावयवा निधेया
लग्नादिभावेष्वधिपेषु चैषाम् ।
सक्रूरभावग्रहसंस्थमङ्गं
सव्याधिकं प्रष्टृजनस्य वाच्यम् ॥ ८ ॥

स्पृष्टेन राशिना प्रष्ट्रा चारूढेनोदयेन च ।
रोगस्थानं वदेदुक्तमारूढविषये हि तत् ॥ ९ ॥

प्रोक्तस्त्रिदोषसम्बन्धो वराहमिहिरोदितः ।
ग्रहाणां प्रागथेदानीं वच्म्युक्तं सारसङ्ग्रहे ॥ १० ॥

**सूर्यादीनामिति** । सूर्यादीनां राह्वन्तानाम् । केतोर्नात्र विषये चिन्तनीयत्वम् । अङ्गानुक्तेः । किञ्च राहुकेत्वोः परस्परसमसंस्थितिर्नियता । उभयोस्तयोरन्यतरस्य नियतं दौस्थ्यमपि संभवेत् । एवं च स्वस्थप्रश्नस्य निरवकाशत्वमापद्येत । तच्च प्रश्नसम्प्रदायविरुद्धम् । अन्ये पुनः राहोर्दक्षिणांघ्रिः केतोर्वामांघ्रिरित्यङ्गविभागं कल्पयन्ति । तथापि दौर्बल्यदौस्थ्यादिभाजामित्युक्त्या दौस्थ्येपि शुभवर्गस्थितिशुभयोगदृष्ट्यादिसत्त्वे तेन व्याधिर्न वाच्य इत्यपि मन्यन्ते । तन्मन्दम् । स्पष्टवचनाभावात् वृद्धप्राश्निकसम्प्रदायाननुसारित्वाच्च । ग्रहाणामङ्गकल्पने सर्वत्रेदमनुसन्धेयम् ॥ ७ ॥

**वराङ्गेति** । निधेयाः आरूढे शिरः द्वितीये मुखं तृतीये उरः एवं द्वादशे पादद्वयमिति । लग्नाधिपे शिरः । द्वितीयाधिपे मुखं एवं द्वादशाधिपे पादद्वयमित्यपि । यस्मिन् भावे क्रूरग्रहः यद्भावाधिपः क्रूरयुक्तः तद्भावतद्ग्रहसम्बन्ध्यङ्गेषु व्याधिर्वाच्यः ॥ ९ ॥

**स्पृष्टेनेति** । उक्तं हि 'यदङ्गराशिः संस्पृष्ट आरूढ उदितोथवा । तस्मिन् पापयुते ब्रूयात्तदङ्गे रुग्व्रणादिकं' इति श्लोकेन ॥ ९ ॥

**प्रोक्त इति** ॥ प्रोक्तः 'पित्तं वातकफौ पित्तं' इति श्लोकेनाभिहितः । वच्मि वक्ष्यमाणश्लोकेन ॥ १० ॥

पित्तं वातयुतं करोति दिनकृ-
द्वातं कफं शीतगुः
पित्तं भूमिसुतस्तथा शशिसुतो
वातं च पित्तं कफम् ।
जीवो वातकफौ सितोनिलकफौ
वातं च पित्तं शनिः
क्षीणेन्दुः स्थिरराशिनाथकथितं
पूर्णः कथं तोयभे ॥ इति ॥ ११ ॥

रोगान् कुर्युर्ग्रहाः स्वोक्तपञ्चभूतवशादपि ।
तत्कालाश्चर्तवः स्वोक्तास्तथा शास्त्रान्तरोदितम् ॥ १२ ॥
दुस्थयोरर्कभूसून्वो रोगाः स्युः पित्तसम्भवाः ।
शुक्रेन्द्वोर्जलजा मन्दे वातजा ज्ञे त्रिदोषजाः ॥ १३ ॥
बाधिर्याद्या नभोजाता अनिष्टस्थानगे गुरौ ।
अनिष्टगा निजान् रोगान् कुर्युर्निजानिजर्तुषु ॥ इति ॥ १४ ॥
रोगदायिषु खेटेषु तत्तत्प्रोक्तेषु धातुषु ।
अपि रोगोद्भवो वाच्यः प्रोक्तं ग्रन्थान्तरे तथा ॥ १५ ॥

**पित्तमिति** ॥ वराहमिहिरमतेन प्रदर्शिता दोषास्तत्तद्ग्रहाणां प्रधानास्तदधिकाः सारसङ्ग्रहदर्शितास्तु अनुगामिनः । यथा सूर्यस्य पित्तप्रधानवातानुबन्धिदोषकारकत्वमित्यादि ॥ ११ ॥

**रोगानिति** ॥ स्वोक्तपञ्चभूतवशात् स्वोक्तपञ्चभूतवशमाश्रित्य । ल्यब्लोपे पञ्चमी । हेतौ पञ्चमी वा । स्वोक्ता: ऋतवः तत्काला इति योजना । अनन्तरश्लोकौ शास्त्रान्तरादुद्धृतौ ॥ १२ ॥

**दुस्थयोरिति** ॥ पित्तशब्देनाग्निरपि गृह्यते 'पित्तं वह्निः' इति वाग्भटः । जलजाः शोफमहोदरादयः । वातो दोषभूतोऽन्यसाधारणः । ग्रहाणामृतुसम्बन्धः 'शिशिरादयः शनिशुक्रकुजेन्दुबुधगुरुषु' इति 'ग्रीष्मोर्केऽलभे' इति च वराहमिहिरवचनाभ्यामवगन्तव्यः ॥ १४ ॥

**रोगदायिष्विति** ॥ धातवः 'अस्थि रक्तं च' इत्यादिश्लोकेन दर्शितचराः । वक्ष्यमाणश्लोको ग्रन्थान्तरस्थः ॥ १५ ॥

दुस्थितास्थ्यादिधातुस्थो रोगिणां रोग ईर्यताम् ।
रोगप्रश्नेथवा रोगदाश्रितांशपधातुगः ॥ इति ॥ १६ ॥
सन्ति प्रकारभेदाश्च रोगभेदनिरूपणे ।
ते चाप्यत्र विलिख्यन्ते यथा शास्त्रान्तरोदिताः ॥ १७ ॥
रोगास्तु द्विविधा ज्ञेया निजागन्तुविभेदतः ।
निजाश्चागन्तुकाश्चापि प्रत्येकं द्विविधाः पुनः ॥ १८ ॥
निजा शरीरचित्तोत्था दृष्टादृष्टनिमित्तजाः ।
तथैवागन्तुकाश्चैवं व्याधयः स्युश्चतुर्विधाः ॥ १९ ॥
वातपित्तकफोद्भूताः पृथक्संसर्गजास्तथा ।
सन्निपातभवाश्चैते शारीराः कीर्तिता गदाः ॥ २० ॥
अष्टमेन तदीशेन तद्द्रष्ट्रा तद्गतेन वा ।
विज्ञातव्याः स्युरेतेषां वीर्यतस्तत्कृता गदाः ॥ २१ ॥
क्रोधसाध्वसशोकादिवेगजातास्तु मानसाः ।
ज्ञेया रन्ध्रमनोनाथमिथोयोगे क्षणादिभिः ॥ २२ ॥

---

**दुस्थितेति** ॥ रोगदो दुस्थितः । अंशो नवांशकः ॥ १६ ॥

**सन्तीति** ॥ अनन्तरश्लोकसप्तकं शास्त्रान्तरस्थम् ॥ १७ ॥

**रोगा इति** तथैव आगन्तुकाः दृष्टादृष्टनिमित्तजाः इति योजना । एवं च १. शरीरोत्थो निजः । २. चित्तोत्थो निजः । ३. दृष्टनिमित्तज आगन्तुः । ४. अदृष्टनिमित्तज आगन्तुः । इति रोगाणां चातुर्विध्यमिति सारः ॥ १८, १९ ॥

**वातेति** ॥ प्रदर्शितेषु चतुर्षु भेदेषु प्रथमोनेन विभज्य विव्रियते । संसर्गो दोषद्वयसंघातः । स च त्रिविधः १. वातपित्ते । २. वातकफौ । ३ पित्तकफौ इति । ततश्च सप्तविधा निष्पद्यन्ते शारीरा इति बोध्यम् ॥ २० ॥

**अष्टमेनेति** ॥ एतेषां चतुर्णाम् । तत्कृताः शरीरोत्था निजाः ॥ २१ ॥

**क्रोधेति** ॥ मानसोत्थनिजरोगा अनेन श्लोकेन निरूपिताः । आदिशब्देनाष्टमाधिपपञ्चमाधिपयोः परस्परकेन्द्रस्थित्यादिसम्बन्धो विवक्ष्यते ॥ २२ ॥

शापाभिचारघातादिजाता दृष्टनिमित्तजाः ।
ज्ञेयाः षष्ठतदीशाभ्यां तद्द्रष्ट्रा तद्गतेन वा ॥ २३ ॥
रन्ध्रेशषष्ठसम्बन्धे शापाद्याः प्रबलाश्च ते ।
अदृष्टहेतुजा ज्ञेया बाधकग्रहसम्भवाः ॥ इति ॥ २४ ॥
दृष्टं वा यच्छ्रुतं द्रव्यं प्रश्नकाले यदृच्छया ।
तद्वशाच्च रुजां भेदा ज्ञेया ग्रन्थान्तरे तथा ॥ २५ ॥
यस्य रोगस्य यद्द्रव्यमपथ्यं तस्य वीक्षणे ।
श्रवणे वास्य विज्ञेयः स रोगो रोगचिन्तने ॥ इति ॥ २६ ॥

अत्राष्टाङ्गहृदयम् ।

रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ।
तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ॥ २७ ॥
कषायतिक्तमधुराः पित्तं पुष्णन्ति चेतरे ।
वातः पित्तं कफश्चेति त्रयो दोषाः समासतः ॥ इति ॥ २८ ॥

---

**शापेति** ॥ शापादिजन्या दृष्टजन्यागन्तवः । ते च षष्ठतदीशादिभिश्चतुर्भिर्ज्ञेयाः । अदृष्टं प्राग्जन्मकृतकर्मपरिपाकः । तज्जन्यागन्तवो बाधकग्रहैर्ज्ञेयाः ॥ २३ २४ ॥

**दृष्टमिति** ॥ तथा कथितमित्यध्याहार्यम् । यदृच्छया आकस्मिकत्वेन ॥ २५ ॥

**यस्येति** ॥ पथ्यापथ्यविज्ञानमायुर्वेदाधीनम् । अनुपदमेव सङ्ग्रहेण तद्बोधनाय क्रियते वचनमष्टाङ्गहृदयात् ॥ २६ ॥

**अत्रेति** ॥ वक्ष्यमाणश्लोकद्वितयमष्टाङ्गहृदयस्थम् ॥

**रसा इति** ॥ स्वाद्वादयः प्रसिद्धाः । तत्राद्यास्त्रयः स्वाद्वम्ललवणाः । तिक्तादयस्त्रयः कफं घ्नन्ति । कषायतिक्तमधुरास्त्रयः पित्तं घ्नन्ति । इतरे प्रत्येकं त्रयः मारुतादीन् पुष्णन्ति च । एवं च तिक्तोषणकषायका वातरोगस्यापथ्यमित्यादि सिध्यति । समासत इत्यनेन व्यासे एत एव दोषा बहुविधा भवेयुरित्यवगन्तव्यम् ॥ २८ ॥

यस्य ग्रहस्य यो दोषः पित्तादिष्विह कीर्तितः ।
तेन रोगे तु वक्तव्ये वाच्यस्तद्दोषजो गदः ॥ २९ ॥
पापालोकितयोराद्यैर्योगैर्होरादिषूदितैः ।
अपि ज्ञेया रुजां भेदाः प्राग्जन्मदुरितोद्भवाः ॥ ३० ॥

अथोन्मादलक्षणमुच्यते ।

लग्नस्थे धिषणे दिवाकरसुतो
भौमोथवा द्यूनगो
मन्दे लग्नगते मदात्मजतपः-
संस्थो महीनन्दनः ।
भूतौ मूढशशीन्दुजौ कृशशशी
मन्दश्च रिष्फस्थितौ
पापोपेतकृशामृतांशुरुदया-
स्स्वान्तधर्मोपगः ॥ ३१ ॥

अस्ते पापयुतो मान्दिर्वित्त्रिषष्ठाष्टमान्त्यगः ।
उन्मादद्दायिनो योगा एवमष्टौ समीरिताः । इति ॥ ३२ ॥

---

**यस्येति** ॥ सूर्यो रोगकर्ता चेत् पित्तजन्यो रोगः । चन्द्रश्चेद्वातकफजो व्याधिरित्याद्यवगन्तव्यमिति भावः ॥ २९ ॥

**पापेति** ॥ होरात्र वराहमिहिरहोरा । तदादिप्रतिपादितलक्षणैः अदृष्टागन्तुजन्यरोगो निर्णेय इति यावत् ॥ ३० ॥

**अथेति** ॥ सामान्येन रोगनिरूपणानन्तरं रोगविशेषनिरूपणे कर्तव्ये प्रथममुन्मादलक्षण प्रदर्श्यत इति भावः ॥

**लग्नस्थ इति** ॥ मूढशशीन्दुजाविति द्वन्द्वोत्तरपदकर्मधारयः । न तु कर्मधारयपूर्वपदद्वन्द्वः । स्वान्तं पञ्चमभावः । न तु स्वं च अन्तश्चेति विगृह्य धनद्वादशभावौ कल्पनीयौ । अन्तशब्दस्य द्वादशवाचित्वे मानाभावात् । न च स्वान्त्येति पाठकल्पनं युज्यते चिरन्तनबहुकोशविरोधात् । कृशशशी मन्दश्च रिष्फस्थिताविति योगस्य वैयर्थ्यापत्तेश्च । वित् त्रिषष्ठाष्टमान्त्यग इत्यत्रापि पापयुत इत्यनुवर्त्य योजनीयम् । अन्यथा भावफलप्रकरण एव तद्वक्तव्यम् । वित् बुधः ॥ ३१, ३२ ॥

कारणमुन्मादानामुन्मत्तानां तथैव चेष्टाद्यम् ।
कथ्यत इह तद्भेदास्तत् खलु शास्त्रान्तरेषु निर्दिष्टम् ॥ ३३ ॥
हर्षेच्छाभयशोकादेर्विरुद्धाशुचिभोजनात् ।
गुरुदेवादिकोपाच्च पञ्चोन्मादा भवन्त्यथ ॥ ३४ ॥
त्रिदोषजाः सान्निपाता आगन्तव इति स्मृताः ।
हसनास्फोटनाक्रन्दगीतनर्तनरोदनम् ॥ ३५ ॥
अस्थानमङ्गविक्षेपस्ताम्रा मृदुकृशा तनुः ।
जीर्णे बलं च वाग्बह्वी वातोन्मादस्य लक्षणम् ॥ ३६ ॥
संरम्भामर्षवैदग्ध्यमभिद्रवणतर्जनम् ।
छायाशीतान्नतोयेच्छा रोषः पीतोष्णदेहता ॥ ३७ ॥
नारीविविक्तप्रियता निद्रारोचौ मनाग्वचः ।
लाला छर्दिर्बलं भुक्तौ नखादिषु च शुक्लता ॥ ३८ ॥
एताः पित्तकफोन्मादचेष्टाः श्लोकोदिताः क्रमात् ।
संमिश्रलक्षणो वर्ज्य उन्मादः सान्निपातिकः ॥ ३९ ॥
आगन्तवो ग्रहा ज्ञेयास्ते तु देवासुरादयः ।
अमर्त्या बलवाक्ज्ञानविक्रमादिसमन्विताः ॥ ४० ॥
वातोन्मादे स्नेहपानं पित्तोन्मादे विरेचनम् ।
श्लैष्मिके नस्यवमनमागन्तुष्वखिलाः क्रियाः ॥ ४१ ॥
सर्वे नश्यन्ति चोन्मादा जपहोमादिकर्मतः ॥ इति ॥ ४२ ॥

---

**कारणमिति** ॥ निर्दिष्टमिति नपुंसकैकशेषः । एकवद्भावश्च । तदित्यप्येवम् । तत्तु कथ्यत इत्यस्य कर्म ॥ ३३ ॥

**हर्षेच्छेति** ॥ पञ्च वातजः पित्तजः कफजः सान्निपातिकः आगन्तुरिति पञ्चविधः । हसनेति सार्धश्लोको वातोन्मादलक्षणम् । संरम्भेति श्लोकः पित्तोन्मादस्य । नारीति कफोन्मादस्य । आगन्तवो देवासुरनागादिग्रहाः । तेषां नामानि लक्षणानि च पञ्चदशाध्याये विस्तरेण वक्ष्यन्ते । तत्र देवग्रहस्य लक्षणं बलवाक्ज्ञानेति । वातोन्माद इत्यादिना पञ्च-

संप्रदायविशेषोस्ति पूर्वाचार्यैरुदाहृतः ।
उन्मादकारणादीनां कथने स च लिख्यते ॥ ४३ ॥

विषमाशुचिभोजनोपवासै-
भयवैराग्यमुधाक्रुधाभिचारैः ।
गुरुपावकदेवतापवादै-
स्त्रिविधोन्माद उदाहृतस्त्रिदोषैः ॥ ४४ ॥

दशेति हेतवो भ्रान्तौ दशहेतुभवा अपि ।
त्रिदोषजाः स्युरुन्मादाः पित्तजे बन्धनं भवेत् ॥ ४५ ॥
चन्द्रशुक्राष्टमाधीशा गोचरेतरगा यदि ।
विषमाष्ट्युपवासोत्थ उन्माद इति निर्दिशेत् ॥ ४६ ॥
केतुमान्द्यहियुक्तेषु चैतेष्वशुचिभुक्तिजः ।
सपापे पञ्चमे भीतिवैराग्योत्थः स भूमिजे ॥ ४७ ॥

विधानां प्रातिस्विकचिकित्सा उक्ताः । अखिलाः क्रियाः स्नेहपानादिकाः सर्वाः । सर्व इति सर्वोन्मादसाधारणी जपहोमादिक्रियेति भावः । इतिना शास्त्रान्तरपरिसमाप्तिर-भिधीयते ॥ ३४—४२ ॥

**संप्रदायेति** ॥ स सम्प्रदायविशेषः। लिख्यते अनुपदमेव चतुर्भिः श्लोकैः ॥४३॥

**विषमाशनेति** ॥ १. विषमाशनं "अकाले बहुवाल्पं वा भुक्तं हि विषमाशनं" इत्युक्तम् । २. अशुचिभोजनं भोक्तुर्भोजनकाले अशुचित्वं अन्नस्याशुचित्वं च । ३. उ-पवासः । ४. भयम् । ५. वैराग्यं = इच्छाभङ्गजनितविषयवैमुख्यम् । ६. मुधाक्रुधा = अकारणकोपः । ७. आभिचारः शत्रुकृतः । ८. गुर्वपवादः = गुरुनिन्दा । ९. पावकापवादः होमाद्यकरणमप्यत्रान्तर्भवति । १०. देवनिन्दा इति दश । एते दशहेतुजन्या अपि वातोन्मादादिषु त्रिष्वन्तर्भवेयुः । तत्र पित्तोन्मादे संरम्भामर्षादिलक्षणे बन्धनमेव कार्यम् ॥ ४४, ४५ ॥

**चन्द्रेति** ॥ गोचरेतरगाः = अनिष्टस्थानस्थाः । विषमाष्टिः = विषमाशनम् ॥४६॥

**केत्विति** ॥ एतेषु चन्द्रशुक्राष्टमाधीशेषु । सभूमिजे पञ्चमे क्रोधजः । एषु दश-हेतुजन्येषून्मादेषु । कल्याणपञ्चगव्याज्यसेवादि = कल्याणकघृतपञ्चगव्यघृतसेवनादिकम् ॥

क्रोधजोथाभिचारोत्थः षष्ठगेष्वशुभेषु सः ।
गुर्वादिशापसम्भूतः पापे नवमसंस्थिते ॥ ४८ ॥
कल्याणपञ्चगव्याज्यसेवाद्येषु विधीयताम् ॥ इति ॥ ४९ ॥

अथापस्मारलक्षणमुच्यते ।

मन्दे रन्ध्रगतेह्नौ च त्रिकोणे बलिनो शुभाः ।
योगोपस्मारदो भानुर्भौमश्च गददौ यदि ॥ ५० ॥
भिन्नो द्वादशभिर्भेदैरपस्मारः स्वरूपतः ।
स च तस्य च भेदास्ते निगद्यन्ते स्वरूपतः ॥ ५१ ॥

विस्रस्ताङ्गः पतति सहसा भूतले नष्टसंज्ञः
फेनोद्गारी रसति परुषं सन्नकायश्चिराय ।
व्यावृत्ताक्षो दशति दशनं पीतवर्णः प्रमादी
तोयासक्तो विकृतवदनः स्यादपस्मारः एषः ॥५२॥

**अथेति** ॥ मानसत्वसाम्यादुन्मादानन्तरमपस्मारलक्षणनिरूपणमिति तात्पर्यम् ॥

**मन्द इति** ॥ गददौ = अनिष्टस्थानगतौ । अष्टमाद्यनिष्टस्थानगो भानुरेक एवापस्मारकरः । एवमेव भौमोपि । पूर्वार्धे एको योगः । एवमपस्मारयोगात्रितयम् ॥ ५० ॥

**भिन्न इति** ॥ वस्तुतोपस्मार एक एव । तथापि स्वरूपभेदशालिन्यस्तस्य दूत्यो द्वादश भवन्ति । अत उपाधिभेदादपस्मारस्यैव कल्प्यन्ते द्वादश भेदाः । अतोपस्मारस्य सामान्यतः स्वरूपं द्वादशानां दूतीनां स्वरूपाण्यपि कथ्यन्त इति भावः ॥ ५१ ॥

**विस्रस्ताङ्ग इति** ॥ सहसा अकस्मादेव । विस्रस्ताङ्गः विश्लथावयवः स्थातुमशक्तिमानिति यावत् । रसति शब्दं करोति । व्यावृत्ते मण्डलाकारेण सञ्चार्यमाणे अक्षिणी यस्य । तोयासक्तः पिपासाव्याकुलः । विकृतवदनः विविधान्मुखविकारान् प्रदर्शयन् । अयमपस्मारो देवताविशजन्यः । न केवलं ज्वरादिवद्रोगः इति केचन मन्यन्ते । अत एवास्यापि जपहोमादय एव प्रधानप्रतिक्रियाः । अन्ये त्वत्रापि वातादीनामेव कारणत्वं मन्यमानाः वातजत्वादिभेदानस्यापि कल्पयन्ति । आर्यास्तु स्थावराणामपि जङ्गमदेवतां कल्पयन्ति । अत एव सायणोपि ज्वरादिरोगाणामपि प्रत्येकं देवतास्तत्स्वरूपभेदांश्च स्वग्रन्थे प्रत्यपादयत् । हिमवतः कन्यका पार्वतीति प्रसिद्ध खल्विदम् । वृक्षाणां पुत्रीं प्रचेतस उदवहन्निति पौराणिकाः । भूमिर्गोरूपधारिणी ब्रह्मसभामवाप्य स्वीयं विषादं व्यजिज्ञपदित्याद्यप्येवंमेव संगच्छते ॥ ५२ ॥

श्वसना मलिना निद्रा जृंभिकानशना तथा ।
त्रासिनी मोहिनी चाथ रोदनी क्रोधनी तथा ॥ ५३ ॥
तापनी शोषणी चैव ध्वंसिनी चेति कीर्तिताः ।
दूत्यो द्वादश विख्याता अपस्मारस्य सुप्रियाः ॥ ५४ ॥
एताः समस्ता व्यस्ता वा संश्रयन्ति नरं किल ।
स्वाख्यानार्थवतीं चेष्टां तत्राभिव्यञ्जयन्ति च ॥ ५५ ॥
शमायादावपस्मारे कूश्माण्डीबलिमाहरेत् ।
सुदर्शनेन जुहुयात्तिलैः क्रोधाग्निनाथवा ॥ ५६ ॥
प्रत्यक्षरसहस्रेण घोरापस्मारशान्तये ॥ इति ॥ ५७ ॥
दृष्टा ग्रन्थान्तरे प्रश्नविषयेपस्मृतौ हिताः ।
लिखितास्त्वत्र लिख्यन्ते चिकित्सा अपि काश्चन ॥ ५८ ॥
सिन्धूत्थवृश्चिकालीकुष्ठकणाभार्ङ्गिभिः कृतं चूर्णम् ।
नसि योजयेत्तु शस्तं तीव्रापस्मारशान्तये पुंसाम् ॥ ५९ ॥

**श्वसनेति** ॥ द्वादशापस्मारदूत्यः श्वसनादयो नामतोत्र प्रदर्शिताः । स्वस्वनामानुरूपाश्चेष्टा एताः प्रदर्शयेयुः । श्वसना श्वासरोधमुत्पादयेत् । मलिना देहं मलिनीकुर्यात् । निद्रा निद्राधिक्यं कुर्यात् । जृंभिका जृम्भां कारयेत् । अनशना विहन्यादशनम् । एवमुत्तरत्राप्यूह्यमेव । तत्रापस्मारे ॥ ५५ ॥

**शमायेति** ॥ कूश्माण्डीबलिर्मन्त्रशास्त्रविहितः । सुदर्शनक्रोधाग्नी मन्त्रविशेषौ । तिला होमद्रव्यम् । प्रत्यक्षरसहस्रेण तत्तन्मन्त्राक्षरसंख्यया सम्मितसहस्रावृत्त्या । घोरेति अनेन प्रयोगेण घोरापस्मारा अपि शाम्यन्तीति सिध्यति ॥ ५७ ॥

**दृष्टा इति** ॥ काश्चन दृष्टा एव साकल्येनात्र न लिख्यन्ते किन्तु सारभूताः कतिचिदेवेति भावः ॥ ५८ ॥

**सिन्धूत्थेति** ॥ नसि नासिकायां योजयेत् चूर्णेनानेन नस्यं कुर्यादित्यर्थः । सिन्धूत्थं = ഇന്തുപ്പ്, वृश्चिकाळी = തേൾക്കടക്കാൽ, कुष्ठं = കൊട്ടം, कणा = തിപ്പലി, भार्ङ्गी = ചെറുതേക്ക്, "ध्मानं विरेचनश्चूर्णो युञ्ज्यात्तं मुखवायुना । षडङ्गुलाद्विमुखया नाल्या भेषजगर्भया" । इत्यादि वैद्यशास्त्रादस्यविधिरवगन्तव्यः ॥ ५९ ॥

ब्राह्मीरसे घृतवचामयशंखपुष्प-
धात्रीसमुद्भवरसे मधुकान्वितं च ।
सिद्धार्थहिंगुसहिते वृषवस्तमूत्रे
पानादिना हरति सर्पिरपस्मृतिं तत् ॥ ६० ॥

त्रिवृद्विळत्रिफलाग्निविश्व-
व्याघातसिन्धूत्थकणैर्यथावत् ।
ब्राह्मीरसे सर्पिरिदं प्रशस्तं
पुंसामपस्मारविनाशनाय ॥ ६१ ॥

मञ्जिष्ठाग्निविळङ्गकुष्ठरनीमुस्तात्रिवृच्छारिबा-
दार्वीतिक्तकशंखपुष्पसहितैरेलावचायष्टिभिः ।
पाठामागधिसंयुतं घृतमिदं गव्येषु सिद्धं नृणां
तीव्रापस्मृतिदोषविस्मृतिहरं कुष्ठापहं कान्तिदम् ॥इति ॥६२॥

पापग्रहेक्षितं लग्नं रन्ध्रं रविजवीक्षितम् ।
रन्ध्रेशो विबलो योग एष भक्तविरोधकृत् ॥ ६३ ॥

**ब्राह्मीरस इति**॥ ब्राह्मयाः स्वरसे वचादीनां निष्क्राथरसे वृषवस्तमूत्रे च मधुकसिद्धार्थहिङ्गुभिः कल्कैः श्रुतं घृतं पाननस्यादिभिरपस्मारं नाशयेत् ॥ ६० ॥

**त्रिवृदिति** ॥ त्रिवृदादिभिः कल्कैर्ब्राह्मीरसे पक्कं घृतमपि पानादिना अपस्मारहरम् ॥ ६१ ॥

**मञ्जिष्ठेति** ॥ गव्येषु पयोदधिगोमूत्रगोमयस्वरसेषु चतुर्षु । अत एवेदं पञ्चगव्यमित्युच्यते । तेषां मानं तु "गोमयाद्द्विगुणं मूत्रं मूत्रादष्टगुणं पयः । दधि पञ्चगुणं प्रोक्तं सर्पिश्चापि चतुर्गुणम्" ॥ इति ग्रन्थान्तरवचनानुसारेण निर्णेयम् । कल्कस्वरसादीनां मानं श्रपणे पाकविधिरित्यादिकं वैद्यशास्त्रादवगन्तव्यम् । विस्तरभिया नात्र लिख्यते ॥ इतिशब्देनापस्मारचिकित्सकथनपरिसमाप्तिर्द्योत्यते ॥ ६२ ॥

**पापग्रहेति** ॥ भक्तविरोधो रोगविशेषः ॥ ६३ ॥

लग्ने पापेक्षिते लग्ननाथे नीचारिराशिगे ।
शुक्रयुक्तेक्षितं रन्ध्रमेषयोगः प्रमेहकृत् ॥ ६४ ॥

सिंहे कुक्ष्यक्षिजेत्याद्यैर्व्याधयो येत्र कीर्तिताः ।
आरूढविषये पूर्वं चिन्तयेदिह तानपि ॥ ६५ ॥

मूर्तिभेदा रुजां भेदाः प्रश्नानुष्ठानपद्धतौ ।
प्रोक्ता दुस्थविहङ्गानां लिख्यन्तेत्र च ते तथा ॥ ६६ ॥

पित्तोष्णज्वरतापदेहपतना-
पस्मारहृत्क्रोडज-
व्याधीन् वक्ति रविर्दृगार्त्यरिभयं
त्वग्दोषमस्थिस्रवम् ।
कुष्ठाग्न्यस्त्रविषार्त्तिदारतनय-
व्यापच्चतुष्पाद्भयं
चोरक्ष्मापतिधर्मदैवफणभृत्-
भूतेशभूताद्भयम् ॥ ६७ ॥

**लग्न इति** । भक्तविरोधप्रमेहयोः स्वरूपादिकं वैद्यशास्त्रादवगन्तव्यम् । प्रकृतानानुगुण्याद्विस्तरभयाच्च नात्र प्रदर्श्यन्ते ॥ ६४ ॥

**सिंह इति** । अत्रास्मिन्नेव ग्रन्थे । इह रोगभेदनिरूपणप्रघट्टके । तान् व्याधीनपि ॥ ६५ ॥

**मूर्तिभेदा इति** ॥ पित्तोष्णेत्यारभ्य चन्द्रोरिपीडां रिपावित्यन्तं प्रश्नानुष्ठानपद्धतिग्रन्थः । तत्र मूर्तिभेदा रोगभेदाश्च उक्ताः । ते ततो वेद्याः ॥ ६६ ॥

**पित्तेति** ॥ अत्रापस्मारधर्मदैवभूतेशभूतानि मूर्तिभेदाः । इतरे रोगभेदाः । तत्राप्यरिभयं मानसो रोगः । यद्वा आभिचारः । दारतनयव्यापदोप्युपद्रवा एव । इत्यादिविशेषोवगन्तव्यः ॥ ६७ ॥

निद्रालस्यकफातिसारपिटकाः
शीतज्वरं चन्द्रमाः
शृङ्ग्यब्जाहतिमग्निमान्द्यकृशता-
योषिद्व्यथाकामिलाः ।
चेतश्शान्तिमसृग्विकारमुदका-
द्भीतिं च बालग्रहात्
दुर्गाकिन्नरधर्मदैवफणभृ-
द्यक्षाच्च पीडां वदेत् ॥ ६८ ॥
तृष्णासृक्कोपपित्तज्वरमनलविषा-
स्त्रार्तिकुष्ठाक्षिरोगान्
गुल्मापस्मारमज्जाविहतिपरुषता-
पामिकादेहभङ्गान् ।
भूपारिस्तेनपीडासहजसुतसुहृ-
द्वैरयुद्धं विधत्ते
रक्षोगन्धर्वघोरग्रहभयमवनी-
सूनुरूर्ध्वाङ्गरोगम् ॥ ६९ ॥

भ्रान्तिं दुर्वचनं दृगामयगळघ्राणोत्थरोगान् ज्वरं
पित्तश्लेष्मसमीरजं विषमपि त्वग्दोषपाण्ड्वामयान् ।
दुस्स्वप्नं च विचर्चिकां निपतनं पारुष्यबन्धश्रमान्
गन्धर्वाक्षितिहर्म्यवासिमयुभिर्ज्ञो वक्ति पीडां खगैः ॥ ७० ॥

**निद्रालस्येति** ॥ अत्र बालग्रहादयो मूर्तिभेदाः । अतिसारादयो रोगभेदाः । अब्जा जलजन्तवः । शृङ्गिणो गजमहिषादयः तैराहतिमभिघातम् ॥ ६८ ॥

**तृष्णेति** ॥ असृक्कोपो रक्तकोपः । अस्त्रार्तिरायुधपीडा । मज्जाविहतिरित्यत्र मज्ञः आसमन्ताद्विहतिर्विनाश इत्याङ्प्रश्लेषो बोध्यः । परुषता देहपारुष्यम् । भूपारिस्तेनैः पीडा सहजसुतसुहृद्भिर्वैरं युद्धं चेति समाहारद्वन्द्वः । रक्षो ब्रह्मराक्षसः तदादयो मूर्तिभेदाः । ऊर्ध्वाङ्गरोगा जत्रूर्ध्वव्याधयः ॥ ६९ ॥

**भ्रान्तिमिति** ॥ पित्तश्लेष्मसमीरजं ज्वरं सन्निपातज्वरम् । निपतनं यत्रकुत्रचित् पातः । मयुभिः किन्नरैः । खगैः पीडां पक्षिपीडाम् ॥ ७० ॥

गुल्मान्तज्वरशोकमोहकफजश्रोत्रार्तिमेहामयान्
देवस्थाननिधिप्रपीडनमहीदेवेशशापोद्भवम् ।
रोगं किन्नरयक्षदेवफणभृद्विद्याधराद्युद्भवं
जीवः सूचयति स्वयं बुधगुरू कृष्णापचारोद्भवम् ॥ ७१ ॥

पाण्डुश्लेष्ममरुत्प्रकोपनयनव्यापत्तितन्द्रीश्रमान्
गुह्यास्यामयमूत्रकृच्छ्रमदनव्यापत्तिशुक्रस्रुतीः ।
वासस्त्रीकृषिदेहकान्तिविहतिं शोफामयं योगिनी-
यक्षीमातृगणाद्भयं प्रियसुहृद्भङ्गं सितः सूचयेत् ॥ ७२ ॥

वातश्लेष्मविकारपादविहतीरापत्तितन्द्रीश्रमान्
भ्रान्तिं कुक्षिरुगन्तरुष्णभृतकध्वंसं च पश्वाहतिम् ।
भार्यापुत्रविपत्तिमङ्गविहतिं हृत्तापमर्कात्मजो
वृक्षाश्मक्षतिमाह कश्मलगणैः पीडां पिशाचादिभिः ॥

स्वर्भानुस्तनुतापकुष्ठविषमव्याधीन् विषं कृत्रिमं
पादार्तिं च पिशाचपन्नगभयं भार्यातनूजापदम् ।
ब्रह्मक्षत्रविरोधशत्रुजभयं केतुस्तु संसूचयेत्
प्रेतोत्थं च गदं विषं च गुळिकः सर्पार्तिमाशौचकम् ॥

---

**गुल्मेति** देवस्थाननिधिप्रपीडनं देवालयवर्तिपुरातननिधिकोशाहरणजन्योपद्रवः । कृष्णापचारो विष्णुकोपः । सिंहावलोकनन्यायेनात्र पुनर्बुधग्रहणम् ॥ ७१ ॥

**पाण्डुश्लेष्मेति** नयनव्यापत्तिर्नेत्ररोगः । मदनव्यापत्तिः कामविकारजन्यानर्थः । वास आदीनां विहतिर्विनाशः । योगिन्यादिभ्यो भयम् ॥ ७२ ॥

**वातश्लेष्मेति** ॥ पादविहतिः पादरोगः पंगुता वा । भृतकध्वंसो भृत्यनाशः । पशूनां गोमहिषादीनामाहतिं नाशम् । अङ्गविहतिमङ्गवैकल्यम् । वृक्षाश्महेतुका क्षतिर्व्रणः । कश्मलगणैर्दुष्टग्रहैः ॥ ७३ ॥

**स्वर्भानुरिति** । कृत्रिमं विषं = गरसंज्ञम् । पिशाचपन्नगभयं पिशाचेभ्यः पन्नगेभ्यश्च भयम् । केतुस्त्वित्यादिना केतोर्विशेष उच्यते । राहूक्तं केतोरपि ग्राह्यम् । गुळिक-

बाधां वक्ति पिशाचजां दशमगो मन्दोथ सर्पेक्षितो
वीक्षाघ्राणभवं विषं च गुळिको देहाष्टमस्थानगः ।
पापाः षष्ठगतास्तथोदररुजं रन्ध्रास्तगारो ज्वरं
लग्नास्तोपगतोप्यजीर्णजरुजं चन्द्रोरिपीडां रिपौ ॥ इति॥

ग्रहाश्रितभभावान्यग्रहयोगेक्षणादिकम् ।
दौस्थ्याधिक्यं च सञ्चिन्त्य सर्वं वाच्यं यथोचितम् ॥७६॥

लाभतृतीयौ हित्वा परत्र पापा स्थिता भवन्ति यदि ।
रोगवतैव प्रष्ट्रा भाव्यं तत्प्रोक्तदोषतो नियतम् ॥ ७७ ॥

कादीति कन्दगित्याभ्यां प्रष्टुरङ्गानि चिन्तयेत् ।
पापदृष्टयुते गात्रे व्रणरोगादिकं वदेत् ॥ ७८ ॥

स्य राहुकेत्वोरुक्तादधिके सर्पार्त्याशौचके विषं च । तत्र विषशब्देन सर्पभिन्नानामळर्कादीनां विषं ग्राह्यम् । पन्नगभयस्योक्तचरत्वात् । सर्पार्तिः सर्पबाधा । अतो न पौनरुक्त्यशङ्कावकाशः ॥ ७४ ॥

**बाधामिति** ॥ सर्पेक्षितो गुळिको देहाष्टमस्थानगः वीक्षाघ्राणभवं विषं च वक्ति इत्यन्वयः । वीक्षाभवं विषदृष्टीनां केषाञ्चन दर्शने तद्दृष्टिगतं विषं तद्दृष्टेषु वस्तुषु मनुष्येषु च संक्रान्तं कुर्यादुपद्रवान् । उदररुजमुदरव्याधिम् । लग्नास्तोपगतोपि आरः अजीर्णजरुजं वक्ति । एवं च सप्तमे कुजो ज्वरमजीर्णजरोगं च वक्तीति सिद्धम् । रिपौ चन्द्रः अरिपीडामाभिचारम् ॥ ७५ ॥

**ग्रहाश्रितेति** ॥ ग्रहाणां राशिभेदं भावभेदं अन्यग्रहयोगदृष्ट्यादिकं दौस्थ्यस्य तारतम्यं चालोच्यैव सर्वं कथनीयम् ॥ ७६ ॥

**लाभतृतीयाविति** ॥ परत्रान्येषु दशसु भावेषु । तेषां पापानां प्रोक्तैर्दोषैर्हेतुभिः पृच्छकस्यावश्यं रोगो भवेत् । न तु तदानीं स्वस्थविषयः प्रश्नः स्यादिति निश्चितमेतत् ॥ ७७ ॥

**कादीतीति** ॥ 'कादिविलग्नविभक्तभगात्रः' 'कंदृक्श्रोत्रनसाकपोलहनवो वक्त्रं च' इति वराहमिहिरवचनाभ्याम् । तत्र यत्राङ्गे पापयोगदृष्टी स्यातां तत्राङ्गे व्रणो रोगो वा स्यात् ॥ ७८ ॥

चरोर्ध्ववक्त्रशीर्षोदयादीनां लग्नगत्वतः ।
कंकण्ठवस्तिपूर्वाङ्गग्रहणं न दृगाणतः ॥ ७९ ॥
राश्यंशयोश्चरादित्वभेदे तु चरादिभिः ।
तदभावे न च ज्ञाते चांश ऊर्ध्वाननादिभिः ॥ ८० ॥
अत्यन्तविबलेऽर्कोङ्गग्रहणं कोदयादिभिः ।
नीचांशस्त्रीतुलान्त्याद्यत्र्यंशेष्वर्कोऽतिदुर्बलः ॥ ८१ ॥
विलग्नादिषु काद्यङ्गविन्यासोथ निगद्यते ।
कृष्णीये तु यथा ग्राह्यः स एव प्रश्नकर्मणि ॥ ८२ ॥
होरोत्तमाङ्गसंस्था दक्षिणवामावनागतातीतौ ।
कर्णाक्षिनासिकापुटकपोलहनवोथ वक्त्रान्ताः ॥ ८३ ॥
ग्रीवांसभुजौ पार्श्वे पृष्ठे हृदयोदरे कटिश्चान्त्या ।
नाभिर्वस्तिगुदाण्डा मुष्का पूर्वादयो द्वौ द्वौ ॥ ८४ ॥

**चरेति** ॥ कंदृगित्यत्र द्रेक्काणभागैरेवाङ्गग्रहणं वराहमिहिरोक्तम् । तज्जातक एव । प्रश्ने तु लग्ने चरे ऊर्ध्वमुखे शीर्षोदये च सति कन्दृगित्यादि । स्थिरे तिर्यङ्मुखे उभयोदये च सति कण्ठांसकेत्यादि । उभये अधोमुखे पृष्ठोदये च सति वस्तिः शिश्नगुदे इत्यादि । इति विशेषः ॥ ७९ ॥

**राश्यंशयोरिति** ॥ राश्यंशयोश्चरस्थिरोभयत्वं यद्यभिन्नं तर्हि तेनैवाङ्गभेदः कल्प्यः, तयोस्तत्त्वे विभिन्ने अंशे अविदिते चोर्ध्वमुखाधोमुखतिर्यङ्मुखत्वैरेव ॥ ८० ॥

**अत्यन्तेति** ॥ यत्रकुत्रापि राशौ तुलांशके कन्यान्त्यद्रेक्काणे तुलाद्यद्रेक्काणे वा सूर्ये तिष्ठति शीर्षोदयादिनैवांगकल्पना कार्या ॥ ८१ ॥

**विलग्नादिष्विति** ॥ अथ विलग्नादिषु काद्यङ्गविन्यासः कृष्णीये यथा तथा विलिख्यते । प्रश्नकर्मणि स एव ग्राह्यः ॥ ८२ ॥

**होरेति** ॥ वक्त्रान्ता इत्यन्तेनोर्ध्वाङ्गे कटिश्चान्त्येत्यन्तेन मध्यमाङ्गे ऊर्वादय इत्यन्तेनाधोङ्गे च भावविन्यासः । तत्र लग्नस्य गन्तव्यभागो दक्षिणशिरोभागः । द्वितियभावो दक्षिणकर्णः । तृतीयो दक्षिणाक्षि । चतुर्थो दक्षिणनासिका । पञ्चमो दक्षिणकपोलम् । षष्ठो दक्षिणहनुः । सप्तमस्य गतभागो दक्षिणवक्त्रान्तर्भागः गन्तव्यभागो वामवक्त्रान्तर्भागः । अष्टमो वामहनुः । एवम् । लग्नस्य गतभागो वामः शिरोभागः । एवमेव मध्यमाङ्गे अधो-

कंद्दक्श्रोत्रेति होरायां वराहमिहिरोदितः ।
योऽङ्गेषु भावविन्यासो ग्राह्य एव स जातके ॥ ८५ ॥

रोगभेदानिति ज्ञात्वा चिकित्सामुचितां वदेत् ।
तीव्रे कर्मविपाकोक्तप्रायश्चित्तं च शान्तये ॥ ८६ ॥

एतद्रोगविशेषनिरूपणविषयम् ।

॥ इति प्रश्नमार्गे द्वादशाध्यायः ॥

ङ्गे च कल्प्यमेव । अयमेव कृष्णीयोक्तप्रकारः । अधोङ्गे १. नाभिः, २. बस्तिगुदाण्डाः, ३. मुष्कौ, ४. ऊरू, ५. जानुनी, ६. जंघे, ७. पादः आदिशब्देन जानुजंघापादा ग्राह्याः ॥ ८४ ॥

**कंद्दगिति** ॥ एवकारो भिन्नक्रमः । स जातके एव ग्राह्यः । इत्यन्वयः ॥ ८५ ॥

**रोगभेदानिति** ॥ शान्तये रोगशान्त्यर्थं उचितां चिकित्सां वदेत् । तीव्रे रोगे कर्मविपाकोक्तप्रायश्चित्तं च वदेत् ॥ ८६ ॥

**एतदिति** ॥ अत्र केषाञ्चन रोगाणां लक्षणानि चिकित्साश्च यद्यपि निरूपिता तथापि न तासां प्राधान्यम् । किन्तु प्रसक्तानुप्रसक्त्यायातत्वमेव । एवं चोपक्रमोपसंहार-योरैकरूप्यमेवेति नानुपपत्तिशङ्कावकाशः । उपक्रमे हि "निर्णीते सति जीवने" इत्यादिकश्लोके "भेदा रुजां कथ्यन्ते" इति खलु प्रत्यश्रावि । रोगभेदकथनस्यैवात्राध्याये प्राधान्यम् । अत एवोपसंहारेपि "एतद्रोगविशेषनिरूपणविषयम्" इत्येनोपसंह्रियते इति सर्वं सुस्थमित्यवग-न्तव्यमित्यलं पल्लवितेन ॥ ८७ ॥

॥ इति प्रश्नमार्गे द्वादशाध्यायः ॥

# अथ त्रयोदशाध्यायप्रारम्भः ॥

अथ रोगारम्भावसानकालादि निरूप्यते ।

लग्नोदितोडुतश्चन्द्रो यावत्युडुनि संस्थितः ।
तस्मात्तावति नक्षत्रे रोगारम्भमुदीरयेत् ॥ १ ॥
यद्वा मान्दिनवांशस्य द्वादशांशर्क्षगे विधौ ।
मान्दीन्दुयोगभे त्रिषु ग्राह्यं प्रष्टुरनिष्टभम् ॥ २ ॥
दूतवाक्याद्यवर्णोक्तराशिगेत्यन्तदोषदे ।
चन्द्रार्कगुरुमन्देषु रोगारम्भमुदीरयेत् ॥ ३ ॥
यदाशाभिमुखो रोगी दृश्यते दूत एव वा ।
रोगारम्भणमेतस्यां दिशि प्रष्टुरुदीर्यताम् ॥ ४ ॥
ऐन्द्रीतो दिशि यात्रत्यां दूतः पृच्छति संस्थितः ।
यामे तत्समसंख्ये स्यात् प्रष्टुर्व्याधिसमुद्भवः ॥ ५ ॥

अथेति ॥ रोगभेदनिरूपणानन्तरं प्रकृतत्वात्तदारम्भतदवसानकालादिनिरूपणमुपक्रम्यत इत्यर्थः ॥

लग्नेति ॥ लग्नोदितोडुतः प्रश्नकालोदयगतनक्षत्रात् । चन्द्रः प्रश्नकालचन्द्रः । तस्मात् प्रश्नकालनक्षत्रात् ॥ १ ॥

यद्वेति ॥ मान्दिस्फुटं नवभिः संगुणितं पुनर्द्वादशभिरपि गुणितं नवांशद्वादशांशस्फुटं भवति । तन्नक्षत्रे मान्दीन्दुस्फुटयोगस्फुटनक्षत्रे । पूर्वश्लोकोक्ते एतच्छ्लोकोक्तयोश्च त्रिषु नक्षत्रेषु प्रष्टुरनिष्टभं विपत्प्रत्यरनक्षत्रादिकं ग्राह्यम् । तत्र रोगारम्भः ॥ २ ॥

दूतेति ॥ चन्द्रार्कगुरुमन्देषु मध्ये अत्यन्तदोषदे ग्रहे दूतवाक्याद्यवर्णोक्तराशिगे सतीति सम्बन्धः । अत्यन्तदोषदत्वमनिष्टस्थानस्थितिदौर्बल्यादिना ॥ ३ ॥

यदाशेति ॥ दृश्यते पृच्छाकाले प्रथमम् ॥ रोगारम्भादिकनिरूपणमपि कालमध्ये प्रकृतोपयोगित्वादुक्तम् । अत एव प्रतिज्ञायामादिशब्दग्रहः ॥ ४ ॥

ऐन्द्रीत इति ॥ तत्समसंख्ये सूर्योदयादारभ्य सार्द्धसप्तनाड्यात्मको यामः ऐन्द्र्यां प्रश्नश्चेत् प्रथमयामे । एवमैशान्यां प्रश्नश्चेदष्टमयामे ॥ ५ ॥

यावन्तो व्याधिते सन्ति निमग्ननयना जनाः ।
व्याध्यारम्भेन्तिकस्थाः स्युस्तावन्तः सदृशाश्च तैः ॥ ६ ॥

रोगेशाश्रितराशौ तद्भुक्तभोक्तव्यभागतः ।
रोगस्य गतगन्तव्यकालाधिक्याल्पते वदेत् ॥ ७ ॥

षष्ठाधिपे दिवावीर्ये यद्वा षष्ठगते ग्रहे ।
दिवारम्भश्च वृद्धिश्च रोगाणामन्यथा निशि ॥ ८ ॥

अत्र कण्ठाभरणम् ।

आरूढाद्भवने तु यावति गदस्थानाधिपः संस्थितो
मासे तावति वाह्निभास्वदुडुचारे वाथ रुग्जायते ।
यावत् प्रश्नभतोरिपात्तमुडु तावन्तं गदारम्भणे
ब्रूयात् कालमनेन भुक्तनवभागघ्नं गदेशस्य वा ॥ इति ॥

**यावन्त इति** ॥ व्याधिते दूतस्यापीदमुपलक्षणम् । यावन्तः प्रश्नकाले । सदृशाः वयोजात्याद्यवस्थाभिस्तुल्याः ॥ ६ ॥

**रोगेशेति** ॥ रोगेशः षष्ठाधिपोष्टमाधिपश्च । भागतः तदाधिक्याल्पत्वाभ्याम् । भुक्तभागाधिकश्चेद्रोगस्य गतभागोधिकः । इत्यादि ॥ ७ ॥

**षष्ठाधिप इति** ॥ चन्द्रकुजमन्दा रात्रिबलाः सूर्यगुरुशुक्रा दिवाबलाः । बुधः सर्वदा बलयुक्तः । "निशि शशिकुजसौराः सर्वदा ज्ञोह्नि चान्ये" इति वराहमिहिरवचनात् । अन्यथा निशाबले सति निशि रोगारम्भः । बुधे सतीदन्तया रोगारम्भसमयो न विदित इत्यादेष्टव्यम् ॥ ८ ॥

**अत्रेति** ॥ वक्ष्यमाणश्लोकः कण्ठाभरणस्थः ॥

**आरूढादिति** ॥ गदस्थानमत्र षष्ठम् । अरिपेत्युत्तरार्द्धे विशिष्योपादानात् । भास्वदुडुचारः प्रायेण त्रयोद[illegible]दिनात्मकः जायते कालो न विवक्षितः जात इत्यर्थः । अथ शब्दयोगादद्भूते लाङ्गि[illegible] वा । प्रश्नभतः प्रश्नकालनक्षत्रात् । आरिपात्तं षष्ठेशाश्रितम् । कालं दिनमासभास्वदुडुचाररूपम् । गदेशस्य कालं अयनक्षणेत्याद्युक्तम् । अनेन गदेशेन भुक्तनवभागघ्नं वा ब्रूयात् ॥ ९ ॥

षष्ठेशाश्रितराशिस्थे चन्द्रे वा रोगसम्भवः ।
शमनं च रुजां वाच्यं सुखेशाश्रितराशिगे ॥ १० ॥
लग्नस्याधिपतेश्च तस्य शशिनो वा पापयोगेक्षणं
यत्राभूत्समये तदामयसमारम्भः समादिश्यताम् ।
सौम्यानां युतिरीक्षणं च भविता तेषां त्रयाणां यदा
रोगाणां शमनं तदाथ शमनारम्भस्तदेकान्वये ॥ ११ ॥
लग्नोदितनवांशस्य द्वादशांशगराशिगे ।
मान्दिराशिमतिक्रान्ते वेन्दौ स्याच्छमनं रुजाम् ॥ १२
अष्टमेन्दुं पुरोधाय यदि चेद्व्याधिसम्भवः ।
अतियातेऽष्टमं राशिं शशाङ्के शमनं रुजाम् ॥ १३ ॥

अत्रानुष्ठानपद्धतिः ।

दुस्थखेटवशतो रुजागमं
सुस्थखेटवशतः शमं वदेत् ।
मन्त्रनृत्तबलिपूजनौषधै-
र्देवताभजनधातुपोषणैः ॥ १४ ॥

अस्यार्थः ।

**षष्ठेशेति** ॥ षष्ठेशाश्रितराशिस्थे गतकाले तत्रस्थे । सुखेशाश्रितराशिगे भविष्यत्काले तत्रस्थे ॥ १० ॥

**लग्नस्येति** ॥ १. लग्नं २. लग्नाधिपः ३. चन्द्रः एषां त्रयाणां पापयोगदृष्टी भूतकाले यदा सम्भूते तदा रोगारम्भः । एष्वेकस्य यदा भविता शुभयोगदृष्टिसम्भवस्तदा शमनारम्भः । त्रयाणां शुभयोगदृष्टिसम्भवे समग्रस्वास्थ्यलाभ इति तात्पर्यम् ॥ ११ ॥

**लग्नेति** ॥ नवांशद्वादशांशकानयनं दर्शितं प्राक् । मान्दिराशिं प्रश्नकालगुळिकाश्रितराशिम् ॥ १२ ॥

**अष्टमेन्दुमिति** ॥ पुरोधाय पुरस्कृत्य । जन्मनक्षत्रात् परमष्टमराशौ चन्द्राश्रयात् पूर्वमिति यावत् ॥ १३ ॥

**अत्रेति** ॥ अनन्तरश्लोकद्वयमनुष्ठानपद्धतिस्थम् ॥

**अस्येति** ॥ एतच्छ्लोकार्थ एवानन्तरश्लोकेन विशदीक्रियते ॥

दुस्थानामतिदोषदाश्रितगृहं प्राप्तेषु चन्द्रादिषु
व्याध्यारम्भ इहातिदुस्थखगसम्बन्धीशकोपोद्भवः ।
सुस्थानामपि तद्वदिष्टतमखेटाधिष्ठितर्क्षाश्रिते-
ष्विन्द्वाद्येषु तदीयदेवभजनाच्छान्तिश्च वाच्या रुजाम् ॥ इति ॥

रोगारम्भताराादिवशाच्च शमनादिकाल उच्यते ।

वैश्वे सौम्ये च मासादुपरि तु वसुभ-
ब्रध्नशूर्पेषु पक्षा-
द्रोगी चित्राप्रचेतोयमहरिषु सुखं
विन्दते रुद्रसंख्यात् ।
विंशादह्नो मघायां गुरुभगसुरसू-
बुध्निवेधस्सु भूभृत्-
संख्यान्मूलाश्वियुक्ते हुतभुजि नवमा-
न्मित्रपूष्णोस्तु कृच्छ्रात् ॥ १६ ॥

---

**दुस्थानामिति** । दुस्थानां मध्ये योतिदोषदः तदाश्रितं राशिम् । चन्द्रादिषु चन्द्रसूर्यजीवेषु । अतिदुस्थो यः खगः ग्रहः तत्सम्बन्धी य ईशः सूर्यस्य शम्भुश्चन्द्रस्य दुर्गेत्यादिकः । तत्कोपाद्रुदारम्भः । तद्वत् सुस्थनां मध्ये य इष्टतमः अतिसुस्थः तदाश्रितराशिस्थेषु चन्द्रादिषु । भजनं मन्त्रनृत्तादिकरणम् । तत्र मन्त्रो मन्त्रजपः नृत्तं देवतायाः स्वरूपप्रदर्शनक्रिया । बलिर्बलिदानम् । औषधं गुळिकादि । देवताभजनं सामान्येन त्रिकालपूजारूपदुर्गासेवा । धातुपोषणं देहपोषणकरी चिकित्सा । सूर्यादीनां क्रमेण मन्त्रादयः सप्त प्रतिक्रियाः । इतिरनुष्ठानपद्धतिपरिसमाप्तिप्रदर्शकः ॥ १५ ॥

**रोगारम्भेति** ॥ तारादीत्यादिशब्देन तिथ्यादिग्रहः । शमनादीत्यादिशब्देन मरणग्रहः ॥

**वैश्व इति** ॥ उपरीति सर्वत्र योज्यम् । पक्षः पञ्चदशदिनानि । रुद्रसंख्यात् एकादशभ्यो दिनेभ्यः । भूभृत्संख्यात् दिनसप्तकात् । नवमाह्नादुपरि । कृच्छ्रात् न दिनसंख्यानिर्णयः ॥ १६ ॥

ज्येष्ठासमीरोरगरौद्रपूर्वा-
त्रयेषु न प्राणिति जातरोगः ।
छिद्रासमेतेषु सपापवारे-
ष्वाग्नेयवस्वन्तकवारुणेषु ॥ १७ ॥
अष्टमीपर्वरिक्तासु पापवारे त्रिजन्मभे ।
गोमासाष्टमचन्द्रेषु रोगारम्भो मृतिप्रदः ॥ १८ ॥
अर्कारूढेस्य धीमान्यपुत्रभे वा रुगागमः ।
यदि मृत्युर्भवेत्साकेंतारकोभयपार्श्वयोः ॥ १९ ॥
त्रिषु त्रिषु च धीमान्यपुत्रपार्श्वगतोडुषु ।
रुग्वृद्धिः परिशिष्टेषु द्वादशस्वथ जीवति ॥ २० ॥
ताराबारतिथीनां मृतिदानां शूलचक्रभानां च ।
जन्मप्रभृतीनां वा मृतिर्ध्रुवं सङ्गमे तु पञ्चानाम् ॥ २१ ॥

**ज्येष्ठेति ॥** ज्येष्ठादिषु सप्तसु मृतिः। आग्नेयादिषु चतुर्षु छिद्रासमेतेषु यद्वा सपापवारेषु रोगारम्भो मृतिप्रदः। रिक्ताषष्ठ्यष्टमीद्वादश्यः छिद्राः। "छिद्राभिधास्तासु भवन्ति भास्वद्वस्वङ्कसंज्ञास्तिथयः सरिक्ताः" इति वचनात् ॥ १७ ॥

**अष्टमीति ॥** जन्मनक्षत्रमनुजन्मनक्षत्रे चेति त्रितयं त्रिजन्मभम्। गोमासा विपत्प्रत्यरवधनक्षत्राणि। अष्टमचन्द्रो जन्माष्टमराशिस्थितचन्द्रः। एतेषु रोगारम्भो मरणप्रदः। पूर्वश्लोकोक्तप्रकारेण तिथिवारयोर्नक्षत्रसंयोगे सर्वथा असाध्यो रोग इति एतच्छ्लोकोक्तप्रकारेण तिथ्यादिमात्रदोषसद्भावे रोगशमः शीघ्रं मृतिश्च न भवेत्। याप्यो रोग इति विवेकः ॥ १८ ॥

**अर्केति ॥** उभयपार्श्वयोः प्रत्येकं त्रिषु इति षट्। धीमान्यपुत्रपार्श्वयोः प्रत्येकमेकैकमिति षट्। रुग्वृद्धिः रोगदैर्घ्यादिकम्। कृच्छ्रेण जीवनं च। शिष्टेषु द्वादशसु शीघ्रं रुक्छमनम्। अत्राभिजिता सह गणनं कर्तव्यम्। अन्यथा परिशिष्टान्येकादशैव स्युः। न द्वादशेति। शूलचक्रमित्यस्य नाम व्यवह्रियते ॥ २० ॥

**तारेति ॥** १. नक्षत्रं, २. वारः, ३. तिथिः, ४. शूलचक्रनक्षत्रं, ५. जन्मनक्षत्रादि। एतेषां पञ्चानां मृतिदत्वं यदि रोगारम्भणे तर्हि निश्चितमेव पृच्छकस्य मरणं वक्तव्यमित्यर्थः। जन्मप्रभृतीत्यनेन जन्मत्रितयं विपत्प्रत्यरवधनक्षत्राणि जन्माष्टमचन्द्रश्च मर-

रोगारम्भणतारकान्तगणने जन्मर्क्षतो या भवेत् ।
संख्या तां त्रिगुणां हरेज्जलधिभिः शेषैः फलानि क्रमात् ।
एकद्वित्रिचतुर्भिराशु मरणं मृत्युः शनैर्जीवनं
कृच्छ्राज्जीवनमप्रयत्नत इदं प्राग्द्वादशाब्दाच्छिशोः ॥ इति ॥

षष्ठेशे मन्दगतौ स्थिराश्रिते वा रुजां शनैः शमनम् ।
शीघ्रगतौ चरयाते शमनं रोगस्य न चिरेण ॥ २३ ॥

पापानामुदयश्च मध्यवसतिर्लग्नस्य लग्नेशितु-
र्दौर्बल्यं कथितं द्वयं च हिमगोस्तच्चोभयं क्षीणता ।
रिष्फारातिमृतिष्वपूर्णहिमगोस्तत्र स्थितिश्चासतां
केनाप्यामयदैर्घ्यमेषु बहुभिर्वक्तव्यमेतैः किमु ॥ २४ ॥

प्रायश्चित्तं दुश्शमरोगशनाय तत्तदुदितमपि ।
कार्यं सर्वेष्ववदत् स्वग्रन्थे सायणोस्य वचनमिदम् ॥ २५ ॥

णकराणि वेदितव्यानि । शूलचक्रे धीमान्यपुत्रशब्दा अक्षरसंख्यया नक्षत्राणां पञ्चदशानामेकविंशतेश्च वाचका इत्यवगन्तव्यम् ॥ २१ ॥

**रोगेति** ॥ जन्मर्क्षतः पृच्छकजन्मनक्षत्रादारभ्य । जलधयश्चत्वारः । शेषैः एकद्वित्रिचतुर्भिः क्रमात् फलानि । १. आशुमरणं, २. शनैः मृत्युः, ३. कृच्छ्राज्जीवनं, ४. अप्रयत्नतो जीवनम् । एतच्चिन्तनमनतीतद्वादशवयस्कस्य शिशोरेव ॥ २२ ॥

**षष्ठेश इति** ॥ मन्दगतौ गतिविशेषः प्रश्नकालभवो ग्राह्यः । पारिशेष्यान्मध्यमगतौ उभयाश्रिते च न शीघ्रं शमः न च चिरकालेन । किन्तु मध्यमकालेनेति लभ्यते ॥

**पापानामिति** ॥ पापोदयः पापमध्यस्थितिः इति द्वयं लग्नस्य । लग्नाधिपस्य दौर्बल्यं लग्नस्योदितद्वयं च इति त्रयम् । हिमगोः क्षीणता लग्नोदितद्वयं च । अपूर्णहिमगोः क्षीणचन्द्रस्य रिष्फारातिमृतिषु स्थितिः । तत्रासतां पापानां स्थितिः । एषु इत्युक्तेषु केनापि एकेनाप्यामयदैर्घ्यं वक्तव्यम् । बहुभिरेतैः किमु इत्यर्थापत्तिः ॥ २४ ॥

**प्रायश्चित्तमिति** ॥ तत्तदुदितं तेषु तेषु रोगेषु विहितम् । सायणः स्वग्रन्थे सर्वेषु रोगेषु प्रायश्चित्तमवदत् । सायणः कर्मविपाकग्रन्थप्रणेता । अस्य सायणस्य । इदं वक्ष्यमाणम् ॥

यथा कार्येषु सामग्री दृष्टादृष्टोभयात्मिका ।
तथोक्ता रोगनाशेषु प्रायश्चित्तौषधात्मिका ॥ इति ॥ २६ ॥

अत्रार्यासप्तिः ।

परिपूर्णतनुश्चन्द्रो लग्नोपगतो निरीक्षितो गुरुणा ।
गुरुशुक्रौ केन्द्रे वा पीडार्तस्तत्र सुखितः स्यात् ॥ २७ ॥
उपचयसंस्थश्चन्द्रः सौम्याः केन्द्रत्रिकोणधनमृतिगाः ।
लग्नं वा शुभदृष्टं सुखितस्तत्रातुरो वाच्यः ॥ इति ॥ २८ ॥

अथ रोगहेतुरुच्यते । अत्राप्तवचनम् ।

जन्मान्तरकृतं पापं व्याधिरूपेण जायते ।
तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः ॥ २९ ॥

रोगार्तानामिह तु बहुधा कल्प्यते रोगहेतु-
भूतावेशाद्ग्रहगतिवशाद्वातपित्तादिकोपात् ।
एतत्तथ्यं त्रिविधमुदितं प्रायशः स्वीयपाप्मा
रोगोत्पत्तेर्भवति हि नृणां हेतुरेकास्त्रिधा स्यात् ॥ ३० ॥

**यथेति** ॥ दृष्टं बन्धुसाहाय्यादिकम् । अदृष्टं मन्त्रजपेश्वरभजनादिकम् । कार्येषु लौकिककार्याणां निर्विघ्नसिद्धिषु । प्रायश्चित्तमदृष्टस्थानीयम् । औषधं दृष्टस्थानीयम् ॥ २६ ॥

**अत्रेति** ॥ अत्रास्मिन् विषये । रोगशमननिरूपण इति यावत् ॥

**परिपूर्णतनुरिति** ॥ इदं श्लोकद्वितयमार्यासप्ततिस्थम् । सद्यो रोगशमनलक्षणानि प्रतिपादितान्यनेन । २७, २८ ॥

**अथेति** ॥ अत्र रोगहेतुनिरूपणविषये । आप्ता यथार्थवक्तारः प्रामाणिका अभिज्ञाः॥

**जन्मान्तरकृतमिति** ॥ जन्मान्तराण्यतीतपूर्वजन्मानि । तेषु कृतम् । व्याधिरूपेण व्याधयः पापविवर्ता एवेति भावः । तच्छान्तिः । तस्य पापस्य शान्तिः । दानादिकं प्रायश्चित्तविशेष एव ॥ २९ ॥

**रोगार्तानामिति** ॥ बहुधा त्रेधा । तदेव विव्रियते भूतावेशादित्यादिना । भूतावेशाद्वेवासुरादिग्रहावेशात् । ग्रहगतिवशात् ग्रहाणां सूर्यादीनामनिष्टस्थानस्थित्यादिना । वातपित्तादिकोपात् । आदिना कफः संगृह्यते । कोपः क्षयस्याप्युपलक्षणं तस्यापि रोगहेतु-

दुष्टे चारे ग्रहाणां भवति तनुभृतां
पीडनं दुर्ग्रहाणां
जायन्ते तेन दोषत्रियचलनत-
स्तद्भवा व्याधिभेदाः ।
सर्वेषामेव तेषां खलु निजदुरितं
प्राक्तनं हेतुरेकः
प्रायश्चित्तं च तत्तत्कथितमपि चिकि-
त्सास्तु रोगोपशान्त्यै ॥ इति ॥ ३१ ॥

पापभेदाश्च तत्प्रायश्चित्तभेदाश्च विस्तरात् ।
सायणेनोदिताः कर्मविपाके ग्रन्थ आत्मनः ॥ ३२ ॥

राजयक्ष्मादिरोगाणां ब्रह्महत्यादि कारणम् ।
वस्त्रदानादिकं प्रायश्चित्तं तद्दिगितीरिता ॥ ३३ ॥
कर्मविपाकं वक्ष्याम्यध्यायेऽस्मिन् खलु त्रयोविंशे ।
ज्ञात्वा तस्मात्तत्तत्प्रायश्चित्तं विधीयतां रुक्षु ॥ ३४ ॥

त्वकथनात् । स्वीयपाप्मा एकः नृणां रोगोत्पत्तेः हेतुरिति संबन्धः । तस्यैवैते प्रकारभेदा इति भावः ॥ ३० ॥

**दुष्ट इति** ॥ दुष्टे चारे अनिष्टस्थानस्थितिकाले । दुर्ग्रहाणां देवासुरादीनाम् । पीडनमावेशः । तेन दुर्ग्रहावेशेन । दोषत्रितयचलनतः चलनं कोपादुन्मार्गगामित्वम् । हेतुर्मूलकारणम् । तत्तत् कथितं तेषां तेषां रोगाणां सायणादिभिर्विहितम् । चिकित्सा अस्त्विति छेदः ॥ ३१ ॥

**पापभेदा इति** ॥ पापानां रोगकारणीभूतानां भेदा विशेषाः । तेषां पापभेदानां प्रायश्चित्तभेदाश्च । कर्मविपाके तत्संज्ञे । आत्मनः स्वप्रणीत इति यावत् ॥ ३२ ॥

**राजयक्ष्मेति** ॥ स्वरूपप्रदर्शनायेदमुक्तिः ॥ ३३ ॥

**कर्मविपाकमिति** ॥ अस्मिन् प्रश्नमार्गाख्यप्रकृतग्रन्थ एव । वक्ष्यामि सङ्ग्रहेण कथयामि ॥ ३४ ॥

औषधं पथ्यमाहारं तैलाभ्यङ्गं प्रतिश्रयम् ।
रोगिभ्यः श्रद्धया दद्याद्रोगी रोगनिवृत्तये ॥ ३५ ॥

मृत्युञ्जयहवनं खलु सर्वरुजां शान्तये विधेयं स्यात् ।
सर्वेष्वपि होमेषु ब्राह्मणभुक्तिस्तथा तथाप्तवचः ॥ ३६ ॥

तीव्रज्वराभिचारादिशान्तिदं हवनं मतम् ।
मृत्युञ्जयाख्यमन्त्रेण नैव केवलमायुषे ॥ ३७ ॥

तीव्रज्वरे तीव्रतराभिचारे
सोन्मादके दाहगदे च मोहे ।
तनोति शान्तिं नचिरेण होमः
सञ्जीवनश्चाष्टसहस्रसंख्यः ॥ ३८ ॥

शान्तिके पौष्टिके चापि वशीकरणकर्मणि ।

**औषधमिति** ॥ प्रतिश्रयं शयनादिसाधनम् । सर्वरोगसाधारणप्रायश्चित्तं सारभूतमेतदिति भावः ॥ ३५ ॥

**मृत्युञ्जयेति** ॥ इदमपि सर्वरोगसाधारणम् । विधेयं दैवज्ञेन । सर्वेषु होमेषु अपि ब्राह्मणभुक्तिः तथा । विधेयेत्यर्थः । सर्वेषु न केवलं मृत्युञ्जयहवने । आप्तः प्रमाणभूतः । एतदादिपद्यचतुष्टयं मृत्युञ्जयहोमविषयम् ॥ ३६ ॥

**तीव्रेति** ॥ आदिशब्देन सर्वरोगसङ्ग्रहः । अत एवोक्तं सर्वरुजां शान्तय इति । हवनं होमः । नैव केवलमायुष इत्यस्यायुष्करमात्रत्वं केचनानभिज्ञा मन्यन्त इति तद्भ्रममूलकमेवेति भावः ॥ ३७ ॥

**तीव्रज्वर इति** ॥ संजीवनो जीवनकरः । मृत्युञ्जयाख्य इति यावत् । अष्टसहस्रसंख्यः । अष्टाधिकं सहस्रमष्टसहस्रं शाकपार्थिवादित्वादुत्तरपदलोपः । अष्टसहस्रं संख्या यस्येति बहुव्रीहिः । अमृतादिभिः सप्तभिर्द्रव्यैः प्रत्येकं चतुश्चत्वारिंशदुत्तरशतावृत्त्या होमे आहृत्याष्टोत्तरसहस्रं होमः स्यात् । अस्य होमस्येतरेपि विविधाः प्रकारभेदा विद्यन्ते । ते तान्त्रिकविधिवेदिभ्यो वेदितव्याः ॥ ३८ ॥

**शान्तिक इति** ॥ शान्तिकं रोगशान्त्यादिकरम् । पौष्टिकं श्रीकरम् । उत्तममि-

हुतसंख्यासमानं स्यादुत्तमं द्विजभोजनम् ॥ इति ॥ ३९ ॥

एतद्रोगादिनिरूपणविषयम् ।

॥ इति प्रश्नमार्गे त्रयोदशाध्यायः ॥

## अथ चतुर्दशाध्यायप्रारम्भः ॥

अथ भावा निरूप्यन्ते ।

वाच्याः सुतादयो भावाः परोक्षस्यापि पृच्छतः
सुवचास्ते वयो ज्ञात्वा यतस्तदपि कथ्यते ॥ १

लग्नेशे क्षितिजे च बालहिमगौ नो पञ्चसंवत्सराः
पूर्णाः प्रष्टुरथेन्दुजेष्ट भृगुजे षट्संयुता वा दश ।

त्यनेन यथाविभवं हुतसंख्यातो न्यूनानां ब्राह्मणानां परं भोजनेपि न प्रत्यवाय इति लभ्यते । शक्यो धर्मः इति तत्वम् । इतिनाप्तवचःपरिसमाप्तिरभिधीयते ॥ ३९ ॥

**एतदिति** ॥ एतदिदमध्यायप्रदर्शितम् ॥

। इति प्रश्नमार्गे त्रयोदशाध्यायः ।

**अथेति** ॥ पृच्छेत्याद्युक्तप्रकारेणायुर्निरूपणोपयोगिसर्ववस्तुनिरूपणानन्तरमुद्दिष्टक्रमानुसारेण भावनिरूपणं चतुर्दशाध्यायेन क्रियत इति भावः ॥

**वाच्या इति** ॥ परोक्षस्य अज्ञातवयस्कस्येति यावत् । सुवचाः सुखेन वक्तुं शक्याः । बालानां पुत्रादिनिरूपणप्रवृत्तेः परिहास्यताहेतुत्वात् । तत्प्रष्टृवयः । यत इत्यनन्तरमत इत्यध्याहार्यम् ॥ १ ॥

**लग्नेश इति** ॥ शुक्लपञ्चम्यन्तं शशी बालः । कृष्णाष्टम्याः परं वृद्धः । संवत्सरा न पूर्णा इति सर्वत्र योज्यम् । इन्दुजे बुधेष्ट अष्टौ संवत्सरा न पूर्णा इत्यादि । दशगुणाः शैलाः = सप्ततिः । वृद्धोडुपे चेति योजना । सप्ततेरधिकवयस्को वृद्धतरः । फणिनि फण्युदये इत्येव । तस्य राश्याधिपत्याभावात् । बालचन्द्रस्य पञ्च वृद्धोडुपस्य सप्ततिरित्युक्ते

त्रिंशद्देवगुरौ रवौ दशगुणाः शैलाश्च वृद्धोडुपे
अष्टा वृद्धतरोऽर्कजे फणिनि चा चैषां तथैवोदये । इति ॥ २ ॥

देहस्य सौष्ठवं स्वास्थ्यं स्थितिः श्रेयो यशस्सुखम् ।
जयो वपुश्च तत्सर्वं चिन्तनीयं विलग्नतः ॥ ३ ॥

भर्तव्यमखिलं वित्तं वाणी चक्षुश्च दक्षिणम् ।
विद्याश्च विविधा ह्येतत्सर्वं चिन्त्यं द्वितीयतः ॥ ४ ॥

धैर्यं वीर्यं च दुर्बुद्धिः सहोदरपराक्रमौ ।
दक्षकर्णसहायौ च चिन्तनीयं तृतीयतः ॥ ५ ॥

माता सुहृन्मातुलभागिनेयौ
क्षेत्रं सुखं वाहनमासनं च ।
लालित्यमंभः शयनं च वृद्धिः
पश्वादिकं जन्मगृहं चतुर्थात् ॥ ६ ॥

प्रज्ञा प्रतिभा मेधा विवेकशक्तिः पुरातनं पुण्यम् ।
मन्त्रामात्यतनूजाः पञ्चमभात्सौमनस्यमपि चिन्त्यम् ॥ ७ ॥

---

शुक्लपञ्चम्याः परं कृष्णाष्टमीपर्यन्तं चन्द्रस्य वयःपरिमाणं त्रैराशिकेन कल्प्यमिति लभ्यते । कर्कटके लग्ने चन्द्रे लग्नस्थे च तत्कालचन्द्रस्यावस्थामनुसृत्य वयोमानं कल्पनीयमिति यावत् ॥ २ ॥

**देहस्येति** ॥ सौष्ठवं लक्षणयुक्तत्वम् । स्वास्थ्यं नीरोगत्वम् । स्थितिः संस्थानविशेषः । जयो व्यवहारादिषु ॥ ३ ॥

**भर्तव्यमिति** ॥ भर्तव्यं पोष्यवर्गः । दक्षिणं चक्षुरिति संबन्धः । विविधा विद्याः शास्त्रपाण्डित्यकलाकौशल्यादिकमिति यावत् ॥ ४ ॥

**धैर्यमिति** । वीर्यपराक्रमयोरीषद्भेदः । वीर्यमुत्साहशालित्वम् । पराक्रमः शत्रूणामभिभवताच्छील्यम् । दक्षकर्णो दक्षिणश्रोत्रम् ॥ ५ ॥

**मातेति** ॥ लालित्यमभिगम्यता । क्षेत्रं केदारादि । वाहनं गजतुरगरथशकटादिकम् । शयनं खट्वादिकम् ॥ ६ ॥

**प्रज्ञेति** ॥ प्रतिभा यथाकालप्रतिभानम् । मेधा धारणाबुद्धिः । विवेको गुणदोषयोः कर्तव्याकर्तव्ययोर्विविच्य ज्ञानम् । पुरातनं जन्मान्तरार्जितं पुण्यम् । सौमनस्यं मनस्सन्तोषः सत्कर्माभिरुचिश्च ॥ ७ ॥

तस्करारातिविघ्नाधिव्याधयश्च तनुक्षतिः ।
मरणं वारिशस्त्रेण चिन्तनीयं हि षष्ठतः ॥ ८ ॥

विवाहमदनालोकभार्याभर्तृसमागमाः ।
शय्यास्त्रीसद्मनष्टार्थमैथुनान्यपि सप्तमात् ॥ ९ ॥

सर्वप्रणाशो विपदोपवादो
हेतुप्रदेशौ मरणस्य दासः ।
मठादिकं वेश्म गदाश्च विघ्ना
विचिन्तनीयाः पुनरष्टमेन ॥ १० ॥

भाग्यधर्मदयापुण्यतपस्तातसुतात्मजाः ।
दानोपासनसौशील्यगुरवो नवमादमी ॥ ११ ॥

देवालयनगरसभामार्गालयदाससर्वकर्माणि ।
आज्ञालम्बनमेतत्सर्वं चिन्त्यं हि दशमेन ॥ १२ ॥

सर्वाभीष्टागमो ज्येष्ठभ्राता जाता निजात्मजाः ।
वामकर्णोऽर्थलाभश्च चिन्त्या ह्येकादशेन ते ॥ १३ ॥

---

**तस्करेति** ॥ आधिर्मनोदुःखम् । वा अरिशस्त्रेण इति छेदः । वाशब्दश्चार्थे । चिन्तनीयं 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकैकशेषैकवद्भावौ ॥ ८ ॥

**विवाहेति** ॥ पुंसां भार्यासमागमः स्त्रीणां भर्तृसमागमश्च । समागम इति न भार्याभर्त्रोः संबन्धी । किन्त्वितरजनसंसर्गवाचकः । गमनागमनवाचको वा इत्यपि केचित् । नष्टार्थश्चोराद्यपहृतद्रव्यम् ॥ ९ ॥

**सर्वेति** ॥ मरणस्य हेतुप्रदेशौ । मठश्छात्रादिनिलयस्तदादिकं वेश्म उपगृहाणीत्यर्थः । विचिन्तनीया इति सन्निहितेन विघ्ना इत्यनेन संबध्यते । इतरत्र लिङ्गवचनविपरिणामेन योज्यम् ॥ १० ॥

**भाग्येति** ॥ सुतात्मजाः पौत्राः । सौशील्यं सदाचारत्वम् ॥ ११ ॥

**देवालयेति** ॥ मार्गालयः प्रपासत्रादिकम् । आज्ञा तच्छक्तिः आलम्बनमाश्रयः ॥.

**सर्वेति** ॥ जाताः न जनिष्यमाणाः । ते पञ्चमेनैव चिन्त्याः ॥ १३ ॥

पापं व्ययश्च पतनं निरये वाममम्बकम् ।
स्थानभ्रंशश्च वैकल्यं द्वादशेन विचिन्तयेत् ॥ १४ ॥
चिन्त्यं चंक्रमणं लग्नाच्छयनं हि चतुर्थतः ।
सप्तमेनोपवेशश्च चिन्त्या दशमत स्थितिः ॥ १५ ॥

**मूर्तिरिति** ॥ अनेन श्लोकेन भुक्तिप्रश्ने चिन्तनीया विशेषाः प्रादर्शिषत । मूर्तिः भोक्तुः शरीरस्थितिः । अमत्रं भोजनपात्रम् । भक्ष्य कदलीफलादि । केचिदत्र पेयमिति पठन्ति । पेयं पानीयक्षीरादि । भोजयितुः भावो मनोनिष्ठोभिप्रायः । उपदंशो व्यञ्जन-सार्थः । सेचनं तक्रादिकम् । सहभुक् सहासित्वा भुक्तवान् । पूर्तिरुदरपरिपूरणम् । कथा भुक्तिसमयकथिता । शयनं भोजनानन्तरशयनम् । एतत्सप्तविंशेध्याये भोजनप्रश्ने विशेष-तश्चिन्तनीयम् ॥ १८ ॥

मूर्तिः कोशो धन्विनो वाहनानि
मन्त्रः शत्रुर्मार्ग आयुर्मनश्च ।
व्यापारश्च प्राप्तिरप्राप्तिरेवं
लग्नाद्भावा भूमिभर्तुर्विचिन्त्याः ॥ इति ॥ १९ ॥

बाह्याभ्यन्तरभावाद्द्विविधा भावाः समीरिता ह्येते ।
बाह्याः खलु तन्वाद्या ज्ञेयाः पुनरान्तरास्तु कल्याद्याः ॥ २० ॥

यद्यल्लग्नादिभिश्चिन्त्यं तत्तत्स्वामिसमागमे ।
आभ्यन्तरं भवेत्सर्वं विज्ञेयं बाह्यमन्यथा ॥ २१ ॥

मूर्द्धास्यगळस्कन्धा हृदयोदरवस्तिदेशगुह्यानि ।
ऊरू जानू जंघे पादौ भावाः क्रमाद्विलग्नाद्याः ॥ २२ ॥

अङ्गानां ह्रस्वदीर्घत्वं लग्नाद्याश्रितराशिभिः ।
वाच्यं तत्कथने प्राय एवेदमुपयुज्यते ॥ २३ ॥

**मूर्तिरिति** ॥ मूर्तिः राज्ञः शरीरम् । कोशः धनागारम् । धन्विनो योधाः । वाहनानि गजतुरगरथशकटादयः । मन्त्रः कार्यालोचनम् । मार्गः रथ्यादिकम् । आयुः राज्ञो जीवनकालः । मनः राजकीयमनोवस्था । व्यापारः राज्यभरणादिविषयककर्मसमूहः । प्राप्तिर्धनाद्यागमः । अप्राप्तिः करादलाभः । नञो विरुद्धार्थकत्वाद्व्ययश्च । एतच्चतुर्विंशेध्याये राजप्रश्नघट्टे विशेषतश्चिन्तनीयम् ॥ १९ ॥

**बाह्येति** ॥ तन्वाद्याः "तनुकुटुंबसहोत्थबन्धुपुत्रारिपत्निमरणानि शुभास्पदायाः रिष्फाख्याः" इत्येते । कल्याद्याः "कल्यस्वविक्रमगृहप्रतिभाक्षतानि चित्तोत्थरन्ध्रगुरुमानभवव्ययानि" इत्येते ॥ २० ॥

**यद्यदिति** ॥ आभ्यन्तरं = कल्याद्युक्तम् । बाह्यं = तन्वाद्युक्तम् ॥ २१ ॥

**मूर्धेति** ॥ अनेन लग्नादिभावेष्वङ्गकल्पना क्रियते । लग्नं शिरः । द्वितीयभावो मुखम् । एवं द्वादशभावः पादौ ॥ २२ ॥

**अङ्गानामिति** ॥ यस्मिन्नङ्गे दीर्घराशिस्तदङ्गं दीर्घम् । यत्र ह्रस्वराशिस्तद्ध्रस्वम् । राशीनां ह्रस्वदीर्घत्वं 'पूर्वार्धे विषयादयः कृतगुणा मानं प्रतीपं ततः' इति वराहमिहिरवचनादवगन्तव्यम् । पूर्वश्लोकोक्तो भावेष्ववयवविन्यासो ह्रस्वदीर्घत्वचिन्तायामस्यामेव नान्यत्र

लग्नराशिः स्वयं प्रष्टा तत्सम्बन्धिधनादयः ।
द्वितीयाद्यन्यभावास्तत् पुष्टिहानी शुभाशुभैः ॥ २४ ॥

अत्र षट्पञ्चाशिका ।

यो यो भावः स्वामिदृष्टो युतो वा
सौम्यैर्वा स्यात्तस्य तस्याभिवृद्धिः ।
पापैरेवं तस्य भावस्य हानि-
र्विज्ञातव्या प्रश्नतो जन्मतो वा ॥ इति ॥ २५ ॥

आर्यासप्ततिश्च ।

यो यो भावः प्रभुणा युक्तो दृष्टोथवा भवेत् प्रश्ने ।
गुरुबुधशुक्रैरेवं वक्तव्यं तस्य तस्य शुभम् ॥ २६ ॥
यस्मिन् यस्मिन् भावे द्विद्वादशसप्तमे स्थिताः सौम्याः ।
तस्मिन् तस्मिन् वृद्धिर्दशमचतुर्थस्थितैस्तद्वत् ॥ २७ ॥

प्राय उपयुज्यते । प्रायःशब्देनान्यत्रापि क्वचिदस्योपयोगोत्राप्यन्यप्रकाराङ्कविन्यासोपयोगः क्वचिदित्यपि सूच्यते ॥ २३

**लग्नराशिरिति ॥** प्रष्टा स्वयमिति योजना । शुभसंबन्धेन तत्तद्भावभूतानां प्रष्टुर्धनादीनामपि पुष्टिरशुभसंबन्धेन हानिश्च भवेतामित्यर्थः ॥ २४ ॥

**अत्रेति ॥** वक्ष्यमाणश्लोकः षट्पञ्चाशिकास्थः ॥

**य इति ॥** स्वामी भावाधिपः । सौम्यैः दृष्टो युतो वेत्यनुषज्यते । पापैरेवं दृष्टो युतो वा यो यो भाव इति । प्रश्नतो जन्मतो वा जातके प्रश्ने चेदं निर्विशेषं चिन्त्यमिति यावत् ॥ २५ ॥

**आर्येति ॥** वक्ष्यमाणश्लोकद्वयं तत्स्थम् ॥

**य इति ॥** एवं युक्तो दृष्टो वा । तस्य तस्य भावस्य । शुभं पुष्टिः । द्विद्वादशसप्तमे स्थिताः । उभयशुभत्वे शुभदृष्टिरिति तात्पर्यम् । तस्मिन् तस्मिन् तस्य तस्य भावस्येत्यर्थः । अधिकरणत्वविवक्षया सप्तमी । 'विवक्षातः कारकाणि' इति । दशमचतुर्थस्थितैस्तद्वत् वृद्धिरित्यर्थः । भावात् केन्द्रेषु शुभस्थितौ भावपुष्टिरिति सिद्धम् । पारिशेष्यन्यायेन प्रोक्तरीत्या पापसंबन्धे हानिरित्यप्युक्तप्रायमेव ॥ २७ ॥

षष्ठाष्टमरिप्फेशा भावपरिपवः शुभाश्च भावहनः ।
भावतदीश्वरकारकदुर्बलता चास्ति तद्वदाप्तवचः ॥ २८ ॥
षष्ठं द्वादशमष्टमं च मुनयो भावाननिष्टान् विदु-
स्तन्नाथान्वितवीक्षिता यदधिपा ये वा च भावाः स्वयम् ।
तत्रस्थाश्च यदीश्वरास्त्रय इमे नश्यन्ति भावा नृणां
जाता वा विफला विनष्टविकलास्तत्रातिकष्टोष्टमः ॥ २९ ॥

भावाधीशे च भावे सति बलरहिते
च ग्रहे कारकाख्ये
पापान्तस्थे च पापैररिभिरपि समे-
तेक्षिते नान्यखेटैः ।
पापैस्तद्बन्धुमृत्युव्ययभवनगतै-
स्तत्त्रिकोणास्थितैर्वा ।
वाच्या तद्भावहानिः स्फुटमिह भवति
द्वित्रसंवादभावात् ॥ इति ॥ ३० ॥
तातश्चात्मप्रभावो द्युमणिरथ मनो-
मातरौ शीतरश्मि-

---

**षष्ठेति** ॥ शुभाश्च चोप्यर्थे शुभा अपि । भावहनः भावनाशकरा भावतदीश्वर-कारकदुर्बलता च भावहा । वक्ष्यमाणश्लोकद्वयमाप्तोक्तिः ॥ २८ ॥

**षष्ठमिति** ॥ तन्नाथैः षष्ठद्वादशाष्टमाधिपतिभिरन्वितवीक्षिताः । यदधिपाः येषां भावानामधिपाः । [illegible]स्थाः षष्ठादिस्थाः । यदीश्वरा यद्भावाधिपाः । इमे त्रयो भावा न-श्यन्ति । जाता वा जाताश्चेदपि । विनष्टाविकला भवेयुः । विनश्येयुः । यद्वा विफला भवेयुः तत्र षष्ठादिषु मध्ये ॥ २९ ॥

**भावाधीश इति** ॥ भावे भावाधिपे कारके च त्रिषु पापान्तस्थेषु पापैः भावा-धिपकारकशत्रुभिरपि युक्तदृष्टेषु अन्यग्रहैरदृष्टयुक्तेषु । भावाच्चतुरश्रे द्वादशे च पापस्थितेः । भावात्रिकोणे पापस्थितेरपि भावहानिर्वक्तव्या । उक्तलक्षणेषु द्वयोस्त्रयाणां वा संवादे सति निश्चयेन भावनाशो वक्तव्यः । इतिराप्तवचःपरिसमाप्तिप्रकाशकः ॥ ३० ॥

**तात इति** ॥ अनेन ग्रहाणां कारकत्वं विधीयते । द्युमणिः सूर्यः । क्षितिरपीति

भ्राता सत्वं च भौमः क्षितिरपि वचनं
ज्ञानमिन्दोस्तनूजः ।
धीचित्पुत्रांगसौख्यं सुरगुरुरबला-
भोगयानानि शुक्रो
मृत्युर्व्याधिश्च दुःखं शनिरिह गदितो
दासभृत्यादिकोपि ॥ ३१ ॥

आत्मादयो गगनगैर्बलिभिर्बलवत्तराः ।
दुर्बलैर्दुर्बला ज्ञेया विपरीतं शनेः स्मृतम् ॥ ३२ ॥
अर्कांशे सौर्यां स्वं तातश्चाद्युदितसर्ववस्तूनाम् ।
कारकतार्कादीनां विज्ञेयापोषणे तथा हनने ॥ ३३ ॥
भाग्याद्यभीष्टभावेशोप्यशुभो भावपुष्टिकृत् ।
"लग्नात्पुत्रे"ति पद्ये तद्वराहमिहिरोदितम् ॥ ३४ ॥
शुभदानां प्राबल्ये शुभपौष्कल्यं पुनश्च दोषकृताम् ।
वैबल्ये दोषाणां पौष्कल्यं वदति तद्वदभियुक्तः ॥ ३५ ॥

---

पूर्वान्वयि । सत्वं पराक्रमः धैर्यं च । चित् ज्ञानम् । यानं वाहनम् । मृत्युव्याध्यादीनां शनिः कारकः ॥ ३१ ॥

**आत्मादय इति** ॥ आत्मादयः सूर्ये बलिनि सति आत्मप्रभावस्य तातस्य च बलवत्तरत्वम् । एवं शुक्रे बलिन्यबलाभोगयानानि बलवत्तराणि । विपरीतं शनेः शनौ बलवति सति मृत्युव्याध्यादीनां दौर्बल्यम् । एवं सूर्यादिषु दुर्बलेष्वात्मादीनां दौर्बल्यम् । शनौ पुनर्दुर्बले सति मृत्युव्याध्यादीनां प्राबल्यम् ॥ ३२ ॥

**अर्कांश इति** ॥ 'अर्कांशे तृणकनकोर्णभेषजाद्यैः' इति कर्माजीवाध्याये 'सौर्यां स्वं मखदन्तचर्मकनककौर्याध्वभूपाहवैः' इति दशाफलाध्याये 'तातश्चे'त्यनन्तरश्लोके चोदितानां सर्ववस्तूनाम् ॥ ३३ ॥

**भाग्येति** ॥ 'लग्नात्पुत्रकळत्रभे शुभपतिप्राप्ते' इत्यत्र शुभाश्च पतिश्च शुभपतयः इति द्वन्द्वसमासवत् शुभस्य नवमभावस्य पतिरिति षष्ठी तत्पुरुषोपि विवक्षित इति भावः । तत्र शुभपदं शक्त्या नवमभावमिव लक्षणयेतरानप्यभीष्टभावान् क्रोडीकरोतीति हृदयम् ॥

**शुभदानामिति** ॥ 'बळवानिष्टं कुरुते' इति वचनानुसारेण चिन्त्यमिति तात्पर्यम् ॥ ३५ ॥

पञ्चमसंस्थः पापः पुत्रविनाशं करोति बलहीनः ।
सौम्यः सुतं विधत्ते बलसहितश्चाष्टमाधिपं हित्वा ॥ इति ॥
येन ग्रहेण यत्प्रोक्तमशुभं वा शुभं फलम् ।
बली चेत्स शुभं पूर्णमशुभं दुर्बलो यदि ॥ इति च ॥ ३७ ॥

भावेष्विष्टेषु वर्गोत्तमनिजरिपुभे-
ष्वास्थितो यो ग्रहोसौ
पूर्णं मध्यं तथाल्पं दिशति शुभफलं
स्वोदितं पृच्छकानाम् ।
भावेष्विष्टेतरेष्वप्यशुभमपि तथा
पुष्टमध्याल्परूपं
वैरिस्वीयांशवर्गोत्तमगत उदितं
द्रव्यमाशामयाद्यम् ॥ इति च ॥ ३८ ॥

स्वामी कारकखेचरश्च बलिनौ
यस्येष्टभावास्थितौ
सम्पूर्णानुभवक्षमश्च नियतं
भावः स नॄणां भवेत् ।

**पञ्चमसंस्थ इति** ॥ अनेनाभियुक्तवचनेन पूर्वश्लोकोक्तोर्थ एवोदाहरणत्वेन स्थिरीकृतः । अष्टमशब्दः षष्ठद्वादशयोरप्युपलक्षकः ॥ ३६ ॥

**येनेति** ॥ इदमप्यभियुक्तवचनमेव ॥ ३७ ॥

**भावेष्विति** ॥ अत्र निजरिपुभेष्वित्यस्य निजनवांशराशौ शत्रुनवांशराशौ चेत्यर्थः । समासाद्यावयवभूतं वर्गोत्तमपदमुत्तरार्धगतमंशपदं चात्र गमकम् । 'वर्गोत्तमस्वपरगेषु शुभं यदुक्तं तत्पुष्टमध्यलघुताशुभमुत्क्रमेण' । इति वचनान्तरमेतदनुकूलम् । निजभेत्यनेन स्वीयेत्यनेन च बन्धुनवांशोपि ग्राह्यः । अत्र बन्धुशत्रुत्वं निसर्गतो न । किं तु तत्कालत एव । समनवांशकस्याग्रहणात् । अयं श्लोकोप्यभियुक्तवचनरूपः ॥ ३८ ॥

**स्वामीति** ॥ यस्य भावस्य । इष्टभावस्थितौ लग्नाद्भाच्च । अनुभवक्षमः अनुभवविषय इत्यर्थः । कास्यानुभूतौ कथा । असंभूतः कथमनुभूयेतेत्यर्थापत्तिः ॥ ३९ ॥

रिःफारातिमृतिस्थितौ च विबलौ
यत्कारकाधीश्वरौ
भावोयं नहि सम्भवेदपि नृणां
कस्यानुभूतौ कथा ॥ ३९ ॥

स्वोच्चाभीष्टगृहेषु कारकपती
रन्ध्राद्यनिष्टस्थितौ
यद्भावस्य स सम्भवेदविमलो
नास्यानुभूतिर्नृणाम् ।
नीचाद्याश्रयतो बलौ शुभतरे
लाभादिभावे स्थितौ
यद्भावाधिपकारकौ स विकलो-
प्यस्यानुभूतिर्भवेत् ॥ ४० ॥

नाथकारकयोरेको बलवानिष्टभावगः ।
अन्योन्यथेति मिश्रत्वेप्युक्तरीत्योह्यतां फलम् ॥ ४१ ॥

भावात्तदीश्वरे सुस्थे भावसम्पन्न चान्यथा ।
लग्नादनुभवश्चैवं चिन्त्यतामिति केचन ॥ ४२ ॥

**स्वोच्चेति** ॥ नाथकारकयोः प्राबल्यं भावपौष्कल्ये दौर्बल्यं भाववैकल्ये, इष्टस्थितिर्भावानुभवे, अनिष्टस्थितिर्भावाननुभवे च कारणमिति भावः ॥ ४० ॥

**नाथेति** ॥ ऊह्यतां, न तस्य सर्वथा अभावः । न च पौष्कल्यम् । न च सर्वथाननुभवः । न च संपूर्णानुभव इति भावः ॥ ४१ ॥

**भावादिति** ॥ अन्यथा भावेश्वरे भावाद्दुःस्थे सति । यद्भावेशो लग्नात्सुस्थस्तद्भावानुभवः । यद्भावेशो लग्नाद्दुःस्थस्तद्भावानुभवो न अत्र तदीश्वरपदं तत्कारकस्याप्युपलक्षणमित्यवगन्तव्यम् । नाथकारकयोरुभयोरपि निर्विशेषं भावस्य सम्पदसम्पदोरनुभवाननुभवयोरपि दातृत्वावश्यंभावात् । तथैवानन्तरश्लोकत्रये प्रतिपादितत्वात्प्रामाणिकप्राश्निकप्रवरप्रहतपद्धतेरेवंप्रकारत्वाच्चेति गुरूपदेशः ॥ ४२ ॥

अत्र ग्रन्थान्तरम् ।

यस्य यस्य विलग्नेन संबन्धो लग्नपेन वा ।
दृग्योगकेन्द्रगत्याद्यैः स स भावोनुभूयते ॥ ४३ ॥

ग्रहाणामिष्टानिष्टभावाश्चोच्यन्ते ।

सौम्यानां व्ययमृत्युशत्रुसहजा
नेष्टा अभीष्टाः परे
पापानामभिमातिसोदरभवा
इष्टा अनिष्टाः परे ।
भावेष्वेषु हि मुख्यता तु वपुषो
धर्मात्मजौ तत्समौ
तेषु त्रिष्वधिकं शुभाशुभफलं
विद्यात् सतां चासताम् ॥ ४४ ॥

ताम्रहेमादिवस्तूनां स्वोक्तानां लाभदा अपि ।
रुक्प्रदत्वात्तु रोगादिप्रश्नेनिष्टा रिपौ खराः । इति । ४५ ॥

अत्र स्वल्पजातकम् ।

**अत्रेति** ॥ अनन्तरश्लोको ग्रन्थान्तरस्थः ॥

**यस्येति** ॥ आदिशब्देन त्रिकोणसंबन्धादयो ग्राह्याः । विलग्नेन संबन्धस्तु भावाधिपस्य लग्ने तत्केन्द्रे तद्द्रष्टृतया वा स्थितिः । अन्यथा केवलं भावानां लग्नसंबन्धो नियतः खलु ॥ ४३ ॥

**ग्रहणामिति** ॥ उच्यन्ते श्लोकद्वयेन ॥

**सौम्यानामिति** ॥ अभिमातिः शत्रुः षष्ठभावः । एषु द्वादशसु भावेषु मध्ये । धर्मात्मजौ नवमपञ्चमौ । त्रिषु तेषु लग्नपञ्चमनवमेषु । शुभाशुभफलं सतां शुभफलमसतामशुभफलम् । लग्ननवमपञ्चमेषु शुभयुतेषु धनाद्यन्यभावानामपि पुष्टिः । तेषु त्रिषु पापश्चेद्धनादीनामपि प्रायेण हानिरित्यर्थः ॥ ४४ ॥

**ताम्रेति** ॥ रिपौ पापानामिष्टत्वेनोक्तत्वेपीत्यर्थः । रोगादिप्रश्ने । कार्यप्रश्नादिषु शुभा इत्यर्थः ॥ ४५ ॥

**अत्रेति** ॥ अत्र भावचिन्तनविषये ॥

पुष्णन्ति शुभा भावान्
मूर्त्यादीन् घ्नन्ति संस्थिताः पापाः ।
सौम्याः षष्ठेरिघ्नाः
सर्वे नेष्टा व्ययाष्टमगाः ॥ इति ॥ ४६ ॥

दशाफलानि यान्युक्तान्यशुभानि शुभानि वा ।
प्रश्नेपि तानि वाच्यानि दुःस्थे सुस्थे च खेचरे ॥ ४७ ॥

इष्टानिष्टगतत्वेन शुभाशुभफलप्रदे ।
ग्रहे सत्यखिलं योज्यं संज्ञाध्यायसमीरितम् ॥ ४८ ॥

मूर्त्याद्या निजरन्ध्रपेण शनिना
वा स्युर्यदा संयुता
स्वस्वारिव्ययरन्ध्रपापहृतय-
स्तत्स्थस्य वा चेत्तदा ।
तत्तद्भावविपत्तिरस्ति नियमा-
देवं वराङ्गादिषु
ब्रूयादंघ्रियुगान्तिमेषु च वपु-
र्भागेषु रोगान् सुधीः ॥ ४९ ॥

**पुष्णन्तीति** ॥ अरिघ्नाः न तु शत्रुपोषकाः । सर्वे शुभा अशुभाश्च ॥ ४६॥

**दशाफलानीति** ॥ अशुभानि भार्यापुत्रेत्याद्युक्तानि । शुभानि 'स्वं नखदन्तचर्मे'त्याद्युक्तानि । ग्रहे लाभादीष्टभावस्थे शुभफलं योज्यम् । अष्टमाद्यनिष्टस्थिते तु अशुभफलं योज्यम् ॥ ४७ ॥

**इष्टेति** ॥ अशुभफलदे रवौ राजकोपशिवकोपताम्रनाशास्थिभवरोगादयः । शुभफलदे तु राजसम्मानाशिवप्रसादताम्रलाभास्थिबलादयः ॥ ४८ ॥

**मूर्त्याद्या इति** ॥ निजरन्ध्रपेण तत्तद्भावादष्टमाधिपेन । यदा चारवशादित्यर्थः । स्वस्वेति तत्तद्भावेत्यर्थः । तत्स्थस्य तत्तद्भावातिव्ययरन्ध्रस्थस्य । अपहृतय इति विभज्य योज्यम् । नियमान्निश्चयेन वराङ्गादिषु लग्नभावः शिरो द्वितीयभावो मुखमित्यादिकल्पनयेति भावः । उदाहृियते यदा पञ्चमभावो निजरन्ध्रपेण लग्नाद्व्ययाधिपेन शनिना वा त-

लग्नाद्यैर्वाच्यमसत्सद्योगे सति फलं समुच्चित्य ।
सौकर्यार्थं प्रष्टुः फलनिर्देशस्य कथ्यते तद्‌नु ॥ ५० ॥

पापे लग्नगते पराजयशिरो-
रुग्दुःखदुष्कीर्तयः
स्थानभ्रंशधनक्षयाखिलशरी-
रास्वास्थ्यदुःखासिकाः ।
सौम्ये लग्नगते सुखस्थितिजया-
रोग्यार्थसम्पत्तयः
कीर्तिस्थानविशेषलब्धिरिति वि-
ज्ञेयं फलं पृच्छतात् ॥ ५१ ॥

पापे वित्तगते स्वपूर्वनिचित-
द्रव्यक्षयो वक्त्ररु-
ग्भर्तव्यामयदक्षिणांबकरुजो
दुष्टोक्तिपातक्षती ।
सौम्ये वित्तगते पुरार्जितधना-
नामेव वृध्युद्भवः
पात्राप्तिर्भरणीयरञ्जनसुखं
प्रष्टेति यायात्फलम् ॥ ५२ ॥

योगश्चारवशाद्युतो भवति । तदा स्वस्वारिष्व्ययरन्ध्रपापहृतयः लग्नाद्दशमचतुर्थव्ययाधिपेष्वन्य-तमस्य दशमचतुर्थव्ययेष्वेकत्र स्थितस्य वा अपहारश्च भवति यदि तर्हि तत्काले पुत्रनाशः उदरव्याधिश्च निश्चयेन भवेत् । एवं भावान्तरेषूह्यम् ॥ ४९ ॥

**लग्नाद्यैरिति** ॥ समुच्चित्य एकत्र संयोज्य । 'पापे लग्नगते' इत्यारभ्य 'संचिन्त्य वाच्यमिह' इत्यन्तं भावानां सदसद्योगविषयम् ॥ ५० ॥

**पाप इति** ॥ इति विज्ञेयमित्यनेन प्रोक्तं फलमुदाहरणतया स्वीकृत्य फलान्तरमपि वक्तुं शक्यमिति द्योत्यते । स्वपूर्वेति— स्वस्य पूर्वैः निचितस्य सम्पादितस्य द्रव्यस्य क्षयः । भर्तव्यं कुटुंबम् । अंबकं नेत्रम् । दुष्टोक्तिर्वाग्दोषः । भरणीयं कुटुंबम् । आदिश-ब्दने वक्षःकन्धरदक्षिणश्रवणेषु विशेषसौख्यादिकं ग्राह्यम् ॥ ५१-५२ ॥

पापे भ्रातृगते सहायविगमः
सोदर्यरोगादिकं
वक्षःकन्धरदक्षिणश्रवणरु-
ग्धीदौष्ट्यधैर्यक्षयाः ।
सौम्ये भ्रातृगते सहोदरसहा-
यारोग्यलाभाधिकं
सद्बुद्धेरुदयश्च धैर्ययुति-
रित्येतत्फलं पृच्छताम् ॥ ५३ ॥

मातुर्मातुलभागिनेयसुहृदां
गोवेश्मशय्यासन-
क्षेत्राणामपि वाहनस्य च विप-
द्धृद्देशरुक्चासुखम् ।
कूपाद्यम्बुविदूषणं सुखगते
पापे शुभे वाहनं
क्षेत्रं गोशयनासनानि सुखमि-
त्येषां हि लाभो भवेत् ॥ ५४ ॥

पापे पञ्चमगेऽस्य दोषवशतो
मौढ्यादिना रुङ्मृति-
र्वापत्यस्य पुराणपुण्यविलयो
वंध्या मनःकुण्ठता ।
क्रोधामात्यरुगादिकं त्वथ शुभे
पुत्रस्य लाभोऽथवा-
रोग्यं धीप्रतिभोदयश्च मनस-
स्तुष्टिश्च पुण्योदयः ॥ ५५ ॥

**मातुरिति** ॥ क्षेत्रं केदारादि । कूपादीत्यादिशब्देन तटाकादिसङ्ग्रहः ॥ ५४ ॥

**पाप इति** ॥ अस्य पञ्चमगतपापस्य । मौढ्यादिना दोषवशतः दोषाल्पत्वे रुग्दो षाधिक्ये मृतिरिति भावः । मनसः कुण्ठतोत्साहवैरस्यम् ॥ ५५ ॥

पापे षष्ठगते तु षष्ठभवनो-
क्ताङ्गे व्रणस्योद्भव-
श्चोरारिव्यसनं च नाभिकटिरु-
ग्विघ्नोद्भवः कर्मसु ।
पापस्यास्य च दोषसम्भवगदः
सौम्ये च शत्रुक्षयो
रोगाणामभवः सतां तु शमनं
प्रष्टुः समादिश्यताम् ॥ ५६ ॥

पापे सप्तमगे कळत्रमरणं
रोगो वियोगोऽस्य वा
भर्तुर्वा गमनान्तराय उदिया-
त्स्युर्मूत्रकृच्छ्राण्यपि ।
सौम्ये सप्तमगे विवाहघटनं
नष्टार्थलाभः सुह-
द्भोगावाप्तिविदेशयानसुहृदा-
यानादिकं स्यात् फलम् ॥ ५७ ॥

मदने पापसमेते
दाहादिकमपि गृहस्य भार्यायाः ।
बलवच्छुभसंयुक्ते
गृहकरणं सम्भवेच्च जायायाः ॥ ५८ ॥

---

पाप इति ॥ षष्ठभवनोक्ताङ्गे 'षष्ठराशिर्मेषश्चोच्छिरसि । वृषश्चेन्मुखे'। एवं 'कालाङ्ग' क्रमेण । दोषो वातादिः । सतां सम्भवतां रोगाणाम् ॥ ५६ ॥

पाप इति ॥ अस्य कळत्रस्य । मरणयोगावियोगा दोषतारतम्यवशेन ज्ञेयाः । भर्तुर्वा स्त्रीविषयप्रश्न इति यावत् । उदियादुद्भवेत् ॥ ५८ ॥

पापे रन्ध्रगते तु दासजनरु-
क्प्रत्यूहगुह्यामया
लोकैर्विग्रहणं धनादिहरणं
चोरैर्नृपैर्वारिभिः ।
रोगाश्चारुचिपूर्वकाः स्युरपि च
स्याच्छङ्कनीया मृतिः
सौम्ये रन्ध्रगते तु रोगविरहो
दैर्घ्यं तथा चायुषः ॥ ५९ ॥

अपवादो मठापत्तिरपि पापेष्टमस्थिते ।
मठाद्यालयसम्पत्तिमपि कुर्याच्छुभोऽत्रगः ॥ ६० ॥

पापे धर्मस्थिते स्याद्गुरुजनपितृपौ-
त्रादिरुग्भाग्यहानि-
र्वेद्यं धर्मेश्वरानुग्रहसुकृततपो-
हानयो निष्कृपत्वम् ।
सौम्ये धर्मस्थिते स्याद्गुरुपितृमनस-
श्चेश्वराणां प्रसादो
वृद्धिर्भाग्यस्य धर्मस्य च शुभतपसा-
मार्द्रता पौत्रसौख्यम् ॥ ६१ ॥

**पापे रन्ध्रगत इति** ॥ प्रत्यूहः कर्मविघ्नः । विग्रहणं कलहः । चोरादिभिश्चि-भिर्धनादिहरणम् । रोगविरहः स्वास्थ्यलाभः । अत्रगः अष्टमगः ॥ ५९, ६० ॥

**पापे धर्मस्थित इति** ॥ वेद्यमिति नपुंसकैकशेषः । गुरुपितृमनस इति समाहारद्वन्द्वः । शुभतपसां वृद्धिरित्यन्वयः । आर्द्रता मनसः । दयाबुद्धिरिति यावत् । पौत्रसौख्यं पौत्राणां पौत्रैर्हेतुभिः स्वस्य च सौख्यम् ॥ ६१ ॥

पापे कर्मगते तु कर्मविहति-
दुष्कीर्तिरार्तक्षति-
र्दासालम्बनयोर्विनाशनमपि
स्याज्जानुरुक्प्रोषणम् ।
सौम्ये पद्धतिमण्डपामरगृहा-
द्युत्पादनं कर्मणा
माशालम्बनयोश्च सिद्धिरपि
दासावाप्तिकीर्त्युद्गमौ ॥ ६२ ॥

पापे लाभे स्थितवति सुत-
ज्येष्ठयोरामयाद्य
जघावामश्रवणरुगमु-
ष्योक्तताम्रादिलाभः ।
सौम्ये दुःखप्रशमनसम-
स्तेप्सितार्थलाभाः
संज्ञाध्यायादिषु तदुदित-
स्यापि लाभागमाद्यम् ॥ ६३

**पापे कर्मगत इति** ॥ विहतिर्विघ्नः । स्यादित्येकवचनक्रियायां कर्तृत्वेनान्वयार्थ-मित्येतत्सर्वमित्यध्याहृत्य योजनीयम् । अथवा कर्मविहतिः स्याद्दुष्कीर्तिः स्यादिति पृथग्वा-क्यं कल्पनीयम् । प्रोषणं स्वदेशात्प्रवासः । पद्धतिमण्डपेति तत्पुरुषेण प्रपायाः द्वन्द्व-समासेन मार्गमण्डपयोरुभयोरपि ग्रहणमित्युपदेशः । अमरगृहं देवालयः ॥ ६२ ॥

**पापे लाभ इति** ॥ अमुष्य लाभस्थितपापस्य । ताम्रादिलाभ इत्यत्र ताम्रादि-नाश इति पाठं केचन कल्पयन्ति । पापानामपि लाभभावस्य तृतीयषष्ठभावयोरिवेष्टभाव-त्वाल्लाभ इति पाठ एव युक्तः साम्प्रदायिकश्च । संज्ञाध्यायादीत्यादिशब्देन कर्माजीवाध्या-यदशाफलाध्याययोस्संग्रहः । संज्ञाध्यायोदितताम्रादिलाभः, राज्याद्यागमः, कर्माजीवोदि-तानां तृणकनकादीनां कृष्यादीनां च दशाफलोदितानां नखदन्तादीनामिक्षुक्षीरादीनां च । आदिशब्देन स्वस्वोक्तधात्वादिद्रव्याणां च ॥ ६३ ॥

पापे द्वादशगे तु दुर्व्ययपद-
भ्रंशांघ्रिवामाक्षिरु-
क्पाताः पापमतिप्रवृद्धमिति व-
क्तव्यं फलं पृच्छताम् ।
सौम्ये द्वादशगे व्ययो वितरण-
प्रायो न दुष्टव्ययः
पापानामभवः सतां तु शमनं
चेत्यादिकं स्यात्फलम् ॥ ६४ ॥
सदसत्सामान्यफलं
लग्नादिष्विति पुनर्विशेषफलम् ।
शूरस्तब्धाद्युदितं
होरायामिह विचिन्त्य वाच्यमिह ॥ ६५ ॥
होरायां नोदितं मान्देर्विलग्नादिस्थितेः फलम् ।
विलिख्यते तदप्यत्र दृष्टं ग्रन्थान्तरे क्वचित् ॥ ६६ ॥
रोगी क्षताङ्गो गुळिके तनुस्थे
निन्द्याभिभाषी धनगे विवेषः ।

---

**पापे द्वादशग इति ॥** पदभ्रंशः स्थानभ्रंशः । पातः प्रामादिकः । वितरणं दानम् ॥ ६४ ॥

**सदिति ॥** सामान्यफलं सूर्यकुजादिपापानां चन्द्रबुधादिशुभानां च निर्विशेषमैकरूप्येण फलम् । होरायां बृहज्जातके । इह भावफलविषये । शूरस्तब्धादिभिः पद्यैरुदितं विशेषफलम् । विचिन्त्य सम्यगालोच्य यथोचितम् । इह भावनिरूपणे वाच्यम् । होरायामिहेत्यत्र होरायामपीति केचन पठन्ति । दर्शितपाठे पुनश्शब्दः समुच्चयमर्थतो बोधयतीति तत्वम् ॥ ६५ ॥

**होरायामिति ॥** होरायां वराहमिहिरप्रणीतायाम् ॥ ६६ ।

**रोगीति ॥** सोत्थं सहोदरम् । "द्विषः शतुर्वे"ति विकल्पाद्द्वितीया । अरिभीतः पञ्चमीतत्पुरुषः ॥ ६७ ॥

सोत्थं द्विषन् भ्रातृगते सशौर्यः
सुखादिहीनः सुखगेऽरिभीतः ॥ ६७ ॥
गुर्वादिनिन्दाकृदनात्मजः स्या-
च्छूली सुतस्थे रिपुगे निजद्विट् ।
विषेक्षणो वंशविदूषणश्च
कलत्रहन्ता मदगेऽतिकामः ॥ ६८ ॥
धीमान् बहुव्याधिरनायतायु-
र्विषाग्निशस्त्रैर्मृतिरष्टमस्थे ।
धर्मस्थिते धर्मतपोमनूनः
खस्थे सुकीर्तिः परकार्यसक्तः ॥ ६९ ॥
कुर्याच्च पौरुषयुतो धनवाहनार्थी-
नैश्वर्यवान् भवगते बहुभृत्ययुक्तः ।
दुस्स्वप्नवांश्च कुनखी विकलो व्ययस्थे
लग्नादिभावगतमान्दिफलं प्रदिष्टम् ॥ इति ॥ ७० ॥
लग्नादिगता वपुरा-
द्युपचयहानी शुभाशुभाः कुर्युः ।

---

**गुर्वादीति** । शूली शूलरोगवान् । निजद्विण्निजान् द्वेष्टीति निजा द्विषो यस्येति च । विषेक्षणः, येन दृष्टं सर्वं क्षणान्नश्यति स विषेक्षणः ॥ ६८ ॥

**धीमानिति ॥** अनायतायुरल्पायुः । धर्मतपोमनुभिरूनो रहितः । मनुर्मन्त्रस्त-ज्जप इति यावत् । खस्थे दशमस्थे ॥ ६९ ॥

**कुर्यादिति ॥** इतिना रोगी क्षताङ्ग इत्यादि श्लोकचतुष्टयं ग्रन्थान्तरादुद्धृत्यात्र योजि-तमिति लभ्यते । अनेन परकीयग्रन्थापहारदोषशङ्कया नावकाश इति भावः । इदमीदृशेषु स्थलान्तरेष्वपि समानमित्यनुसन्धीयताम् ॥ ७० ॥

**लग्नादिगतेति ।** वपुरादीनां तनुकुटुम्बसहोत्थेत्याद्युक्तानामुपचयहानी शुभा उप-चयमशुभा हानिमिति यथासंख्यम् । विपरीतमिति षष्ठगः शुभो रोगहानिमशुभो रोगोपच-यमित्यादीति भावः । सत्येन सत्याचार्येण ॥ ७१ ॥

विपरीतं षष्ठमृति-
द्वादशगाः कथितमिति हि सत्येन ॥ ७१ ॥
धूमादिपञ्चदोषाणां विलग्नादिषु संस्थितौ ।
फलं यल्लिख्यते तच्च समं प्रश्ने च जातके ॥ ७२ ॥

कूपे स्यात्पतनं तनौ यदि वच-
स्खालित्यमर्थे स्थितः
पङ्गुर्भ्रातरि सोदरः सुरगृहं
रक्षेत्सुखे मातुलः ।
क्रुद्धः पञ्चमभेऽरिभे खलु भवे-
द्व्याघ्रेण दष्टो मुखे
याति भ्रष्टतया मदे तु निधने
धूमः क्षतः शस्त्रतः ॥ ७३ ॥

धर्मे स्वल्पतपाः खभेशनिहति-
र्लाभे लभेतेतर-
द्रेऽश्मापि प्रवसेद्व्ययेथ तनुगः
स्याच्चेद्व्यतीपातकः ।
श्वित्री वाचि सकौशलः सहजभे
गार्नी सुखेऽश्वागमो
दुःखं पुत्रभवं सुतेऽरिभवने
छिद्रावहोस्तेऽधनः ॥ ७४ ॥

**धूमादीति ॥** धूमादयो धूमव्यतिपातपरिवेषेन्द्रचापकेतवः ॥ ७२ ॥

**कूप इति ॥** धूमस्तनौ यदि कूपे पतनं स्यादिति योजना । पङ्गुर्विकलपादः । भ्रातरि यदि सोदरः पङ्गुः स्यादिति । सुखे यदि मातुल. सुरगृहं रक्षेदिति । मदे यदि भ्रष्टतया यातीति ॥ ७३ ॥

**धर्म इति ॥** अथेति व्यतिपातफलकथनारम्भद्योतकः । श्वित्री श्वित्ररोगवान् । वाचि द्वितीयभाव इति वाचि सकौशल. वाग्विषये समर्थ, इति च तन्त्रेणोभयं गृह्यते । सुखे अश्वागम इति छेदः ॥ ७४ ॥

वेत्ता सर्वकला मृतौ तपसि भा-
ग्योनौ नभस्यग्निभी-
र्लाभे भूपतिसत्कृतो व्ययगृहे
भ्रष्टोथ सर्पान्मृतिः ।
लग्नस्थे परिवेषनाम्नि निधिकृत्स्वे
भ्रान्तिमान् सोदरे
वासो नात्मगृहे सुखे मनसि ब-
द्धोन्तस्थचोरो रिपौ ॥ ७५ ॥

काणोस्ते क्षतिरायुधेन निधने
गुर्वाद्यभक्तो गुरौ
शौदार्यं दशमे भवे तु जळवा-
ग्दीर्घामयो द्वादशे ।
वातव्याध्यवशीकृताखिलतनु-
र्त्रिरिचापोदये
बाधिर्यं वचसि द्विजन्मवधपू-
र्वाकृत्यकृद्विक्रमे ॥ ७६ ॥

वेश्मस्थे गणरक्ष्यहा मनसि वा-
ग्भीमन्त्रवादावुभौ

**वेत्तेति ।** वेत्तीति वेत्ता तृन् । अत एव सर्वकला इति कर्मणि द्वितीया । अथ सर्पान्मृतिरित्युपरि योजना । स्वे धने निधिकृत् । सुखे नात्मगृहे वासः अन्तस्थचोरः स्वगृहमोष्टा ॥ ७५ ॥

**काण इति ॥** काण एकनेत्रः । आयुधेन क्षतिर्व्रणः । जळवाग्वाक्सामर्थ्यविकलः । वातव्याधीत्यादीन्द्रचापफलम् ॥ ७६ ॥

**वेश्मस्थ इति ॥** गणरक्ष्यहा गणेन संघेन रक्ष्यं समुदायधनं हन्तीति । वाग्भिमन्त्रवादौ वाग्भीर्वाच अन्येषाम् । लोकापवादादिति यावत् । भीर्भयम् । वाभीति पाठे बा-

षष्ठे शत्रुभयं मदेङ्गविकलो
भार्यानुभूतिश्च नो ।
बद्धो भूरितराशया प्रकटयन्
जाल्यं चरेदष्टमे
बन्धाद्वात्मजतो मृतिस्तपसि खे
स्वल्पांबरः शीघ्रभुक् ॥ ७७ ॥
लाभे भूरिपराक्रमश्च मृगया-
सक्तो व्यये प्रोषणं
कोपाद्भूमिपतेरथोदयगते
केतौ विकेशोग्रतः ।
दौर्बल्यं गिरिसानुनासिकवचा
वाग्भीश्च सोत्थे द्वयं
वेश्मस्थे सुरभिः सदा हृदि नरः
शूली वधूर्युग्मसूः ॥ ७८ ॥

रो जलाद्भीभयम् । वा भीमन्त्रवादाविति पाठे भीरुर्मन्त्रवादवेत्ता चेत्यर्थः । अष्टमे भूरितराशया बद्धो जाल्यं प्रकटयन् चरेदिति योजना । स्वल्पांबर: वस्त्रदारिद्र्यवान् ॥ ७७ ॥

**लाभ इति** ॥ व्यये भूमिपतेः कोपात् प्रोषणमिति योजना । अथेत्यारम्य केतो: फलम् । अग्रतो विकेश: खलति: । गिरि केतौ स्थिते सति दौर्बल्यम् । सानुनासिकवचाश्च । अत्र दौर्बल्यमिति पूर्वान्वयीति केचित् । अन्ये सानुनासिकवचा इत्युत्तरान्वयीति । वयं तु सानुनासिकवचा इति पदं मध्यमणिन्यायेनोभयत्राप्यन्वेतीति मन्यामहे । द्वितीयभावस्य वाक्स्थानत्वादुत्तरत्र द्वयमित्युपादानाच्च । दौर्बल्यमित्येतत्तु लग्नस्य वपुस्थानत्वात्पूर्वान्वयीति युक्तमित्यास्ताम् । अथवा गिरीत्येतत्तन्त्रेणार्थद्वयपरम् । एवं च केतौ गिरि द्वितीयभावे स्थिते सति । गिरि दौर्बल्यं वाग्दौर्बल्यमिति योज्यम् । सुरभि: कस्तूर्यादिभि: सर्वदा सौरभ्यवान् । हृदि पञ्चमे शूली, शूलरोगवान् । वधूः स्त्री चेद्युग्मसूर्यमळप्रसूः । अत्र केचिद्धृदि शूली हृद्रोगवानिति व्याचक्षते तत्फलं तु केतोश्चतुर्थभावस्थितावेवेत्याभिप्रयन्ति च । तन्मते पञ्चमस्थ केतुफलकथनमाकाशकुसुमसहोदरमेव स्यादित्यहो ते न स्मरन्ति च । उत्तरश्लोके षष्ठादिभावस्थितिफलकथनस्यैव दर्शनाद्धृदीत्येतदर्थद्वयपरमिति परिकल्प्य केतौ

अन्धो रुद्धमरुन्म्रियेत परगे-
हेरौ मदे मोषणा-
द्दन्द्वस्थे विषभोजनात्तपसि वि-
क्रान्तश्च दुर्मृत्युभाक् ।
वृक्षेणाभिहतो निपत्य तरुतो
वा खे मृतिं प्राप्नुया-
दाये शेवधिभाग्व्यये शयनसौ
ख्याभावदुःखव्यथाः ॥ इति ॥ ७९ ॥

लाभनाशादिकं सर्वभावानां यदिहोदितम् ।
कदा तत्संभवेदित्याकांक्षायां काल उच्यते ॥ ८० ॥
फलाप्तिः कल्प्यते येन तस्य कालोयनादिकः ।
तद्भुक्तांशकसंख्याघ्नस्तत्सिद्धौ समुदीर्यताम् ॥ ८१ ॥
लग्ने यावानुदेत्यंशस्तत्संख्याघ्नोयनादिकः ।
कालो वाच्योंशकेशस्य कार्ये वैरिजयादिके ॥ ८२ ॥

हृदि स्थिते सति नरः हृदि शूली हृद्रोगवान् भवेदिति व्याख्याय स्वीयां हृद्रोगसिसाधयिषामेते यदि पर्यपूरयिष्यंस्तर्हि विहितमभविष्यदुचितमित्यास्तां विस्तरः ॥ ७८ ॥

**अन्ध इति** ॥ मोषणादित्यत्र विषभोजनादित्यत्र च म्रियेतेत्यनुषज्यते । शेवधिर्निधिः ॥ ७९ ॥

**लाभेति** ॥ उच्यते फलाप्तिरित्यादिश्लोकाष्टकेन ॥ ८० ॥

**फलाप्तिरिति** ॥ कल्प्यते लाभाद्यभीष्टस्थित्यादिना । येन ग्रहेण । तस्य ग्रहस्यायनादिकः अयनक्षणेत्यादिहोरोक्तः । तद्भुक्तांशकसंख्याघ्नः । फलदाता स्वाश्रितराशौ प्रथनवांशकस्थश्चेत्तदुक्तायनादिरेव कालः । द्वितीयनवांशकस्थश्चेत्स द्विघ्नः एवम् । तत्सिद्धौ फलसिद्धौ । अत्र वर्तमाननवांशके गतगन्तव्यभागैस्त्रैराशिकविधयायनादेरंशोपि ग्राह्य इत्युपदेशः ॥ ८१ ॥

**लग्न इति** ॥ अत्रायं भावः । उदयलग्ने प्रथमनवांश उदेति चेदुदयदंशाधिपतेरयनादिरेव कालः । द्वितीयांश उदेति चेद्द्वितीयांशाधिपतेरयनादिर्द्विघ्नः कालः । एवमुपरि ॥

लग्नाद्यावति भे पापस्तावत्यब्देह्नि मासि वा ।
पक्षे क्षणेयने वर्तौ लग्नेशस्योचिते व्यथा ॥ ८३ ॥
अन्येनापि प्रकारेण कालो ग्रन्थान्तरोदितः ।
शुभाशुभफलप्राप्तौ स च सम्प्रति लिख्यते ॥ ८४ ॥

भावाद्भावपतौ तु दृश्यदलगे
तद्भावलाभोचिरा-
त्त्वादृश्यगते शनैरिति भिदा-
भावात्पुनस्तत्पतिः ।
राशौ यावति तत्समे तु दिवसे
मासेथवा भावना-
थारूढालयगेथवा हिमकरे
भावस्य लाभो भवेत् ॥ ८५ ॥
लग्नं वा फलदातृगेहमथवा
तस्योच्चभं वा यदा
यायादिन्दुरिनोथवाथ फलदो
वाच्यं तदा तत्फलम् ।

**लग्नादिति** ॥ यावति यावत्संख्ये । भे राशौ । पापो मन्दमान्द्यादिकः । तावति तावत्संख्ये । लग्नेशोक्तायनादिकाले । व्यथा रोगाद्यशुभम् । तेन पापेन यदशुभं वाच्यं तदित्यर्थः । एवं शुभेन शुभफलमपि वक्तव्यमेव ॥ ८३ ॥

**अन्येनेति** ॥ स प्रकारान्तरोदितः कालः ॥ ८४ ॥

**भावादिति** ॥ लग्नादिभावषट्कमदृश्यार्धम् । सप्तमादिषट्कं दृश्यार्धम् । भावादृश्यदलगे धननिरूपणे धनाधिपोष्टमादिषट्कस्थश्चेदचिरेणार्थलाभः । धनादिषट्कस्थश्चेच्चिरेण । एवं भावात्पुनरिति—तत्पतिस्तद्भावाधिपतिः । धनाधिपतिर्धनस्थानाद्यावत्संख्ये राशौ स्थितस्तत्संख्ये मासे दिवसे वा । भावनाथारूढेति धनेशाश्रितराशिगते चारवशाच्चन्द्रे धनलाभः एवम् ॥ ८५ ॥

**लग्नमिति** ॥ लग्नमारूढम् । फलदातृगेहमिष्टस्थानस्थित्यादिना यो ग्रहः फलदाता तत्स्वामिकं राशिम् । तस्य फलदातुरुच्चभम् । फलदः फलदाता स्वयम् । तत्फलं तेन ग्रहेण

भूते वा समये भविष्यति यदा
लग्नस्य पापान्वय-
स्तत्कालेऽशुभमादिशेच्छुभसमा-
योगे शुभं पृच्छताम् ॥ ८६ ॥

फलप्रदानसमयाः सर्वेषां व्योमचारिणाम् ।
विद्यन्ते केचनान्येपि लिख्यन्ते तेपि सम्प्रति ॥ ८७ ॥

कालः स्वर्क्षदिनर्तवो निजगृह-
स्थार्केन्दुजीवादयः
सर्वेषां स्वदशानिजापहृतयः
स्वीयोदयादावपि ।
खेटानां रविचन्द्रयोरयनम-
प्यत्रोत्तरं दक्षिणं
दातुं स्याद्गुणदोषसम्भवफलं
सर्वं बुधैरूह्यताम् ॥ इति ॥ ८८ ॥

---

वाच्यं फलम् । पापान्वयश्चारवशादारूढस्य भूतो भावी वा पापयोगः । तत्काले अशुभमिति छेदः । अशुभं धननाशरोगादिकम् । शुभसमायोगे भूते भाविनि वा काले चारवशादारूढस्य शुभयोगे शुभमारोग्यादिकम् ॥ ८६ ॥

**फलेति ॥** लिख्यन्ते—वक्ष्यमाणश्लोकेन ॥ ८७ ॥

**काल इति ॥** सर्वेषां खेटानां कालः स्वस्य ऋक्षं नक्षत्रम्। सूर्यस्य कृत्तिकोत्तरफल्गुन्युत्तराषाढाः । चन्द्रस्य रोहिणीहस्तश्रवणा इत्यादि । दिनं वारः । ऋतुः "शिशिरादयः शशुरुचज्ञग्वादि"रित्युक्तः । अर्कस्यापि ग्रीष्मः । ग्रीष्मोर्कलग्न इत्युक्तत्वात् । निजगृहस्थेति अर्केन्दुजीवा यस्मिन् काले चारवशात्स्वाधिष्ठितराशौ तिष्ठन्ति स कालः । उदयः उदयाद्रिमूर्धारोहणम् । अस्तोत्तमयपर्वतादुदधिपतनम् । एतत्सर्वं सर्वग्रहाणां साधारणम् । सूर्यस्योत्तरायणं चन्द्रस्य दक्षिणायनम् । अयं द्वयोर्विशेषः । एतच्छुभफलदाने अशुभफलदाने च समम् ॥ ८८ ॥

दशाफलादिनेष्टानिष्टादिना चोक्तमत्र यत् ।
संक्षेपेण तदेवेह विस्तरेण निगद्यते ॥ ८९ ॥

मार्तण्डेनिष्टसंस्थे नृपशिवपितृको-
पादिहृत्क्रोडनेत्र-
व्याध्यस्थिस्रावपित्तामयशिखिपशुभी-
ताम्रनाशात्मपीडाः ।
इष्टस्थे सात्त्विकत्वं शिवपितृनृपति-
प्रीतयस्ताम्रलाभ-
श्चार्थाप्तिः कंबळाध्वाटनतृणकनका-
द्यौषधैश्चोद्यमः स्यात् ॥ ९० ॥

कोपो राज्या जनन्या रुगपि कफसमी-
रास्ररुग्वीर्यवत्स्वै-
र्वैरं कोपश्च दौर्गः कृषिधनयशसां
संक्षयोनिष्टगेब्जे ।
राज्ञीदुर्गाप्रसूनां मुदणुतिलगुळा-
च्छादनाज्यद्विजस्त्री-
गोनौरत्नादितोर्थः कृषिधनयशसां
वृद्धिरिष्टस्थितेब्जे ॥ ९१ ॥

**दशेति** ॥ 'दशाफलानि यान्युक्तानी'त्यादिना 'इष्टानिष्टगतत्वेनेत्या'दिना च पद्यद्वयेन यत्पूर्वं संक्षिप्योक्तम् । तदेवेह वक्ष्यमाणैरष्टभिः श्लोकैर्विस्तरतः कथ्यते ॥ ८९ ॥

**मार्तण्ड इति** ॥ कोपादीत्यादिना शापपरिग्रहः । सात्त्विकत्वं सुखदुःखयोः सन्तोषसन्तापाभावः । उद्यम उत्साहशीलत्वम् ॥ ९० ॥

**कोप इति** ॥ रुगपि अपिः कोपं समुच्चिनोति । मातुः कोपरोगौ । वीर्यवत्स्वैः स्वस्मादधिकबलैरात्मीयैश्च वैरम् । दुर्गाया अयं दौर्गः । प्रसूर्माता । अणुर्मन्त्रजपः । आच्छादनं वस्त्रम् ॥ ९१ ॥

प्रद्वेषः सोदराद्यैः क्षितिकनकविना-
शोऽग्निचोरारिभीतिः
सेनानीरक्तकोपज्वरनयनरुजा-
पात्रशस्त्राङ्गभङ्गाः ।
भौमेनिष्टस्थितेऽस्मिन् पुनरितरगते
भूमिहेमायुधाप्तिः
सेनानीतुष्टतास्याद्धनमरिवधतो
भ्रातृतो भूपतेश्च ॥ ९२ ॥

ज्ञे निष्टस्थे तु कोपो हरियुवनृपयो-
र्दुर्वचस्तस्करार्ति-
स्तत्रेष्टस्थेऽश्वहेमक्षितिसुहृदवनी-
देवगुर्वर्थलाभाः ।
अर्थो दौत्याच्च शिल्पैः स्तुतिरपि विदुषां
वर्धनं बुद्धिवृत्तेः
सिद्धिर्धर्मक्रियाणां लिपिगणितधनं
गोपसूनुप्रसादः ॥ ९३ ॥

जीवेनिष्टस्थिते स्याच्छ्रवणतनयरु-
ग्विप्रदेवप्रकोपो
वैरं वा धर्महीनैः पुनरितरगते
वर्धनं धीगुणानाम् ।

---

**प्रद्वेष इति** । सोदराद्यैः, आद्यशब्देन पुत्रमित्रादयो गृह्यन्ते । सेनानीः स्कन्दश्च-मूपश्च । तयो रक्तस्य च कोपः । पात्रभङ्गः पात्रनाशः । शस्त्राङ्गभङ्गः शस्त्रेणाङ्गे व्रणोत्पत्तिः । इतरगते इष्टस्थिते । सेनान्योस्तुष्टता ॥ ९२ ॥

**ज्ञ इति** ॥ तत्र बुधे । इष्टस्थे अश्वेति छेदः । विदुषां कर्तरि षष्ठी । बुद्धिवृत्तिरा-लोचनाशक्तिः । गोपसूनुः श्रीकृष्णः ॥ ९३ ॥

**जीव इति** ॥ दायादा बन्धवः ॥ ९४ ॥

नित्यं यत्नेन वेदाध्ययनमनुजपै-
भूपतेश्चार्थलाभो
लाभो दायादहेमांबरहयकरिणां
विप्रदेवप्रसादः ॥ ९४ ॥
शुक्रेनिष्टस्थिते स्त्रीजनगदवसना-
पायलक्ष्मीवियोगाः
शोकः स्नेहान्निषादक्षितिपतिसचिव-
द्वेषगोरूप्यनाशः ।
इष्टस्थे रूप्यवस्त्राभरणमणिनिधि-

श्रद्धा गीते क्रियादिष्वपि च महिषगो-
मित्रमृष्टान्नलाभाः ॥ ९५ ॥
मन्देनिष्टस्थिते स्यादनिलकफरुजा-
ज्ञानचौर्यादिकोप-
व्यापत्तन्द्रीश्रमा स्त्रीभृतकतनुभुवां
भर्त्सनं व्यङ्गतेर्ष्या ।
इष्टस्थे दुःखनाशः परिणतवनिता-
भोगदासायसां पू-
रश्रेणीग्रामाधिपत्यस्य च वरकमहि-
ष्यादिकानां च लाभः ॥ ९६ ॥

**शुक्र इति** ॥ स्त्रीजनो बन्धुस्त्रियो भार्याश्च । वसनापायो वस्त्रनाशः । लक्ष्मीवियोगः श्रीनाशः । स्नेहात् शोकः स्निग्धजनानामापदुद्भवात्तच्छङ्कया वा मनोदुःखम् । निषादा हीनजातयः । रूप्यं रजतम् ॥ ९५ ॥

**मन्द इति** ॥ रुजा अज्ञानेति छेदः । अज्ञानादिभिर्व्यापत् । स्त्रीभृतकतनुभुवां कर्तरि षष्ठी । व्यङ्गता अङ्गवैकल्यम् । परिणतवनिता वृद्धस्त्री । पुरादीनामाधिपत्यस्य । वरको धान्यभेदः ॥ ९६ ॥

मन्दोदितं स्वाश्रितभेश्वरोक्तं
स्वोक्तं च राहोरथ भूमिजोक्तम् ।
स्वोक्तं निजाधिष्ठितराशिपोक्तं
केतोश्च वाच्यं त्रितयं फलानाम् ॥ ९७ ॥

दोषाः केवलमेव चेद्विपदती-
वाराद्विनिर्दिश्यतां
प्रश्ने केवलमेव चेत्खलु गुणा
वाच्यास्तथा सम्पदः ।
मिश्रत्वे गुणदोषयोरधिकत-
मालोच्य वाच्यं फलं
यद्वा दोषजमेव भाग्यविकलाः
प्रायोत्र लोका यतः ॥ ९८ ॥

निर्याणं विषमामयो निजजना-
पायो गृहप्लोषणं
स्थानभ्रंशनरेन्द्रकोपजनवि-
द्वेषार्थभूरिव्ययाः ।

---

**तन्दोदितमिति ॥** स्वोक्तं "स्वर्भानुस्तनुतापकुष्ठेत्यादि"राहोरुक्तं, ग्रहाक्षत्रेत्यादि [illegible] ॥ ९७ ॥

**दोषा इति ॥** प्रश्ने केवलं दोषा एव चेदिति योजना । गुणदोषयोर्मिश्रत्वे तयोरधिकतामालोच्य गुणाधिक्ये सम्पद्दोषाधिक्ये विपदिति भावः । यद्वा दोषजमेवेति पक्षान्तरम् । भाग्यविकला इति वाक्यं तत्र साधकम् । लोकाः जनाः । एतदादि श्लोकत्रयं फलनिर्देशप्रकारबोधकम् ॥ ९८ ॥

**निर्याणमिति ॥** निर्याणं मरणम् । विषमामयो याप्यव्याधिः । गृहप्लोषणं गृहदाहः । चोरार्थापहृतिश्चोरैरर्थस्यापहरणम् । दोषप्रदान् विहगान् भावांश्चालोक्य । सूर्ये दोषदे राजकोपः । चतुर्थे आग्नेयग्रहसहिते गृहदाहः । इत्यादीति भावः ॥ ९९ ॥

चोरार्थापहृतिश्च मानविहृति-
विधा
वाच्याः स्युर्विपदो विलोक्य विहगान्
भावांश्च दोषप्रदान् ॥ ९९ ॥

आरोग्यं नृपमाननं धनसमा-
यानं सुहृत्संभवः
साफल्यं सकलक्रियासु सततं
चित्तप्रसादोदयः ।
स्थानप्राप्तिजनानुरागसुयशः-
सन्तानलाभादयो
वाच्याः स्युः खलु सम्पदोभिमतभा-
वोपेतखेटोचिताः ॥ १०० ॥

दृढादृढक्रियासत्वाच्छुभाशुभफलं द्विधा ।
मनोवाक्कर्मजं तच्च त्रिविधं तद्विदोच्यते ॥ १०१ ॥

छत्रारूढेन्दुलग्नव्ययरिपुमृतिगाः
सद्ग्रहाः पापखेटा-
स्तेषां केन्द्रत्रिकोणेष्वपि यदि कथये-
द्दुष्कृतं सम्प्रदृद्धम् ।

**आरोग्यमिति** ॥ अभिमतभावोपेतखेटोचिताः सूर्येभीष्टगे राजपूजा । लग्ने शुभ-युते आरोग्यम् । एवं रीत्येति भावः ॥ १०० ॥

**दृढादृढेति** ॥ शुभाशुभफलानि दृढादृढवशाद्द्विविधानि । तद्द्विविधमपि प्रत्येकं मनोवाक्कर्मसम्भवभेदात्त्रिविधम् । तत्फलानामपि भेदोस्ति । एतत्कथनविषयमेतदादिपद्य-पञ्चकम् । त्रिविधं प्रत्येकमिति भावः ॥ १०१ ॥

**छत्रेति** ॥ १. छत्रराशिः, २. आरूढराशिः, ३. चन्द्राधिष्ठितराशिः। ४. उदयल-ग्नराशिः, एषां चतुर्णाम् । व्ययरिपुमृतिगाः शुभग्रहाः केन्द्रत्रिकोणस्थाः पापग्रहाश्च यदि तर्हि

कोपाद्देवस्य शापात्क्षितिविबुधभवा-
द्विद्विषां चाभिचारा-
ल्लोकाक्रोशाच्च तत्स्याद्दृढमपि दृढं
चेति वेद्यं द्विधैतत् ॥ १०२ ॥

चेतोवाक्कर्मजं तद्द्विविधमपि विधो-
स्तत्र होरादिवर्गे
तिष्ठन् खेटः प्रदद्यादृढफलमदृढं
भास्वतो गोचरस्थे ।
खेटे पुण्यस्य पाकः पुनरितरगते
कर्मणोन्यस्य वेद्य-
श्चिचाद्ये तत्त्रिके यद्विबलखरयुतं
तेन दोषानुभूतिः ॥ १०३ ॥

चित्ते वाचि च कर्मणि त्रिषु खरो-
पेतेषु तैश्च त्रिभि-

दुष्कृतवृद्धिर्वक्तव्या। तत्र यथासंख्यं देवकोपः, ब्राह्मणशापः, शत्रूणामभिचारः, लोकाक्रोशः, इति चत्वारो हेतवः। विद्विषामिति कर्मणि षष्ठी। शत्रूनुद्दिश्य स्वकृतेनाभिचारेण दुष्कृतं प्रवृद्धमिति भावः। आभिचारप्रवृत्तौ हिंसादयो दुष्कृतहेतवः सम्भावनीयाः। यद्वा कर्तरि षष्ठी। शत्रुभिः पृच्छकमुद्दिश्य कृतमाभिचारकर्म दुष्कृतहेतुरिति तदर्थः। अन्यकृतकर्मणा स्वस्य कथं दुष्कृतोत्पत्तिरिति चेद्देवकोपादिभिः कथमिति प्रतिवन्द्या समाधीयताम्। देवकोपब्राह्मणशापयोर्हेतुभूतं दुष्कृतमेवेति चेदत्रापि तत्समानम्। शत्रूणामभिचारकरणाय लोकानामाक्रोशकरणाय च हेतुभूतं पृच्छककृतं कठिनकर्म दुष्कृतहेतुरिति। तद्दुष्कृतम् ॥१०२॥

**चेतोवागिति** ॥ होरादिवर्गे वर्गेषु होराया एवात्रविषये प्राधान्यम्। चन्द्रवर्गे दुष्कृतकारिषु ग्रहेषु प्रबलस्तिष्ठति चेद्दृढफलम्। सूर्यवर्गे चेददृढफलम्। गोचरस्थ इत्युपरि योजना। शुभानां व्ययारिमृतीतरे नव। पापानां केन्द्रत्रिकोणेतरे पञ्च गोचराः। इतरगतेऽगोचरगते। अन्यस्य पापस्य। चित्ताद्य इति। पञ्चमे पापयुते मनोदोषेण; द्वितीये वाग्दोषेण; दशमे कर्मदोषेण। पाकः फलानुभवः ॥ १०३ ॥

**चित्त इति** ॥ तैस्त्रिभिः मनोवाक्कर्मभिः कर्मेति कर्ममात्रस्य शुभयोगे; अन्ययोः पापयोगे। पापाश्चेत्सन्तीति पञ्चमे केवलं पापश्चेत्तर्हि कर्मश्रद्धावैकल्यं दुष्कृतहेतुः। तद्दोषो

जीयन्ते दुरितानि कर्म सशुभं
सासच्च चेतो वचः ।
यद्यत्र क्रियमाणकर्मसु मनः-
खेदाद्विरानिष्टया
पापश्चेतसि वाक्च खं च शुभयु-
क्चेत्कर्म चाश्रद्धया ॥ १०४ ॥
तद्दोषस्तनयापदेधिकतरः
पापः परं वाचि चे-
त्सौम्याः कर्मणि मानसे च दुरितं
वाग्दोषतो जायते ।
तद्दोषोधिकमर्थहाथ रिपुनी-
चर्क्षे च मौढ्ये खरा-
स्तुङ्गस्वर्क्षसुहृद्ग्रहेष्वपि शुभा
दोषे गुणे चाधिकाः ॥ इति ॥ १०५

अथ पित्रादिविषयं बन्धनादिकं किञ्चिल्लिख्यते ।

सूर्यात्सप्तमधर्मधीष्वशुभभे
पापौ पितुर्बन्धदौ
कार्यादाधृणतश्च बन्धनमिन-
प्राबल्यदौर्बल्यतः ।

---

श्रद्धादोषः । तनयापदे पुत्रनाशं कर्तुम् । अधिकतरः विशिष्य शक्तियुक्तः । तद्दोषो वाग्दोषः । अर्थहा धननाशहेतुः । अथेति प्रकृतान्तरम् । तच्च न केवलं सुकृतदुष्कृत-निरूपणे । किं तु प्रघट्टकान्तरेष्वपि समानम् ॥ १०४, १०५ ॥

**अथेति** ॥ लिख्यते पद्यपञ्चकेनेति भावः ॥

**सूर्यादिति** ॥ पापौ उभौ । प्राबल्यदौर्बल्यतः प्राबल्ये कार्यादितः दौर्बल्ये ऋणतः । ऋक्षवशात्सूर्याश्रितराशिश्चरश्चेद्दूरे बन्धः । स्थिरश्चेदन्तिके । उभयश्चेत्पथि । नवांशैरपीति सप्तमादिषु त्रिषु पापौ पापनवांशस्थौ तिष्ठतश्चेदपि बन्धनयोगः स्यात् ॥ इदं स्वकारकेति जीवात्सप्तमादिषु चेत्पुत्रस्य ॥ कुजाच्चेद्भ्रातुः ॥ चन्द्राच्चेन्मातुः ॥ एवमादि ॥ १०६ ॥

सूर्यस्थर्क्षवशाच्च दूरसविधा-
घूह्यं नवांशैरपि
स्याद्योगोयमिदं स्वकारकवशा-
द्योज्यं सुतादिष्वपि ॥ १०६ ॥

कृत्वा लग्नं रवेः स्थाने प्रष्टुर्बन्धोत्र कथ्यताम् ।
लग्ने चरस्थिरद्वन्द्वे बन्धो दूरान्तिकाध्वसु ॥ १०७ ॥

वराहमिहिरेणापि स्वहोरायां समीरितम् ।
लक्षणं बन्धनस्याथ तदप्यत्र विलिख्यते ॥ १०८ ॥

व्ययधनसुतधर्मगैरसौम्यै-
र्भवनसमाननिबन्धना विकल्प्या ।
भुजगनिगळपाशभृद्दृगाणै-
र्बलवदसौम्यनिरीक्षितैश्च तद्वत् ॥ १०९ ॥

वेश्याहेतुरृणेन वा व्ययगते
पापे धनस्थे पुन-
र्बन्धो राजकृतोस्य दूषणवशा-
त्पुत्रस्थिते कथ्यताम् ।

---

**कृत्वेति** ॥ अनेन प्रष्टुर्बन्धनमुक्तम् ॥ १०७ ॥

**वराहमिहिरेणेति** ॥ एतदपि प्रकारान्तरेण पृच्छकबन्धनकथनविषयम् ॥ १०८॥

**व्ययेति** ॥ भवनसमाननिबन्धना भवनानि मेषादयः । निबन्धनं बन्धनम् । मेषवृषयोर्बन्धनं पाशेन । मिथुनस्य निगळेन । मनुष्यराशित्वात् । कार्किणि लग्ने गुहादौ क्षेपेण । एवं मेषादीनां योनयो यथा बध्यन्ते तथा प्रष्टुर्बन्धनं कल्प्यम् । भुजगेति दृगाणै-र्लग्नगतैः । द्रेक्काणविशेषा द्रेक्काणाध्यायतोवगन्तव्याः ॥ १०९ ॥

**वेश्याहेतुरिति** ॥ पूर्वश्लोकोक्तव्ययादिभावविशेषैर्बन्धनहेतुविशेषा अनेनोच्यन्ते ॥ अस्य राज्ञः कर्मणो दूषणवशाद्राजकृतो बन्धः । राजद्रोहापराधजन्यः इति यावत् । तद्धेतुः पुत्रहेतुकः । यथा बध्यते, इति । भवनसमानेति पूर्वश्लोकोक्तस्येदं विवरणम् ॥ ११० ॥

तद्धेतुर्नवमस्थिते पितृनिमि-
त्तोयं यथा बध्यते
मेषादिः खलु लग्नगो भुवि तथा
पाशादिभिः पृच्छकः ॥ इति ॥ ११० ॥

अत्र कृष्णीयम् ।

सौरद्रेक्काणे वा
भुजङ्गपरिवेष्टितेथवा लग्ने ।
शशिसौराभ्यां दृष्टे
बन्धनमिह वाच्यमादेशे ॥ १११ ॥

पापक्षेत्रेषु यमे
त्रिकोणचतुरश्रसप्तमेषु गते ।
क्रूरैर्निरीक्ष्यमाणे
बन्धोस्तीत्यादिशेत्क्षिप्रम् ॥ ११२ ॥

अचिरेण चरे मोक्षः
स्थिरभे मोक्षस्तु दीर्घकालेन ।
द्विशरीरगते सौरे
मध्यमकालेन मोक्षः स्यात् ॥ इति ॥ ११३ ॥

---

**अत्रेति** ॥ वक्ष्यमाणश्लोकत्रितयं कृष्णीयस्थम् ॥

**सौरद्रेक्काण इति** ॥ सौरद्रेक्काणे वृषमिथुनान्त्यौ कन्यामध्यम इत्यादयस्त-द्रेक्काणाः ॥ १११ ॥

**पापेति** ॥ यमे मन्दे । क्रूरैः केतुरपि बहुवचनाद्गृह्यते । क्षिप्रमित्यस्तेरादिशतेर्वा विशेषणम् । द्वितीये निस्संशयमित्यर्थः ॥ ११२ ॥

**अचिरेणेति** ॥ चरे चरराशिगते । एवं स्थिरभे ॥ ११३ ॥

असतामशुभफलानां
  भेदः प्रोक्तस्तथैव सौम्यानाम् ।
भेदोभीष्टफलाना-
  मपि कृष्णीये विलिख्यते सोपि ॥ ११४ ॥

भौमो रोगं कुरुते
  भोगं शुक्रस्त्वरोगतां सौम्यः ।
सौरो मरणं दिनकृ-
  न्नाशं चिरजीवनं जीवः ॥ इति ॥ ११५ ॥

द्यूनस्थौ कुजभानुजौ खलु रुजे
  स्यातां तयोः कस्यचि-
द्योगोन्यस्य मदस्थितिश्च मृतये
  रिष्फार्थसंस्थौ च तौ ।
पापाः स्युश्चतुरश्रगाश्च मृतिदाः
  प्रोक्तं त्विदं चिन्तनं
भावानां तदधीशकारकविह-
  ङ्गानां त्रयाणामपि ॥ ११६ ॥

---

**असतामिति** ॥ कृष्णीये प्रोक्त इति योजना। स कृष्णीयप्रोक्तो भेदः ॥ ११४ ॥

**भौम इति** ॥ चन्द्रस्य शुभफलविशेषस्तु राज्ञी दुर्गेत्यारभ्य प्रोक्तचर एवात्र ग्राह्यः ॥ ११५ ॥

**द्यूनस्थाविति** ॥ द्यूनं सप्तमभावः । तयोः कुजभानुजयोः । योगो लग्नस्थितिः । मदः सप्तमभावः । तौ कुजभानुजौ । मृतये इत्यनुषज्यते । इदं द्यूनस्थेत्याद्युक्तम् । एवं च सप्तमभावस्य तदाधिपस्य कळत्रकारकशुक्रस्य वा पापयोगपापदृष्टिसद्भावे उभयपापित्वे चतुरश्रगपापयोर्वा भार्यामरणम् । एवमितरभावेष्वपि चिन्त्यम् ॥ ११६ ॥

चन्द्रे पापयुतेऽथवा भृगुसुते
कामेऽथवा वेश्मनि
स्त्रीभिः स्यात्कलहोऽथ बन्धुकलहः
पापे भवेद्बन्धुगे ।
मातृक्लेशकरो शुभोऽस्तसुखगः
सौम्येऽस्तगे बन्धुगः
पापश्चेदबलावशात्स्वजननीं
प्रष्टाधिकं पीडयेत् ॥ ११७ ॥

विद्याद्दृश्यार्धमास्थानमदृश्यं विजनस्थलम् ।
लग्नाधिपः स्थितो यत्र तद्वासी पृच्छको भवेत् ॥ ११८ ॥

एवं धनादिभावानां स्पष्टतां च निगूढताम् ।
विद्यादीशैः प्रकाशत्वमपि सूर्येन्दुयोगतः ॥ ११९ ॥

अस्योदाहरणम् ।

अदृश्यार्धस्थितेऽस्तेशे प्रष्टुः स्याद्गूढकामता ।
स्पष्टकामो भवेत्प्रष्टा द्यूनेशे दृश्यभागगे ॥ १२० ॥

**चन्द्र इति** ॥ चन्द्र इति चन्द्रशुक्रयोरन्यतरस्मिन् पापयुक्ते चतुर्थसप्तमान्यतरस्थे सति स्त्रीभिः कलहः स्यात् । अस्तसुखयोरुभयोस्तिष्ठन्ताविति भावः ॥ ११७ ॥

**विद्यादिति** ॥ तद्वासी लग्नेशे दृश्यार्धस्थे आस्थानादिवासी । अदृश्यार्धस्थे विजनस्थलवासीति ॥ ११८ ॥

**एवमिति** ॥ विद्यादित्यन्तमतिदेशः । ईशैरिति भावाधिपस्य सूर्येन्दुयोगे भावः प्रकाशः स्यात् । प्रकाशकग्रहौ हि तौ ॥ ११९ ॥

**अस्येति** ॥ वक्ष्यमाणश्लोकेन वक्ष्यत इति शेषः ॥

**अदृश्येति** ॥ शुभोशुभर्क्षं इति । सप्तमाधिपः स्वयं शुभः पापक्षेत्रस्थश्चेन्निकृष्टगृहाद्रूपवतीं भार्यां लभेत । अशुभश्शुभर्क्षस्थश्चेद्धनाभिजात्यादिभिरुत्कृष्टाद्गृहाद्रूपशीलादिभिर्निकृष्टां

शुभोशुभर्क्षे जीर्णे संस्कृतादिभ्यां यदीरितम् ।
तत्सर्वं सर्वभावेषु योजनीयं हि युक्तितः ॥ १२१ ॥

॥ इति प्रश्नमार्गे चतुर्दशाध्यायः ॥



## अथ पञ्चदशाध्यायप्रारम्भः ॥

अथ दैवानुकूल्यादि निरूप्यते ।

देवैर्वा धर्मदेवैः फणिपितृगुरुभि-
ब्रार्ह्मणैः प्रेतभूतैः
पीडा या स्यात्कृता सा तदनु भवति या
दृग्भवा वाग्भवा वा ।
या स्याद्भूयो विषोत्था पुनरिह रिपुभि-
र्या कृता सा च तासां
हेतुश्चापि क्रमेण प्रतिविधिरपि च
प्रोच्यते पृच्छकानाम् ॥ १ ॥

लभेत । मन्दे सप्तमस्थे आत्मनो वयोधिकां परिणतां वा भार्याम् । चन्द्रेऽस्तस्थे नूतनैव भाया सवदा स्यात् । कुजे सप्तमस्थे भार्यायां निपतेत् । शुक्रे धनस्थे वाणी सरसा । इत्यादि सर्वं योजनीयं योज्यम् ॥ १२१ ॥

॥ इति प्रश्नमार्गे चतुर्दशाध्यायः ॥

**अथेति** ॥ पृच्छानिर्गमेत्युद्दिष्टक्रमेण भावनिरूपणानन्तरं क्रमप्राप्तत्वादिति भावः

**देवैरिति** ॥ देवकोपादीनामेकादशानां लक्षणं हेतुः प्रतिक्रिया च क्रमेण निरूप्यन्त इति भावः ॥ १ ॥

देवानुकूल्यं प्रतिकूलतां वा
विचार्य सत्यां प्रतिकूलतायाम् ।
तदानुकूल्याय विधिर्विधेयो
यतस्ततः सम्प्रति कथ्यते तत् ॥ २ ॥
सर्वेश्वराणां धिषणेस्ति नित्यं
सान्निध्यमस्माद्धिषणेनुकूले ।
प्रायोनुकूलास्सकलाश्च देवा-
स्तत्प्रातिकूल्ये सति नानुकूलाः ॥ ३ ॥
अर्कः शंभुरुदाहृतोखिलगृहे-
ष्वर्कों यदि द्वन्द्वभे
द्रेक्काणे प्रथमे गुहोत्र कथितो
विघ्नेश्वरो मध्यमे ।
दुर्गा शीतकरो बली स विबलः
काळी स एवाबल-
श्चामुण्डीप्रमुखास्तमोगुणजुषो
भौमालयस्थो यदि ॥ ४ ॥
कुमारो भैरवादिर्वा स्वाश्रितर्क्षवशात्कुजः ।
चामुण्डीभद्रकाळ्याद्याः स चेद्युग्मसमाश्रितः ॥ ५ ॥

**दैवानुकूल्यमिति** ॥ तदानुकूल्याय दैवानुकूल्याय । विधिरनुष्ठानम् । प्राति-कूल्यप्रतीकार इति यावत् । तद्दैवानुकूल्यम् । कथ्यते निरूप्यते ॥ २ ॥

**सर्वेश्वराणामिति** ॥ सर्वेश्वराणां शिवविष्ण्वादिसर्वदेवानाम् । सान्निध्यम् ॥ कारकत्वमिति यावत् । प्रायो बाहुल्येन । तत्प्रातिकूल्ये तस्य धिषणस्य प्रातिकूल्ये । नानुकूलाः प्रातिकूलाः ॥ ३ ॥

**अर्क इति** ॥ अखिलगृहेषूभयराश्याद्यद्वितीयद्रेक्काणौ विना । अत्र द्वन्द्वभे । स शीतकरः ॥ ४ ॥

**कुमार इति** ॥ स्वाश्रितर्क्षवशात्सात्विकौजराशिषु सुब्रह्मण्यः । सिंहचापावेव सात्विकौ । इतरेष्वोजराशिषु मेषमिथुनतुलाकुम्भेषु भैरवादिः । आदिशब्दात् घण्टाकर्णा-

श्रीरामाद्यवतारविष्णुरितरक्षेत्रेषु चन्द्रात्मजो-
प्यन्त्यत्र्यंशगतः स्थिरे तु भवने यद्येष गोपालकः ।
त्र्यंशेन्त्येत्र स विष्णुरेव हि पुनर्जीवो महाविष्णुर-
प्युक्तोयं ह्यखिलेश्वरोत्र तु भिदा ज्ञेया ग्रहर्क्षान्वयात् ॥ ६ ॥

अन्नपूर्णेश्वरी लक्ष्मीर्यक्षी वा भृगुनन्दनः ।
मन्दश्शास्त्रादिकं दैवं राहुः सर्पगणः स्मृतः ॥ ७ ॥

बाधकाधीश्वरास्सन्तो यदि सूर्यादिखेचराः ।
देवतानां निजोक्तानां पीडां ब्रूयुरनिष्टगाः ॥ ८ ॥

---

दयो गृह्यन्ते । स कुजः तत्रापि सात्विकयोः कुळीरमीनयोः सत्वप्रधाना, वृषकन्ययो राजसयो रजःप्रधाना, वृश्चिकमकरयोस्तामसयोस्तमःप्रधाना ॥ ५ ॥

**श्रीरामेति** ॥ इतरक्षेत्रेषु चरेषूभयेषु च । गोपालकः बालकृष्णमूर्तिः । अत्र स्थिरभवने । विष्णुरेव । विशेषनिरपेक्षं सामान्येन विष्णुः । अयं ह्यखिलेश्वरः । "सर्वेश्वराणां धिषणेस्ति नित्यं सान्निध्यं" इत्युक्तमनेनानुस्मार्यते । भिदा ज्ञेया सूर्यक्षेत्रस्थिति-सूर्ययोगदृष्ट्यादिभिः शिवः । चन्द्रसम्बन्धे दुर्गादिः । एवं कुजादिसम्बन्धे सुब्रह्मण्यादिः । अत्र हि पुनर्जीवो महाविष्णुरपीत्येकं वाक्यम् । अत्र हिः प्रसिद्धौ । प्रसिद्धिहेतुं दर्शयति । उक्तोयं ह्यखिलेश्वर इति । अत्र हिर्यस्मादर्थे । उक्त इति सर्वेश्वराणामिति वचनेन प्रागिति भावः ॥ ६ ॥

**अन्नपूर्णेश्वरीति** ॥ अन्नपूर्णेश्वरी स्वक्षेत्रे । लक्ष्मीरितरशुभक्षेत्रेषु । यक्षी पापक्षेत्रेषु । यद्वा सात्विकग्रहक्षेत्रेष्वन्नपूर्णेश्वरी राजसग्रहक्षेत्रेषु लक्ष्मीः तामसग्रहक्षेत्रेषु यक्षी इत्यालोचनीयम् । एतासां तिसृणां क्रमेण तद्गुणप्राधान्यप्रसिद्धेरिति । किं च शुक्रस्यैवौजराशिस्थितिपुरुषग्रहसम्बन्धादिसत्त्वे विघ्नेश्वरकारकत्वमपि सम्प्रदायसिद्धम् । वृद्धज्यौतिषिकपारम्पर्यसिद्धं चेति विभावनीयम् । शास्त्रादिकं आदिशब्दः किरातमूर्त्यादिपरिग्राहकः । सर्पगणः सर्पबाधानिरूपणस्य वक्ष्यमाणत्वेपि प्रकृतानुगुण्यादिदमुक्तिः ॥ ७ ॥

**बाधकेति** ॥ बाधकाधीश्वराः बाधकस्थानानि दृष्टिबाधाविषये वक्ष्यन्ते । अनिष्टगा बाधकस्थानषष्ठाष्टमव्ययाः । अनिष्टाः । शुभानां तृतीयभावोपि । अत्र बाधकाधीश्वरत्वे सत्यनिष्टगत्वं देवपीडाहेतुरुक्तम् । तथापि तत्रानिष्टगत्वस्यैव प्राधान्यम् । अतः केवलेन ते-ष्वाद्यादिस्थतां देवकोपः । न केवलं बाधकाधिपत्वेन । बाधकाधिपत्यं हि नियतभावि ।

**कोपस्य कारणं कोपशमनाय प्रतिक्रिया ।**
**देवतानां ग्रहारूढस्थानभेदाद्यथोच्यते ॥ ९ ॥**

**सूर्यादीनां ग्रहाणां व्ययभवनगतः**
**पापखेटो यदि स्या-**
**त्स्वोक्तानां देवतानां वपुषि विकलता**
**डुण्डुभस्पर्शनं स्यात् ।**
**संयोगे मान्दिराह्वोरथ रविजयुतौ**
**जीर्णता वाशुचिर्वा**
**योगे भौमस्य रक्षाविहतिरभिहिता**
**रक्षकस्वान्तभेदात् ॥ १० ॥**
**लग्नस्थे पापयुक्ते सति खलु विहगे**
**बिम्बदोषोत्र वाच्यो**

वकोपस्तु न तथा । येन ग्रहेण देवकोप आदिश्यत तद्भुक्तनवांशकसंख्यया देवसंख्या भुक्तांशकाधिपैर्देवभेदो देवावस्था विशेषश्च, ऊहापोहपटुभिर्निरूप्यत इति सांप्रदायिकमेतत् ॥८

**कोपस्येति ॥** उच्यते "सूर्यादीनामित्यादिना; राशयो वै चराद्या" इत्यन्तेन ॥९॥

**सूर्यादीनामिति ॥** ग्रहाणां देवकोपकारकाणाम् । विकलता वैकल्यम् । संयोगे कोपकारकग्रहैस्सहैकराश्यवस्थाने । डुण्डुभशब्दो दर्वीकरादिसर्पसामान्योपलक्षकः । वपुषि वपुश्शब्दो न केवलमर्चायाः । किं तु 'प्रासादोर्चा च विश्वेशितुरिह वपुषी स्थूलसूक्ष्मे' इति समुच्चयोक्तरीत्या प्रासादादीनामपि बोधक एव । जीर्णता क्षेत्रबिंबयोरन्यतरस्य वा । अशुचिरिति भावप्रधानो निर्देशः अशुचित्वमिति यावत् । स्वान्तभेदः ऐकमत्याभावः । 'अत्र व्ययभवनगतः पापखेटो यदि स्यात्स्वोक्तानां देवतानां वपुषि विकलता" इति यदुक्तं सामान्येन तदेव विशेषमुखेन दर्शयति । डुण्डुभस्पर्शनमित्यादिना । इत्यवतार्योपरितनं वाक्यत्रयं व्याचक्षाणाः केचन "संयोगयुतियोगशब्दैर्व्ययभवनस्थितिरेवोच्यते । न तु तत्तद्ग्रहैस्सहैकराश्यवस्थानम् । डुण्डुभस्पर्शनजीर्णताशुचित्वरक्षानाशा विकलताया एवावान्तरविशेषाः" इति प्रत्यवातिष्ठन्ते । तेषां मते कोपकारकग्रहाणां मान्दिराह्वादिभिः सहैकराश्यवस्थाने कारणविशेषो न प्रतिपाद्यते । शास्त्रस्य व्यापकतायाः सङ्कोचश्च भवेदिति पूर्वोक्तमेव ज्यायः ॥ १० ॥

**लग्नस्थ इति ॥** विहगे देवकोपकारकग्रहे । बिम्बदोषः । दोषो द्विधा । छेदभेदादि-

बिंबं भिन्नं हि तस्मिन् धरणितनुभुवा
शुद्धिरेवान्यखेटः ।
बिंबं तत्र प्रदेयं भवति खलु मुदे
खेचरेथालयस्थे
जीर्णं वेश्मालयं तन्नवमथ कुरुतां
दीयतां वान्यवेश्म ॥ ११ ॥

नृत्तं द्यूनगते कुजार्कगृहगे
खेटे प्रदीपः स्मृतः
शुक्रेन्द्वालयगे तु पायसमपि
क्षीरं घृतं वा पुनः ।
बौधे चन्दनमार्यमन्दिरगते
माला प्रसूनानि वा
मन्दर्क्षे खलु भूषणानि वसनं
तत्तन्मुदे दीयताम् ॥ १२ ॥

नैकः । अशुद्धिसम्बन्धादन्यः । तौ विवेचयति । बिम्बमित्यादिना तत्र छेदभेदादिके । प्रतिक्रियोच्यते । 'बिम्बं तत्र प्रदेयं भवति खलु मुदे' इति । अतायं विशेषः । यस्मिन्नङ्गे छिन्ने मनुष्या म्रियेरन् बिम्बस्य तदङ्गच्छेदे नूतनबिम्बनिर्माणपूर्वकं प्रतिष्ठास्नपनादिकं कार्यम् । इतराङ्गच्छेदे तु कनकरजतादिलोहादिनिर्मितफलकबन्धादिना स्थिरीकृत्य नवीकरणक्रियापूर्वकस्नपनादिकमात्रं विधेयम् । अशुद्धौ तु तान्त्रिकाभिमतबिम्बशुद्धिरिति विशेषः । आलयस्थे । आलयश्चतुर्थभावः । पापयुक्त इत्यत्रापि संबध्यते । कुरुतामिति कर्तरि दीयतामिति कर्मणि । प्रक्रमभङ्गः सह्यः । लग्नचतुर्थयोरप्यनिष्टस्थानत्वं बाधकस्थानत्वसद्भावे सम्भवेदिति नाक्षेपावकाशः ॥ ११ ॥

**नृत्तमिति ॥** नृत्तं नटनकार्यम् । प्रदीपस्तत्प्रज्वालनम् । पायसं तन्निवेदनम् । एवमन्यत्रापि यथोचितमूह्यम् । अत्र स्मृत इत्येतत्प्रदीप इत्यनेनान्वेतीति पुल्लिङ्गतया प्रयुक्तम्, नृत्तमित्यादिषु लिङ्गविपरिणामेन प्रसूनानि भूषणानीत्यत्र लिङ्गवचनोभयविपरिणामेन च संबध्यते । अत्र कुजार्कगृहग इत्यादिषु द्यूनगत इति सामानाधिकरण्यसम्बन्धेन केचन योजयन्ति । तदनुपपन्नम् । सप्तमभावस्य स्वतोनिष्टत्वाभावाद्बाधकस्थानत्वं एवानिष्टत्वात्प्रोक्ते-

रन्ध्रगे कर्मसंस्थे च पूजा वा बलिकर्म वा ।
गीतं वाद्यं च रिष्फस्थे तत्तत्प्रीत्यै प्रदीयताम् ॥ १३ ॥

अत्र ग्रन्थान्तरम् ।

लग्नादौ प्रतिबिंबदानजपपू-
जाधामसतर्पण
रुक्शान्तिः प्रतिकारनृत्तबलिदे-
वोपासनैश्च क्रमात् ।
दन्तिस्कन्धसमर्पितेन बलिना-
म्भस्तर्पणेनान्त्यगे
बाधोक्तौ तु तदीश्वरे न च ततः
प्रोक्तं न किञ्चिद्व्यये ॥ इति ॥ १४ ॥

अर्के वार्कगृहस्थे वा विहगेनिष्टसंस्थिते ।
देवाराधनमाधेयं पृच्छतां रोगशान्तये ॥ १५ ॥

ष्वेष्वपि कीर्तनात्प्रतिविधेर्बाधोच्यतां भोगिना''मिति वक्ष्यमाणरीत्यात्रापि प्रतिक्रियाकथन-सामर्थ्यात्सप्तमस्थग्रहस्यापि देवकोपकारकत्वकल्पनं न युज्यते । वैयधिकरण्येनान्वये समुप-पत्तिसद्भावेन लक्षणचारितार्थ्यात्सामर्थ्यस्योपक्षणित्वान्नवांशादिग्रहणेन क्लिष्टगत्योपपात्तिकल्पन-मप्यनावश्यकमेव ॥ १२ ॥

**रन्ध्रगयिति** ॥ कर्मणोपि बाधकस्थानत्व एवानिष्ठत्वम् । पूजा उदयास्तमनादि-पूजाविशेषः । बलिकर्म विजयबल्यादिः ॥ १३ ॥

**लग्नादाविति** ॥ प्रतिबिम्बदानं यथाशक्ति कनकरजतदारुमृत्तिकादिभिः स्वप्रति-बिम्बं निर्माय देवपुरतः समर्पणम् । धाम देवालयनिर्माणम् । आरामेति पाठे देवोद्देशेनो-द्यानप्रतिष्ठापनम् । सन्तर्पणमन्नाभ्यङ्गवस्त्रादिप्रदानेन देवभक्तानां सन्तृप्त्याधानम् । प्रति-कारो देवोद्दिष्टप्रतिकारबलिप्रतिकारहोमादिः । बलिः विजयबलिश्रीभूतबल्युत्सवबल्या-दिकः । दन्तीति दन्तिस्कन्धबलिर्देवप्रसादकः बाधोक्तौ तदीश्वरेन्त्यगे बाधा न । बाधोक्तेति पाठे तदीश्वरे बाधा उक्ता न भवतीत्यन्वयः । अर्थस्तु प्राग्वदेव । तदीश्वरे बाधकेश्वरे । ततः व्ययेन किञ्चित्प्रोक्तं ततो बाधाभावात् । किञ्चित् = प्रतिबिम्बदानादिकम् ॥ १४ ॥

**अर्के वेत्यादि** ॥ देवाराधनं पुष्पाञ्जल्यादिकरणेन । यवागूप्रतिपादनं जातिविशे-

चन्द्रे वा तद्गृहस्थे वा यवागूप्रतिपादनम् ।
शंखाभिषेकधाराद्यमपि देवे विधीयताम् ॥ १६ ॥

देवे दीपसमर्पणं च हवनं
भौमे च तत्क्षेत्रगे
चान्द्रौ तद्गृहगे च नृत्तकरणं
जीवे च तत्क्षेत्रगे ।
कर्तव्यं द्विजभोजनं च वितरे-
द्देवाय हेमादिकं
शुक्रे तद्गृहगे च रोगशमना-
यान्नं प्रदेयं बहु ॥ १७ ॥

मन्दे मन्दगृहस्थे वा विहगेनिष्टसंस्थिते ।
नीचानामन्नदानं स्याद्भूदानं चार्तिशान्तये ॥ १८ ॥

लग्नस्थेषु ससात्स्विनादिषु वदेत्तद्दैवतानुग्रहं
प्रष्टॄणामथ बाधकालयगते धर्माधिपे प्राक्चिरम् ।
यत्किञ्चित्समुपास्य दैवतममुष्योपेक्षया साम्प्रतं
तत्कोपोस्ति भजेत दैवतमदो भद्रार्थमित्यादिशेत् ॥ १९ ॥

षमनपेक्ष्य यवागूदानम् । शंखाभिषेकधाराद्यं आद्यपदेन क्षीराभिषेकपायसनिवेद्यादिपरिग्रहः । हवनं मृत्युञ्जयादिहोमः । नृत्तकरणं देवसन्निधौ नर्तकैर्नृत्तस्याधानम् । हेमादिकं स्वर्णनिर्मितभूषणादिकम् । अन्नं प्रदेयं बहु यथाशक्ति जात्यनपेक्षं बह्वन्नदानम् । नीचानां चण्डालादीनाम् ॥ १५--१८ ॥

**लग्नस्थेष्विति** ॥ ससत्सु शुभग्रहसहितेषु । तद्देवता सूर्यादेः शिवादिः । अदः धर्माधिपसम्बन्धि । यद्वा यत्किञ्चिदिति पूर्वोक्त्या देवविशेषाकाङ्क्षा न । तत्पक्षे उपेक्षितोपासनं दैवतम् । "दैवतानि पुंसिवे"त्यमरवचनाद्दैवतममुमिति पाठोपि साधीयान् ॥ १९ ॥

बाधकाद्यहितस्थाननाथे लाभार्थगे ग्रहे ।
तत्तद्दैवतकोपः स्याद्देवस्वस्यापहारतः ॥ २० ॥

हेतुर्धातुरुदाहृतश्चरगृहे
धातुग्रहे वोदिते
मूलं मूलखगे स्थिरे द्वितनुभे
जीवश्च जीवग्रहे ।
मूलं भूमिमहीरुहाद्यमुदितं
हेमादयो धातवो
जीवा मर्त्यचतुष्पदप्रभृतयो
राशेस्समानाश्च ते ॥ २१ ॥

जीवे हेतौ त्वात्मना कल्पितानां
पश्वादीनामीश्वरस्याप्रदानात्

**बाधकेति** ॥ बाधकादीत्यादिशब्दात् षष्ठाष्टमादिपरिग्रहः । तत्तदिति कोपकारकग्रहसम्बन्धीत्यर्थः ॥ २० ॥

**हेतुरिति** ॥ चरग्रहे मेषकुळीराद्यन्यतमे । धातुग्रहे वा उदिते सति उदयलग्ने तत्स्थे सतीत्यर्थः । धातुर्धातुद्रव्यम् । हेतुर्दैवकोपस्य रोगाद्यनिष्टस्य वा । ग्रहाणां धातुत्वादिभेदोऽनुपदमेव वक्ष्यते । अत्र प्रघट्टके "तम्प्राक्रट्" भाषायां धातुराशौ लग्ने द्वितीये वा सति; धातुग्रहे लग्ने द्वितीये वा स्थिते सति; लग्नाधिपे द्वितीयाधिपे वा धातुग्रहे सति; बाधकग्रहे धातुराशिस्थिते धातुग्रहसम्बन्धयुक्ते वा सति रोगस्य धातुद्रव्यं कारणम् । एवं मूलजीवयोरपि चिन्त्यम् । इति दृश्यते । तत्रैतद्ग्रन्थस्थेतरभागो ग्रन्थान्तराद्गृहीत इत्यनुसन्धीयताम् । उत्तरार्द्धेन मूलादयो विविच्यन्ते । राशेः समाना इत्युक्त्या मिथुनकन्ययोर्मनुष्यः, मीने मत्स्यादि,श्चापोत्तरार्द्धे पश्वादिः । इत्यादि चिन्त्यम् । उदितशब्देनात्र प्राग्लग्नमेव चिन्त्यमिति प्रकाश्यते । तथापि आरूढलग्नमपि निरूप्यते इति सम्प्रदायः ॥ २१ ॥

**जीव इति** ॥ आत्मना कल्पितानां पुत्रादीनुद्दिश्य ईश्वराय दातव्यत्वेन निश्चितानां पश्वादीनाम् । आदिशब्दो गजतुरगादिग्राहकः । अपहृत्यापहारेण । एषां पश्वादीनाम् ।

कोपो देवस्यापहृत्याथवैषां
जीवार्थे वागर्पितानर्पणाद्वा ॥ २२ ॥

धातौ हेतौ देयहेमाद्यदाना-
त्स्वीकाराद्वा देवसंबन्धिनोऽस्य ।
मूले हेतौ भूपिधान्यादिकानां
कोपो देवस्यापहाराद्यवद्यैः ॥ २३ ॥

चन्द्राराह्यसिताः सूर्यशुक्रौ ज्ञार्यौ चरादयः ।
धातुर्मूलं च जीवश्च क्रमेण ग्रहराशयः ॥ २४ ॥

अत्र कृष्णीयम् ॥

चन्द्रारोरगसौरै-
र्धातुर्मूलं किलार्कशुक्राभ्याम् ।
जीवो जीवबुधाभ्यां
मेषाश्विन्यादि धात्वादि ॥ इति ॥ २५ ॥

---

जीवार्थे स्वस्य स्वीयानां वा जीवनार्थम् । वागर्पितानां वाग्दत्तानां जीवेतरवस्तूनामपि । अनर्पणात्क्रियया प्रदानात् । अत्र जीवार्थमिति पदं समासैकदेशे अर्पितेत्यत्रान्वेतीति क्लेशो नित्यसापेक्षतां परिकल्प्य समाधेयः ॥ २२ ॥

**धाताविति** ॥ देयहेमाद्यदानात् देयस्य मनस्सङ्कल्पितत्वादिभिर्दातव्यस्य हेमादेः कनकरजतादेरदानात् । अस्य हेमादेः । अपहाराद्यवद्यैः । आदिशब्दो देयादानादि-ग्राहकः ॥ २३ ॥

**चन्द्रेति** ॥ चन्द्रेत्यादिद्वन्द्वद्वयोक्ता ग्रहाश्चरस्थिरोभया राशयश्च क्रमेण धातुमूलजीवाः । बोध्यबोधकयोरभेदोपचारात्सामानाधिकरण्येनान्वयः । अर्कः शम्भुरुदाहृत इत्यादौ सर्वत्राप्ययं न्यायो यथोचितं प्रचारणीयः ॥ २४ ॥

**अत्रेति** ॥ अत्र धात्वादिनिरूपणविषये ॥

**चन्द्रेति** ॥ अश्विन्यादीति अश्विनी धातुः । भरणी मूलम् । कृत्तिका जीवः । एवमुपर्यपि ॥ २५ ॥

अत्र ग्रन्थान्तरम् ॥

जीवो जीवेन वाच्यः क्षितिसुतफणिनौ
धातुदौ सर्वपक्षे
धातुर्मूलं विकल्पाद्रविरवितनयौ
द्वौ च धत्तो द्वयं च ।
जीवो मूलं च तद्वद्बुधभृगुतनयौ
धातुजीवौ शशाङ्को
लं च जीवः क्रमश इह मता
राशयो वै चराद्याः ॥ इति ॥ २६ ॥

एतदीश्वरकोपनिरूपणविषयम् ॥

धर्मदैवकृता बाधा तदनु प्रोच्यतेत्र तु ।
अर्कः शंभ्वादिभिः पद्यैस्तद्भिदा चावगम्यताम् ॥ २७ ॥

बाधाधीशे गतवति सुखं
बाधकस्थानसंस्थे
वेश्मेशे वा सुखपतिगृहा-
धिष्ठिते बाधकेशे ।

अत्रेति ॥ वक्ष्यमाणश्लोको ग्रन्थान्तरस्थः ॥

जीव इति ॥ जीवो जीवेन वाच्यः सर्वपक्ष इत्यत्रापकृष्य योज्यम् । धातुर्मूलं विकल्पात् सूर्ये धातुः शनिर्मूलम् । द्वौ च धत्तो द्वयं च उभाभ्यामुभयं चिन्त्यमिति पक्षान्तरम् । तद्वद्रविरवितनयवत् । धातुर्मूलमिति । सर्वसम्मतमेतत् ॥ २६ ॥

एतदिति ॥ एत"द्दैवानुकूल्य"मित्यादिनोक्तम् ॥

धर्मदैवेति ॥ अत्र धर्मदैवबाधायां । तद्भिदा धर्मदैवविशेषः ॥ २७ ॥

बाधाधीश इति ॥ अमुकग्रहो बाधाधीशक्षेत्रस्थे । लक्षणाधिक्यतः अस्या बाधाया अधिकता । द्व्यादिलक्षणसद्भावे क्रमेण बाधाधिक्यम् ॥ २८ ॥

वेश्मेशे वाप्यमुकगृहगे
धर्मदैवस्य बाधा
वाच्या प्रष्टुः पुनरधिकता
लक्षणाधिक्यतोस्याः ॥ २८ ॥

चतुर्थनाथस्य तु दैवतं य-
त्तस्यानुरूपं खलु धर्मदैवम् ।
तत्प्रीतये यत्क्रियते स्वपूर्वैः
पूजादिकं तत्तु विधेयमत्र ॥ २९ ॥

कोपे हेतुः प्रतिविधिरमु-
ष्यापि यो देवतानां
पूर्वं प्रोक्तः स इह सुधिया
योजनीयोपि योज्यः ।
बाधासंस्थे शशिनि च रवौ
धर्मदैवस्य बाधा
वाच्या भक्त्या प्रतिसममिदं
पूजनीयं समृध्यै ॥ ३० ॥

**चतुर्थनाथस्येति** ॥ दैवतं यत् अर्कः शम्भ्वादिनेति भावः । तस्य दैवतस्य । अनुरूपं तद्वा तत्सदृशं वेत्यर्थः । तत्प्रीतये धर्मदैवप्रीत्यर्थम् । यत्पूजादिकम् । आदिशब्दो बल्यादिग्राहकः । विधेयमादेष्टव्यं दैवज्ञेन ॥ २९ ॥

**कोपायिति** ॥ देवतानां कोपे इति योजना । अमुष्य कोपस्य । तच्छान्त्यर्थमिति यावत् । पूर्वं देवकोपनिरूपणविषये । स कोप प्रतिविधिश्च । इह धर्मदैवबाधायां । सु-धिया ऊहापोहपटुना दैवज्ञेन । योजनीयः औचित्यमनुसृत्यात यावत् । शशिनि च रवौ तयोरुभयोरन्यतरस्मिन् वा । प्रतिसमं प्रतिसंवत्सरम् । इदं धर्मदैवम् । समृध्यै सन्तानसम्पदादीनाम् ॥ ३० ॥

एतद्धर्मदैवबाधानिरूपणविषयम् । अथ सर्पबाधा निरूप्यते ॥

जीवः सन् बाधकेशो व्ययमृतिरिपुगो
यद्यहेः केन्द्रसंस्थः
सर्पाणामुत्तमानां यदि स सुरगुरु-
र्मान्दिकेन्द्रेऽधमानाम् ।
पीडा वाच्याथ बाधाभवनमुपगते
चोरगे सर्पबाधा
तेषां हीनोत्तमत्वं शशिदिनकरयो-
र्योगवीक्षादिभिः स्यात् ॥ २१ ॥

राहौ बाधकषष्ठरन्ध्रखगते
कार्यो बलिः प्रीतये
वेश्मस्थे खलु चित्रकूटकरणं
गानक्रिया रिष्फगे ।
लग्नस्थे च सुधापयोवितरणं
नृत्तक्रिया वास्तगे
स्थानेष्वेष्वपि कीर्तनात्प्रतिविधे-
र्बाधोच्यतां भोगिनाम् ॥ २२ ॥

**एतदिति** ॥ एतच्छ्लोकत्रयम् । निरूप्यते जीवस्सन्नित्यादिना पुण्याहमप्याचरेदि-त्यन्तेन ॥

**जीव इति** ॥ जीवो बाधकेशः सन्निति योजना । जीवस्य बाधकेशत्वे सति व्य-यमृतिरिपुगत्वे सति सर्पमान्द्यन्यतरकेन्द्रस्थत्वं सर्पपीडालक्षणम् । तत्र सर्पकेन्द्रस्थत्वे उ-त्तमसर्पबाधा । मान्दिकेन्द्रस्थत्वेऽधमसर्पबाधा, इति विशेषः । चोरगे च उरग इति छेदः । तेषां सर्पाणाम् । हीनोत्तमत्व शशिदिनकरयोरिति यथासंख्यम् । योगवीक्षादिभिः आदश-ब्देन केन्द्रात्रिकोणवर्गसम्बन्धः । उभयसम्बन्धे उभयेपि ग्राह्याः ॥ २१ ॥

**राहाविति** ॥ बलिः सर्पबलिः । प्रीतये भोगिनामित्यपकृष्य योज्यम् । चित्र-कूटकरणं चित्रकूटशिलाप्रतिष्ठापनम् । सुधापयोवितरणं सुधा सर्पप्रीत्याधायकभक्ष्यविशेषः ।

स्थानेष्वप्यखिलेषु सर्पबलिरे-
वोदीर्यतां वा पुन-
स्तृप्यन्त्युत्तमभोगिनस्तु बलिना
नीचास्तु गानादिभिः ।
सर्वेषां बलिकर्म तुष्टिकरणं
वक्तव्यमेवं हि वा
सर्पप्रीतिरवश्यमेव करणी-
यारोग्यपुत्राप्तये ॥ ३३ ॥
अण्डानां चरगे किशोरफणिनां
नाशोसुरे द्वन्द्वगे
लग्नस्थे तदिदं द्वयं स्थिरगते
बाधाकरो भूरुहाम् ।

"सुधयोत्तमनागाना"मित्यादिवाक्यम् । पयः क्षीरम् । तयोर्वितरणं दानम् । नृत्तक्रिया वाद्यग इति पाठान्तरम् । एषु निर्दिष्टेषु बाधकरणादेषु । प्रतिविधेः कीर्तनात् । बाधाभावे प्रतिविधिकरणस्यानुपपत्तेः ॥ ३२ ॥

**स्थानेष्विति** ॥ सर्पबलिरेव स्थानविशेषमनपेक्ष्येति यावत् । द्वितीयपादेनोत्तमानां नीचानां च विविच्य प्रतिविधिरुक्तः । तृतीयपादेन बलिः सर्वतर्पक इति प्रथमपादोक्तोपपादनम् । आरोग्यपुत्राप्तये सर्पकोपाद्रोगाद्यनर्थानां सन्ततिनाशस्य च सम्भवः सिध्यति ॥ ३३ ॥

**अण्डानामिति** ॥ पूर्वार्द्धेन सर्पबाधायाः कारणमुत्तरार्द्धेन प्रतिविधिश्च कथ्यते । भूरुहां वृक्षाणां नाशः । अत्रासुरे चरगे अण्डानां नाशः । द्वन्द्वगे किशोरफणिनां नाशश्च बधाकारः । तत् पूर्वोक्तमिदं द्वयम् । असुरे लग्नस्थे न तु यत्र कुत्रापि स्थिते । स्थिरगते भूरुहां नाशो बाधाकरः । अत्र लग्नस्थत्वं नापेक्ष्यते । तदिदं द्वयीमित्युपसंहृतत्वात् । अतो यत्रकुत्रापि राहावुभयस्थे सर्पबाधासत्त्वे वृक्षनाशो बाधाहेतुरिति सिध्यति । अत्र केचिद्बाधाकरे इति पाठं कल्पयन्ति । आकरे सर्पालय भूरुहां वृक्षाणाम् । बाधा शाखाभङ्गमूलच्छेदादिकम् इति व्याचक्षते च । तन्न युक्तम् । दुर्गमार्गप्रदर्शिन्यां भूरुहां नाश इति स्वयं प्रदर्शितत्वात् । किं च अण्डानां किशोरफणिनां चेति समुच्चित्य व्याख्यानमपि न साम्प्रदा-

कृत्वाण्डान्यहयश्च नीचफणिनां
ताम्रेण हेम्ना मुदे
देयान्युत्तमभोगिनां यदि नगा
नष्टाश्च तान् स्थापयेत् ॥ ३४ ॥

एकादश चरे लग्ने द्वन्द्वे सप्त स्थिरे नव ।
अण्डानि चाहयश्चेति सम्प्रदायविदां वचः ॥ ३५ ॥

राहुर्मान्दियुतस्तदस्तनवमा-
पत्यास्थितो वा यदि
प्रष्टुः स्यात्फणिबाधनं क्षितिसुतः
केन्द्रे तु राहोर्यदि ।
बाधाहेतुरुदीर्यतां फणिगृहे
क्षोणीरुहच्छेदनं
भूमेर्वा खननं विहिंसनमहे-
र्वल्मीकभेदोथवा ॥ ३६ ॥

यद्वोद्यानमहीरुहादिदहनं
वा चित्रकूटच्छिदा
राहोः केन्द्रगतः पुनर्यदि शनि-
र्मान्दिश्च नागालये ।

---

यिकं, न च न्याय्यम् । चरग इति मध्यगतपदेन विच्छेदात् । समुच्चायकस्यादर्शनाच्च । किं च द्वन्द्वगे तदिदं द्वयमिति योजनमपि न मनोरमम् । सान्निध्यविरहात् । वक्ष्यमाणवाक्यार्थग्रहणेन द्वयमित्यस्य सम्पूर्तिरपि कुकावकृताविव युज्यते । प्रदर्शितसरणिस्तु निर्बाधा सर्वहृदयङ्गमा च दृश्यते । इत्यलं महाजनाशयसन्तादनसाहसेन । कृत्वेति देयानि "नपुंसकमनपुंसकेने"ति नपुंसकैकशेषः । नीचफणिनां ताम्रेण । उत्तमभोगिनां हेम्ना । इति योजना ॥ ३४ ॥

**एकादशेति** ॥ सम्प्रदायविदां शास्त्रसम्प्रदायवेदिनाम् । समुदायाचाराभिज्ञानामिति च ॥ ३५ ॥

मूत्रोच्छिष्टशकृद्विसर्गकरणं
निष्ठीवनं वान्तिके
चण्डालोपगतिश्च सैरिभ-
करिप्रक्षोभणं वा पुनः ॥ ३७ ॥
मान्दिः केन्द्रगतो यदीह फणिनो
निष्ठीवनं मैथुनं
मूत्रोच्छिष्टशकृद्विसर्ग उत वा
नागालये वान्तिकं ।
वृक्षाद्यं यदि चेत्प्रणष्टमिह तत्
कार्यं पुनः पूर्वव-
त्त्यक्तोच्छिष्टमलादिसंभव इदं
पुण्याहमप्याचरेत् ॥ ३८ ॥

एतत्सर्पबाधानिरूपणाविषयम् । अथ पितृशापादिकं निरूप्यते ॥

भौमर्क्षांशकयोरशीतकिरणो
बाधागतश्चेत् पितुः
शापोऽस्त्येवमुडुप्रभुर्यदि भवे-
च्छापं जनन्या वदेत् ।

---

**राहुरिति ।** तदस्तेति तस्य मान्दिरस्तादिस्थितः । क्षितिसुत इत्यादि हेतुनिरूपणपरम् । शनिर्मान्दिश्च चशब्दः समुच्चये । सैरिभा महिषाः । करिणो गजाः । तैः प्रक्षोभणं सर्पालयस्य बाधा । तत् वृक्षाद्यं पूर्ववत् कार्यम् । संरोप्य रक्षणीयम् । इदमुच्छिष्टमलादिकम् ॥ ३६---३८ ॥

**एतदिति ।** एतत् जीवस्सन् बाधकेश इत्यादिकम् । पितृशापादिकं क्रमप्राप्तः पितृशापस्तदनुसारि मातृशापगुरुशापब्राह्मणशापादिकं चेत्यर्थः ॥

**भौमेति ।** एवं भौमर्क्षांशकयोर्बाधागतः । इनेति इनगृहे पितृशापः । उडुनाथगृहे मातृशापः । इह शापे । तयोः पित्रोः । जीवतोरेवेदं शक्यम् । परलोकगतयोस्तु श्राद्धतर्पणतिलहोमब्राह्मणभोजनादिभिः ॥ ३९ ॥

पित्रोः शाप इनोडुनाथगृहयो-
श्चानिष्टगे स्यात् खरे
शुश्रूषार्थसमर्पणादिभिरिह
प्रीतिं विदध्यात्तयोः ॥ ३९ ॥

पापश्चेद्वाधकस्थः सुरगुरुसहित-
स्तद्गृहे वा द्विजानां
देवानां वास्ति शापो यदि रविभवने
तद्युतो वात्र पापः ।
पूर्वेषां वा गुरूणां यदि स धरणिज-
स्तर्हि शापो महान् स्यात्
प्रीतिं देवद्विजानां स्वगुरुजनमनः-
प्रीणनं चात्र कुर्यात् ॥ ४० ॥

षष्ठेशो नवमे रिपौ नवमपः
स्याच्चेत् पितुर्वा गुरोः
पूर्वेषामथवात्मनः स्वविषयं
विज्ञेयमप्रीणनम् ।
सूर्ये षष्ठगते तदीशसहिते
वा वाच्यमेतत् पितु-
श्चन्द्रेणापि चतुर्थषष्ठपतित-
श्चैवं जनन्या वदेत् ॥ ४१ ॥

**पाप इति** ॥ तदगृहे सुरगुरुगृहे । रविभवने सिंहराशौ । तद्युतो रवियुतः । अत्र बाधकस्थाने । पूर्वेषां पितृपितृव्यपितामहप्रभृतीनाम् । गुरूणां विद्याविदाद्युपदेष्टृणामाचार्याणाम् । स पापः । महान् प्रबलः । प्रीतिमिति प्रतिविधिविधानम् । अत्र शापे ॥ ४० ॥

**षष्ठेश इति** ॥ अप्रीणनं प्रायेण द्वेषः । एतदप्रीणनम् । चतुर्थषष्ठपतितः चतुर्थषष्ठपतिभ्याम् । एवं सूर्यनवमषष्ठपतिभिरिव ॥ ४१ ॥

एतत् पितृशापादिनिरूपणविषयम् । अथ प्रेतबाधा निरूप्यते ॥

अब्ददीक्षादिलोपेन प्रेता याताः पिशाचताम् ।
स्वजनान् बाधमानास्ते चरन्तीति खलु स्मृतिः ॥ ४२ ॥

बाधा प्रेतोद्भवा स्यात् स्थितवति गुळिके
बाधकेनिष्टभे वा
तत्रारर्क्षांशसंस्थो यदि कुजसहितो
मान्दिरारेक्षितो वा ।
प्रेतः स्यादग्निशस्त्रप्रभृतिकृतमृति-
र्मन्दसंबन्ध एवं
मान्देश्चेत् प्रेत एष स्वविरहिततया
दुःखितः सन् परेतः ॥ ४३ ॥

प्राप्तो मृत्युमसौ भुजङ्गदशना-
द्युक्तेक्षिते राहुणा
नद्यादौ पतनेन तोयभवने
मान्दौ सपापान्वये ।

एतदिति ॥ एतत् भौमर्क्षांशकयोरित्यादिकम् । निरूप्यते उद्देशक्रमानुसारेणेति भावः ॥

अब्देति ॥ लोपेन अकरणेन सम्यक्करणाभावेन च । आदिशब्देन संस्कारादि-सापिण्डीकरणान्तानां ग्राह्यत्वमुच्यते । इति स्मृतिरिति स्मृतिसिद्धेत्र न युक्त्यन्वेषणापेक्षेति द्योत्यते ॥ ४२ ॥

बाधेति ॥ तत्र बाधालक्षणे आरर्क्षेति कुजराशिनवांशयोगदृष्ट्यादिसम्बन्ध इति यावत् । प्रकृतिशब्देनोद्बन्धनादीतरदुर्मृतिहेतव उपलक्ष्यते । स्वविरहिततया । अत्र स्व-शब्देनात्मीयज्ञातिधनानि त्रीण्यपि तन्त्रादिना गृह्यन्ते ॥ ४३ ॥

प्राप्त इति ॥ असौ प्रेतः । सपापान्वये मान्दौ तोयभवने स्थिते सति नद्यादौ प-तनेनेति योजना । गुळिकांशराशीवशतः अंशराश्योरोजयुग्मत्ववशात् ॥ ४४ ॥

संबन्धे गुळिकस्य चैवमसतां
प्रेतास्तु दुर्मृत्यवो
विज्ञेया गुळिकांशराशिवशतो
वाच्या च पुंस्त्रीभिदा ॥ ४४ ॥

मान्देर्भ्रात्रादिभावस्थितितदधिपत-
त्कारकेशान्वयाद्यैः
प्रेताः स्युः सोदराद्या स्थिरभवनगते
मन्दजे प्रेत एषः ।
मृत्युं प्राप्तस्त्विदानीं स यदि चरगतः
प्राक्तनः सोथ मान्दौ
वेश्मस्थे तत्पतीक्षान्वयवति गृहसं-
बन्धवान् नान्यथा चेत् ॥ ४५ ॥

प्रेतस्य बालता वाच्या मान्दौ राश्यादिसंस्थिते ।
राश्यन्तस्थे जरत्वेव मध्यस्थे वय ऊह्यताम् ॥ ४६ ॥

चन्द्राद्यालयतद्युक्ते मान्दावेकादिकं वयः ।
प्रेतस्यैके स्वबाल्यादिवशादुडुपतेर्वयः ॥ ४७ ॥

---

**मान्देरिति** ॥ तदधिपतत्कारकेत्यत्र तच्छब्दाभ्यां भ्रात्रादिभावा विवक्ष्यन्ते । आदिशब्देन मातृमातुलपितृप्रभृतयो ग्राह्याः । इदानीमाचरेण । मन्दजे मान्दौ । स मान्दिः । सोथ स प्रेतः । तत्पतिर्वेश्मपतिः । अन्यथा चेद्गृहसम्बन्धवान्नेति योजना ॥ ४५ ॥

**प्रेतस्येति** ॥ बालता त्रिंशदनधिकवयस्कता । राश्यादीति राशिशब्दो नवांशकस्याप्युपलक्षणम् । ऊह्यतामिति "प्रायो मृतनैवातत्सरतः पुरा स्या"दिति वचनानुसारेण राशिकलां नवधा विभज्य त्रिंशत्या कलाभिरेकं वय इति रीत्या । अंशकेष्येवमनुपातः कार्यः ॥ ४६ ॥

**चन्द्रेति** ॥ एकादिकं "एकं द्वे नव विंशतिर्धृतिकृती पञ्चाशदेषां क्रमाच्चन्द्रारेन्दुजशुक्रजीवदिनकृद्दिवाकरीणां समाः" इत्युक्तप्रकारेण । चन्द्रस्य वयोनिर्णये पक्षान्तरमाह— एके इत्यादिना । चन्द्रो बाल्यस्थेत्प्रेतो बालवयस्क, इत्यादि ॥ ४७ ॥

प्रेतस्य जातिजिज्ञासा जायते यदि कुत्रचित् ।
मान्द्यधिष्ठितराश्यंशजातिं तत्र विनिर्दिशेत् ॥ ४८ ॥

प्रेतबाधामिति ज्ञात्वा कार्यावश्यं प्रतिक्रिया ।
आपन्नो यदि तत्प्रीतौ सम्प्रचात्राभियुक्तवाक् ॥ ४९ ॥

कोपः प्रेतस्य कुर्यात्तनयविहननं
चामयादीननर्थां-
स्तत्प्रीत्यै पार्वणाद्यं पितृगणमनसः
प्रीणनं श्राद्धकर्म ।
कुर्याच्च सेत्रपिण्डं तिलहवनमथो
ब्राह्मणानां च भुक्तिं
प्रीताः प्रेतास्त्वमीभिर्विदधति सकलाः
सम्पदः सन्ततिं च ॥ इति ॥ ५० ॥

**प्रेतस्येति** ॥ राश्यंशयोर्जातिः "विप्रः स्यान्मीनराशिर्द्धरणिपतिरजो वैश्य उक्षा, नृयुग्मं शूद्रः स्यात्तत्त्रिकोणं पुन"रिति वक्ष्यमाणेन ज्ञेया । राशीशजातिमिति पाठान्तरम् । तन्मते "विप्रादितः शुक्रगुरू कुजार्कौ शशी बुधश्चेत्यसितोऽन्त्यजाना"मिति ग्रहजातिरवगन्तव्या। राशिपदमंशकस्याप्युपलक्षणम् । अत्र प्रेतबाधानिरूपणे । मान्देरनिष्टस्थानत्वं त्रिकोण-केन्द्राणामपि केचन कल्पयन्ति । मान्दिभुक्तांशकैः प्रेतसंख्यापि निरूप्यते । अंशाधिपैस्त-त्तत्प्रेतजात्याद्यवस्थाश्च । तेषां तुङ्गवर्गोत्तमादिस्थित्या गुणनापि क्रियते। एतत्सर्वं औचि-त्यानुसारेण ग्राह्यमेव ॥ ४८ ॥

**प्रेतबाधामिति** ॥ नो यदि आपत् इति योजना । तत्प्रीतौ पितृप्रीतौ । अभि-युक्तवाक् वक्ष्यमाणश्लोकात्मिका ॥ ४९ ॥

**कोप इति** ॥ तत्प्रीत्यै प्रेतप्रीत्यै । पार्वणाद्यं श्राद्धकर्म । आदिशब्देनाष्टका-पिण्डपितृयज्ञाब्दिकादयः । पार्वणममावास्यायां कर्तव्यम् । पिण्डपितृयज्ञश्च । अष्टकाः पुन-रष्टकाकालकर्तव्याः । आब्दिकं प्रत्यब्दं मरणतिथौ मरणनक्षत्रे वा कर्तव्यम् । अमीभिः पार्वणाद्यैः प्रीताः ॥ ५० ॥

एतत्प्रेतबाधानिरूपणविषयम् ॥

अथ दृष्टिभवा बाधाः कथ्यन्ते तत्र ये नराः ।
नार्योऽथवा ग्रहैर्बाध्याः शास्त्रोक्तान् कीर्तयामि तान् । ५१ ॥

अत्र सारसङ्ग्रहः ॥

लुब्धं क्रूरं भयार्तं हृषितमतिशठं
पूर्ववैरानुबद्धं
नष्टद्रव्यं वियुक्तं प्रतिहतमशुचिं
प्राप्तकालं सरोगम् ।
हासान्धं कान्तदेहं निधिविलयकरं
कातरं भूषिताङ्गं
रात्रावेकाकिनं च स्मरमथनगणा
स्तं पुमांसं ग्रसन्ति ॥ ५२ ॥

---

**एतदिति** ॥ एतदष्टदीप्त्यारभ्योक्तम् ॥

**अथेति** ॥ अथ प्रेतबाधानिरूपणानन्तरम् । कथ्यन्ते उद्देशक्रमानुसारेणेति भावः । ध्या इत्यादिषु "पुमान् स्त्रिया" इति पुल्लिङ्गैकशेषः ॥ ५१ ॥

**अत्रेति** ॥ सारसङ्ग्रह इति प्रश्नविषयः कश्चिद्ग्रन्थः ॥

**लुब्धमिति** ॥ लुब्धं कस्मिंश्चिल्लभ्यवस्तुन्यतिश्रद्धायुक्तम् । क्रूरं निर्दयहृदयम् । षितं स्त्रीभोगादिना हृष्टमनसम् । तृषितमिति पाठे पिपासायुक्तम् । पूर्ववैरमनुबद्धं यस्य म्, आहिताग्न्यादित्वान्निष्ठान्तस्य परनिपातः । कातरं मनोधैर्यरहितम् । प्राप्तकालमिति पदं लुब्धादिषु सर्वेष्वपि सामानाधिकरण्येन सम्बध्यते । तेन लुब्धत्वक्रूरत्वादिषु सत्स्वपि काला- नुकूल्यात्कदाचिद्दृष्टिबाधाप्रसक्तिर्न स्यादित्यर्थोऽवगन्तव्य, इति केचित् । युक्तं चेदम् । अन्यथा लुब्धादीनां दृष्टिबाधावश्यं स्यादित्यभ्युपगन्तव्यं भवेत् । दृश्यन्ते च बहवो लुब्धा- दयो दृष्टिबाधाविहीनाः । विशेषणं चेदं मध्यमणिन्यायेन लुब्धादिषु पूर्वेषु सरोगादिषूत्तरेषु च सम्बध्यते । यद्वा प्राप्तकालत्वे लुब्धत्वादिकारणाभावेऽपि दृष्टिबाधा स्यादेवेति प्रतिपाद- नाय प्राप्तकालमिति पृथगेव ग्रहणम् । लुब्धत्वाद्यभावे दृष्टिबाधा न स्यादिति व्यतिरेकव्या- प्तिरेवात्र न तु लुब्धत्वादिसत्त्वे दृष्टिबाधासत्त्वमित्यन्वयव्याप्तिरिति वा समाधयितामित्यल- मनत्यावश्यकविस्तरेण । ग्रसन्ति बाधन्ते ॥ ५२ ॥

तैलाभ्यक्तां प्रसूतामभिनवसुरतां
मद्यपानानुरक्तां
नग्नामुत्पन्नसत्वां स्मरशरविवशां
मुह्यमानां विहारैः ।
रथ्याशृङ्गाटकस्थामृतुसमययुतां
पुंश्चलीकां रुदन्ती-
मेकान्तां कान्तदेहां स्वयमपि विषमा
गुह्यकाः संस्पृशन्ति ।। इति ।। ५३ ।।

ग्रहाणां पीडने यानि कारणानीह तानि च ।
तेषां स्थानानि चोच्यन्ते परिहाराय दूरतः ।। ५४ ।।

अवमानमृणं वैरं विघ्नो भाग्यविपर्ययः ।
ईश्वराज्ञा च कल्प्यन्ते कारणं ग्रहपीडने ।। ५५ ।।

**तैलाभ्यक्तामिति** ।। उत्पन्नसत्वां गर्भिणीम् । शृङ्गाटकं चतुष्पथम् । विषमा इति गुह्यकविशेषणेन गुह्यकेष्वेव केचन न बाधेरन्, किं तु विषमस्वभावा एवेति लभ्यते । केचन विषमामिति मन्वते पाठम् । ते तु लभ्यार्थविशेषविवरणं मूकिमानमेवाश्रयन्ते च ।।

**ग्रहाणामिति** ।। परिहाराय हेत्वनुत्पादनाय स्थानदूरीकरणाय च ।। ५४ ।।

**अवमानमिति** ।। अवमानं ग्रहाणां तत्स्वामिनामीश्वरस्कन्दादीनां वा निन्दनम् । ऋणं तेभ्यो दातव्यस्य पूजाबल्यादेरदानम् । वैरं यत्किञ्चित्कारणजनितं तेषां पूर्ववैरम् । विघ्नस्तदर्थं कर्तव्यानां कर्मणां विघातः । भाग्यक्षयः कारणचतुष्टयहेतुभूतः । ईश्वराज्ञा तदाज्ञा । अत्रापरेऽवमानं स्वस्यान्येभ्योऽवमानोदयः । ऋणमुत्तमर्णादादीयमानम् । वैरं येनकेनापि तद्भावना । विघ्नस्स्वीयकर्मणां मध्ये विघातः । इति व्याचख्युः । उचितं चेदम् । ग्रहाणां तदीश्वराणां च निन्दादिकं प्रायेण न क्रियते । ग्रहबाधा च दृश्यते । पूर्वजन्मार्जितावमानादिकारणकथनेन क्लिष्टगत्योपपादनं तु नात्यावश्यकम् । व्याख्यातरीत्या गतिसद्भावात् । भाग्यविपर्यये तदन्तर्भावस्य सुवचत्वाच्च ।। ५५ ।।

गुहाश्मकूटशैलाग्रवनोपवनसानुषु ।
सरिद्वापीसर कूपतटाकोदन्वतां तटे ॥ ५६ ॥

सङ्गमे सरिदावर्ते गोकुले शून्यमन्दिरे ।
एकवृक्षे चितास्थाने प्रभ्रष्टे देवतागृहे ॥ ५७ ॥

निधिदेशे रसक्षेत्रे विलद्वारे चतुष्पथे ।
ग्रामसीमान्तरे मातृस्थाने च क्षेत्रतीर्थयोः ॥ ५८ ॥

आरामोद्यानयोः सौधे प्रासादाट्टालकेषु च ।
क्रीडापरा वसन्त्येते स्थानेष्वेतेषु हि ग्रहाः ॥ इति ॥ ५९ ॥

संख्या संज्ञाः स्वभावाश्च सन्ति शास्त्रान्तरोदिताः ।
बाधन्ते ये नरांस्तेषां कथ्यन्ते तेऽप्यनन्तरम् ॥ ६० ॥

पीडका ये मनुष्याणां ग्रहास्ते सप्तविंशतिः ।
अष्टादश महान्तस्तेषूच्यन्तेत्राखिलाश्च ते ॥ ६१ ॥

अमरा असुरा नागा यक्षा गन्धर्वराक्षसाः ।
हेदूकश्चलनिस्तेजभस्मकाः पितरः कृशाः ॥ ६२ ॥

विनायकः प्रलापाश्च पिशाचान्त्यजयोनिजाः ।
भूताश्चेति समाख्याता अष्टादश महाग्रहाः ॥ ६३ ॥

**गुहेति** ॥ यत्र प्रतिध्वनिः श्रूयते तदश्मकूटम् । सदा कर्दमयुक्तः प्रदेशो रसक्षेत्रम् । ...मो नदीसमुद्रयोः क्षेत्राणि देवतालयस्थानानि । तीर्थानि रामसेतुप्रभासप्रमुखानि ॥५९॥

**संख्या इति** ॥ ये नरान् बाधन्ते तेषाम् । अबाधकानां समस्वभावानां संख्या- ...ो नावश्यकत्वान्न कथ्यन्त इति भावः ॥ ६० ॥

**पीडका इति** ॥ अखिला महान्तोऽष्टादश लघवो नव च ॥ ६१ ॥

**अमरा इति** ॥ अमरादिव्यन्तरान्ताः सप्तविंशतिर्ग्रहाः । तत्राद्या अष्टादश महान्त ...ऽे लघवः ॥ ६२--६४ ॥

अपस्मारो द्विजो ब्रह्मराक्षसोवनिभुग्विशौ ।
वृषलो नीचचण्डालौ व्यन्तराश्च नव ग्रहाः ॥ ६४ ॥

रुद्रक्रोधोद्भवा एते ह्यन्ये च बहवो ग्रहाः ।
बलिकामा रन्तुकामा हन्तुकामा इति त्रिधा ॥ ६५ ॥

एते ग्रहाः पुनर्ज्ञेयाः सौम्यताग्नेयतावशात् ।
द्विधा च तद्भिदा ज्ञेया ग्रहतास्थितिभेदतः ॥ ६६ ॥

अत्र ग्रन्थान्तरम् ॥

बाधन्ते हन्तुकामाः कतिचन कतिचि-
देवता भोक्तुकामाः
पुंनारी रन्तुकामाः पुनरपि कतिचि-
त्तासु या हन्तुकामाः ।
घ्नन्त्येवैता गृहीत्वा बलिमिह विसृज-
न्त्यत्र या भोक्तुकामा
रन्तुं या बाधमाना अपि च बलिशतै-
र्नैव ता संत्यजन्ति ॥ इति । ६७ ॥

देवग्रहादिभिः प्रोक्तं पीडितानां पृथक्पृथक् ।
लक्षणं तेन च ज्ञेया ग्रहभेदा हि तद्यथा ॥ ६८ ॥

**रुद्रेति ।** एते उक्ताः अन्ये बहवोनुक्ताश्च । बलिकामादिभेदेन सप्तविंशतिरप्येते त्रिधा भवन्ति ॥ ६५ ॥

**एतायिति ॥** एते सप्तविंशतिः सौम्याग्नेयभेदेन द्विप्रकाराः । तद्भिदा तेषां ग्रहाणां भिदा । ग्रहतास्थितिभेदतः । "भानो रुद्रगणः" इत्यादि वक्ष्यमाणवशात् ॥ ६६ ॥

**अत्रेति ॥** वक्ष्यमाणश्लोको ग्रन्थान्तरस्थः ॥

**बाधन्त इति ॥** पुंनारीर्बाधन्त इति योजना । तास्वित्यादिना हन्तुकामादीनां विशेषः कथ्यते । तासु देवतासु । नैव ताः सन्त्यजन्ति । नैव मारयन्ति चेति भावः ॥६७॥

**देवेति ॥** तेन लक्षणेन । ग्रहभेदा अमरासुरादयः ॥ ६८ ॥

स्नातः सुगन्धस्तेजस्वी हृष्टो देवालये रतः ।
अल्पवागल्पविण्मूत्रः स्वल्पभुक्तिरकोपनः ॥ ६९ ॥
गन्धमाल्यप्रियो धीरः सौम्यदृष्टिः सुरग्रही ।
देवान्निन्दन् स्तुवन् दैत्यान् ब्रह्मद्विड्जिह्मलोचनः ॥ ७० ॥
दुष्टात्मा निर्भयो दृप्तो गर्वहासी सविस्मयः ।
मुद्रां बध्नन् प्रभूताशी सकम्पाङ्गोऽसुरग्रही ॥ ७१ ॥
पानीयगुळदुग्धादिपिपासुः सृक्कणी लिहन् ।
भ्रुविप्रसर्पिरक्ताक्षः क्रोधालुरचले वसन् ॥ ७२ ॥
सकम्पाङ्गो दशन् दन्तान् पुष्पेच्छुर्नागपीडितः ।
धीरस्त्यागी मनोगामी रक्तकल्पानलेक्षणः ॥ ७३ ॥
भोगान्धो गन्धवाहाशी श्रेयो यक्षग्रही क्षमी ।
अल्पवाग्गन्धमाल्यादिप्रियः सङ्गीतनर्तनः ॥ ७४ ॥
पुळिनादौ वसन् जानन् परोक्षं मुखवाद्यकृत् ।
पिबन् क्षीरं हसन् क्रीडन् हृष्टो गन्धर्वपीडितः ॥ ७५ ॥

---

**स्नात इति** ॥ स्नात इत्यारभ्य सौम्यदृष्टिरित्यन्तं देवग्रहाविष्टस्य, देवान्निन्दन्नित्यारभ्य सकम्पाङ्ग इत्यन्तमसुरग्रहबाधितस्य च लक्षणम् । सुगन्ध इत्यत्रैकान्तग्रहणान्नेत्वम् । ब्रह्मद्विड्ब्रह्मशब्देन ब्राह्मणो लक्ष्यते । मुद्रां बध्नन् गामुद्रादिकं हस्ताभ्यां प्रदर्शयन् । प्रभूताशी भूरिभक्षणशीलः ॥ ६९–७१ ॥

**पानीयेति** । सृक्कण्योष्ठप्रान्तौ । सङ्गीतनर्तनः सम्यग्गीतनर्तने यस्य सः । मुखवाद्यकृन्मुखेन वाद्यं वाद्यशब्दं करोतीति तत्कृत् । भ्रुविप्रसर्पिरक्ताक्षः भ्रुवि प्रसर्पिणी रक्ते चाक्षिणी यस्य सः । अलुक् । भ्रुविप्रसर्पी इति पाठान्तरम् । सदा सञ्चरणशील इति तदर्थः । क्रोधालुः क्रोधशीलः । आलुप्रत्ययस्य गतिश्चिन्त्या । बहुलग्रहणेन वा निष्पत्तिः । अथवा "विप्रसम्भ्यो ड्वसंज्ञाया"मित्यत्र मित्रद्र्वादेरपीष्टत्वात्तस्य चाकृतिगणत्वादाङ्पूर्वकत्वकल्पने क्रोधं आ समन्तात् लात्यादत्ते क्रोधालुरिति व्याख्येयम् । मनोगामी मन इव गन्तुं शीलमस्य शीघ्रगामी इत्यर्थः । रक्तकल्पानलेक्षणः रक्तकल्पे ईषदसमाप्तरक्ते अत एवानलसदृशे च ईक्षणे यस्य सः । भोगान्धः भोगेन विविधसुखानुभवेनान्धो विवेकशून्यः । गन्धवाहाशी गन्धवाहं वायुमाशतुं शीलमस्येति । निराहार एव कदाचिद्दिनानि यापयतीत्यर्थः ॥ ७२—७५ ॥

प्रधावन्नात्ममांसानि खादन्मद्यासृजी पिबन् ।
शून्यग्रामोषितस्ताम्रो निर्लज्जो निष्ठुरः सरुट् ॥ ७६ ॥
शौचद्वेषी निशाचारी बलवान्राक्षसग्रही ।
स्मेरास्योधोमुखः किंचिदपश्यन्छन्नमुष्टिकः ॥ ७७ ॥
जानुन्यस्तशिराः क्रूरदृष्टिर्ब्रह्मग्रही नरः ।
विट्पङ्कलेपी निश्शौचो भस्मशायी रुदन् हसन् ॥ ७८ ॥
स्त्रीद्रोही त्रासयन् जन्तून् सदाश्नन् कलहप्रियः ।
रागी परार्थहृत् क्रुद्धः स्वल्पवाक्कश्मलग्रही ॥ ७९ ॥
निस्तेजा विह्वलः पश्यन्निर्निमेषणमब्रुवन् ।
परिहासितवैद्यश्च निस्तेजोग्रहपीडितः ॥ ८० ॥
असङ्गतार्थवाग्द्वेषी शीताङ्गस्तिर्यगीक्षणः ।
भुक्तावतृप्तः कृष्णाङ्गो निर्मलो भस्मकग्रही ॥ ८१ ॥
दर्भेषु निर्वपन् पिण्डान् प्रेतानां सोदकक्रियः ।
तिलमांसगुळादीनि कांक्षन् शान्तः पितृग्रही ॥ ८२ ॥
एकान्तवासी शुष्काङ्गः प्रधावन् दारुणध्वनिः ।
पृष्टो न व्याहरन् भुक्तो न तृप्यति कृशग्रही ॥ ८३ ॥
मार्जन् पादरजो मुञ्चन् शूल्कारान् छर्दयन् सदा ।
दन्तान् कटकटायन्यः स ग्रहः स्याद्विनायकः ॥ ८४ ॥

---

**प्रधावन्निति** ॥ प्रधावंस्तत्र तत्र धावनशीलः । शौचद्वेष्यशुचिरन्येषां क्षुधितवासहिष्णुश्च । छन्नमुष्टिकः मुष्टिं गृहीत्वा वस्त्रादिनाच्छाद्य वर्तमानः। त्रासयन्भीषयन् ॥७६–७९

**निस्तेजा इति** ॥ निर्निमेषणमिति दर्शनक्रियाविशेषणम् ॥ ८० ॥

**असङ्गतेति** ॥ असङ्गतार्थवागसङ्गतार्थान्योन्यसम्बन्धरहिताभिधेयं वाग्यस्य सः॥८१

**दर्भेष्विति** ॥ निर्वपन्ननवसर इति शेषः ॥ ८२ ॥

**एकान्तवासीति** ॥ पृष्टः पृष्टोपि ॥ ८३ ॥

**मार्जन्निति** ॥ अत्र बाधितचेष्टा बाधके ग्रहे आरोप्य व्यवह्रियन्तेति बाधितबाधकयोरभेदोपचारेणोपपत्तिः कल्पनीया । सर्वत्रापि बाधकग्रहस्य स्वभाव एव बाधितेनानुक्रियत इति तत्त्वं रहस्यमवगन्तव्यम् ॥ ८४ ॥

भञ्जन् गात्राणि शुष्काङ्गो नृत्यन् स्वस्थः सकृद्धसन
बहुभुग्बहुभाषी च प्रलापग्रहपीडितः ॥ ८५ ॥
खररूक्षस्वरः शून्यभिन्नसेवी प्रलापकः ।
दुर्गन्धश्चाशुचिर्लोलः पिशाचग्रहपीडितः ॥ ८६ ॥
तर्जयन् लोलरक्ताक्षो लुब्धो विट्पङ्कलेपकः ।
बहुभुक्साङ्गकम्पश्च दीनवागन्त्यजग्रही ॥ ८७ ॥
बहुभुक्चिन्तितं जानन् पिशिताशी चलेक्षणः ।
निर्मर्यादो मेषगन्धः स्थिराङ्गो योनिजग्रही ॥ ८८ ॥
प्रहरन् जनमारोहन् वृक्षानुचापशब्दवाक् ।
सर्वानुकारी विकृतो भवेद्भूतग्रही नरः ॥ ८९ ॥
फेनोद्गारी विवृत्ताक्षो निःसंज्ञः पतितो भुवि ।
सङ्कोचयन् कराङ्घ्र्यादि पीताङ्गो दशनान् दशन् ॥ ९० ॥
लब्धसंज्ञः पुनः स्वस्थः स्यादपस्मारवान्नरः ।
शुक्लमाल्यांबरादीच्छुः पठन् वेदं कुशादिधृक् ॥ ९१ ॥
विप्रानुष्ठानकृच्छुद्धो भजन् देवान् द्विजग्रही ।
प्रायस्तुल्यक्रियो विप्रग्रहेण ब्रह्मराक्षसः ॥ ९२ ॥

**भञ्जन्निति** । सकृद्धेतुं विना कदाचित् ॥ ८५ ॥

**खरेति** ॥ प्रलापकः प्रलपत्यनर्थकं वदतीति प्रलापकः ण्वुलन्तः ॥ ८६ ॥

**तर्जयन्निति** ॥ लुब्ध आवश्यकमपि व्ययमकुर्वन् ॥ ८७ ॥

**बहुभुगिति** ॥ जनं स्वसान्निधिमागतम् । अपशब्दश्च्युतसंस्कारः ॥ ८८, ८९ ॥

**फेनोद्गारीति** ॥ अपस्मारवानपस्माराख्यग्रहबाधितः । रोगनिरूपणे प्रागपस्माराख्यो रोगः "विस्रस्ताङ्गः पतति सहसा भूतले नष्टसंज्ञ" इत्यादिना तल्लक्षणं च प्रोक्तम् । स रोगोऽयं ग्रहश्चैक एवेति केचित् । प्रकृतग्रहबाधैव रोगोत्पादहेतुरिति तत्त्वम् ॥ ९०–९२ ॥

रक्तपुष्पादिभृङ्नित्यं धावन्वल्गन् हसन् लिखन् ।
सहिष्णुः क्षत्रचेष्टाकृद्गायन् गर्जन् नृपग्रही ॥ ९३ ॥
जृम्भमाणो हसन् क्रन्दन्नाक्रोशन् कर्षको वणिक् ।
नृत्यन्नवाच्यवाकुप्यन्दुर्विनीतो विशातुरः ॥ ९४ ॥
विण्मूत्रादिभुगव्यक्तवाक्स्वेदूस्पृग्रुदन् हसन् ।
विप्रद्विट्स्त्रीप्रियः साङ्गकल्पः स्याद्वृषलग्रही ॥ ९५ ॥
मिश्रचिह्ना स्मृता नीचचण्डालव्यन्तरा ग्रहाः ।
मुञ्चामि किञ्चिद्देहीति ब्रुवन् गायन् हसन् मृदु ॥ ९६ ॥
न मुञ्चामीति वागात्मप्रहर्ता परुषं वदन् ।
सौम्याग्नेयग्रहावेतौ हन्तुकामं विवर्जयेत् ॥ ९७ ॥
निपतन् वप्रवृक्षादेर्वह्न्यगाधांभसो विशन् ।
विधून्वन्मूर्धजान् हृष्टो वैद्यं पश्यन् प्रभाषितः ॥ ९८ ॥
रुदन्नृत्यति रक्ताक्षो हन्तुकामग्रही नरः ।
पश्यन् समन्तादुद्विग्नः शूलदाहज्वरार्दितः ॥ ९९ ॥
क्षुत्तृष्णार्तः शिरोरोगी देहि देहीति यो ब्रुवन् ।
उद्विग्नः स्त्रीतनौ क्रीडन् प्रियवाद्यनुपद्रवी ॥१०० ॥

---

**रक्तेति** ॥ कर्षको वाचा कर्मणा च कृषिं प्रवर्तयन् । वणिग्वाणिज्यप्रवृत्तिमभिनयन् ॥ ९३, ९४ ॥

**विडिति** ॥ विप्रान् द्वेष्टीति विप्रद्विट् ॥ ९५ ॥

**मिश्रचिह्ना इति** ॥ मिश्रचिह्ना इतः पूर्वं चतुर्विंशत्या ग्रहैर्बाधितानां यानि दर्शितानि लक्षणानि तान्येव नीचादिषु त्रिषु मिश्राणि दृश्येरन्निति भावः । मुञ्चामीत्यर्धं सौम्यग्रहबाधितानां, नमुञ्चामीत्यर्धमाग्नेयग्रहबाधितानां च लक्षणम् । हन्तुकामं विवर्जयेत् सोसाध्य इति भावः ॥ ९६, ९७ ॥

**निपतन्निति** ॥ वप्रवृक्षादेरादिशब्देन शैलादिपरिग्रहः । वह्न्यगाधांभः अगाधमम्भः येषु ते कूपतटाकादयोऽगाधाम्भसः । बहुव्रीहिगर्भ उत्तरपदद्वन्द्वसमासोयम् । हृष्टः स्वतो हेतुं विनैव हृष्यन् वैद्यं प्रतिक्रियाकर्तारं मन्त्रिणं च । पश्यन् हेतौ शता । प्रभाषितोधिक-

स्नातो माल्याद्यलङ्कारी रतिं यो याचतेऽशुचिः ।
बलिकामो रन्तुकामश्चैतौ साध्यौ तु मन्त्रिणा ॥ १०१ ॥

चेष्टाभिरेवं पृथगीरिताभि-
र्विज्ञाय भूतान्यखिलानि मन्त्री ।
तेषां चिकित्सां विदधातु तत्त-
द्योग्याभिरव्यग्रमनाः क्रियाभिः ॥ इति ॥१०२॥

ग्रहाणां पुनरेतेषां खेटसंबन्ध ईर्यते ।
तथैव बाधकस्थानमपि शास्त्रान्तरोदितम् ॥ १०३ ॥

अत्र सारसङ्ग्रहः ।

भानो रुद्रगणोग्रदेवभुजगा-
धीशा विधोः किन्नरा
यक्षाद्या ग्रहपन्नगाः क्षितिसुत-
स्योग्रा हि रक्षोग्रहाः ।

।षणं कुर्वन् । पश्यन्नित्यादिश्लोकेन बलिकामलक्षणम् । उद्विग्न इत्यादिना रन्तुकामलक्षणं ोक्तम् । याचते अशुचिरिति छेदः । बलिकामो बलिचिकित्सादिभिर्बाधितं विसृज्य रक्षेत् । ‍तुकामस्तु बलिचिकित्सादिभिर्न विसृजेत्; किंत्वन्तरान्तरा दत्ताभिर्बलिपूजाभिरुपद्रवमकु- ‍त्यजंश्च निवसेत् ॥ ९८—१०१ ॥

**चेष्टाभिरिति** ॥ भूतानि देवासुरादिग्रहभेदं सौम्याग्नेयाविशेषं बलिकामादिभेदत्रयं ।ति भावः । तत्तद्योग्याभिस्तेषां तेषां देवासुरादीनां सौम्याग्नेययोर्बलिकामादीनां च । ।व्यग्रमनास्तदेकतानमानसः । क्रियाभिर्बलिपूजादिभिः ॥ १०२ ॥

**ग्रहाणामिति** ॥ खेटसम्बन्धो "नेन ग्रहेणायं ग्रहो ज्ञातव्य" इतीति भावः ॥१०३॥

**अत्रेति** ॥ अत्र खेटसम्बन्धविषये ॥

**भानोरिति** ॥ उग्रपदं भूतभुजगाधीशयोर्विशेषणम् । ग्रहपन्नगा इत्यन्तं विधोः । ‍ता भैरवदेवताश्च इति पूर्ववत् योजना । अट्टाला गृहविशेषाः । शुभग्रहा देवविनायकादयः । ‍नेस्तेजसंज्ञा निस्तेजःशब्दो यद्यपि सान्तस्तथापि सज्ञात्वेऽदन्तोऽप्युपपद्यते । यद्वा निस्तेजा ‍ास्तेजाक्षरयुक्ता (अर्शादित्वं कल्प्यम्) संज्ञा येषां ते निस्तेजसंज्ञा निस्तेजसः इति व्याख्ये

भूता भैरवदेवताश्च शशिज
स्याट्टालगाः किन्नरा
वागीशस्य शुभग्रहाः शुभतरा
नागास्त्रिमूर्त्यादयः ॥ १०४ ॥
यक्षीमातृभुजङ्गमा भृगुसुत-
स्यार्कात्मजस्याशुभा
भस्मारूक्षपिशाचकश्चलमुखा
निस्तेजसंज्ञा ग्रहाः ।
राहोस्सर्पपिशाचपन्नगभूतः
प्रेतग्रहाद्युद्भवाः
केतोस्तेऽखिलदेहिनां विदधते
रोगाननिष्टर्क्षगाः ॥ इति ॥ १०५ ॥

सन्तानदीपिका च ।

बाधकस्थानगे सूर्ये शैवभूतादिपीडनम् ।
चन्द्रे दुर्गाकृतं रोगं धर्मदैवकृतं गदम् ॥ १०६ ॥

यम् । सर्पपिशाचपन्नगान् बिभ्रत्यन्तः प्रवेशयन्तीति तद्भृतः तदाद्या इति यावत् । सर्पपन्न-गयोरन्यतरो नागग्रहवाची । इतरस्तु स्वेन पूज्यमान गृहारामस्थं सर्पं बोधयतीति कल्पनीया गतिः । आनिष्टर्क्षगा अनिष्टगैः सूर्यादिभी रुद्रगणादिबाधया रोगा वक्तव्याः । एतच्छ्लोकद्वयो-क्तेषु केचन देवग्रहादिषु सप्तविंशतावन्तर्भूताः । इतरेऽनन्तर्भूताः । अतः कथमनेन ग्रहभेदो नि-र्णीयतामिति चेत्सत्यम् । उक्तग्रहसम्बन्धेन सामान्यतो बोध एव जायते । न तु देवासुरा-दीनां विविच्य ज्ञानमुत्पद्यते । तत्तु पूर्वोक्ततत्तल्लक्षणवशादेव । त्रिमूर्त्यादयः त्रिमूर्तयः ब्रह्म-विष्णुशिवा उच्यन्ते । तेषां ग्रहकोटिगणना सर्वथानुपपन्नैव । अतो जीवेऽनिष्टस्थे दैवप्रा-तिकूल्यं रोगहेतुरित्येतावदेव वक्तव्यम् । हिशब्दः प्रसिद्धौ । तेन संज्ञाध्यायादिषु निर्दिष्टैः सूर्यादीनां स्वभावविशेषैरेव रुद्रगणादिकल्पनाकृतेत्यवगन्तव्यम् । एवमत्र सामञ्जस्याधानाय क्लिष्टः पन्थाः समाश्रयणीयो दृश्यते । विस्तरभयादनत्यावश्यकत्वबुध्या च न प्रपञ्च्यत इत्यलम् ॥ १०४, १०५ ॥

बाधकेति ॥ शैवभूतादिपीडनं शैवभूताद्यावेशजन्यरोगाः । दुर्गाकृतं दुर्गाकोपजन्यम् । एवं धर्मदैवादावपि व्याख्येयम् । वासिनां निपीडनमित्यनुषज्यते । भूतनाथानां शास्त्राकि-

भौमे स्कन्दकृतं व्याधिं भैरवादिनिपीडनम् ।
सौम्ये गन्धर्वयक्षादिविमानस्थानवासिनाम् ॥ १०७ ॥
जीवे ब्राह्मणशापं च देवानामपि कोपनम् ।
शुक्र यक्षीकृतं रोगं ब्रह्मराक्षसपीडनम् ॥ १०८ ॥
मन्दे तु भूतनाथानां शैवानां पीडनं तथा ।
राहौ सर्पकृतं रोगं केतौ चाण्डालदैवतम् ॥ १०९ ॥
मान्दौ प्रेतकृतं रोगं प्रवदेन्मतिमान् नरः ॥ इति ॥ ११० ॥

आरूढराशौ चर आयराशौ
स्थिरे तु बाधः नवमे विचिन्त्यः ।
तथोभये कामगृहे त्रयाणां
केन्द्रेषु चैषामिति केचिदाहुः ॥ १११ ॥

कुंभश्चराणामळिचापसिंह-
स्त्रीणामळिर्गोवृषभस्य नक्रः ।
कुंभस्य कर्की मिथुनस्य धन्वी
मीनस्य चापं खलु बाधकं स्यात् ॥ ११२ ॥

बाधानिरूपणे पक्षास्त्रय इत्येषु गृह्यताम् ।
आदिमोन्त्यश्च सर्वत्र ग्राह्यो वा मध्यमः क्वचित् ॥ इति ॥

तमूर्तिप्रभृतीनाम् । चाण्डालदैवतं चण्डालदैवतसम्बन्धिनम् । एतद्दृष्टिबाधाविषये देव-
ोपनिरूपणविषये च योज्यम् ॥ १०६—११० ॥

**आरूढराशाविति** ॥ चरे आयराशाविति छेदः । कामगृहे सप्तमराशौ । एषां
याणामायनवमकामानाम् । तत्पक्षे चरे आरूढे स्थिरराशयः, स्थिरे चरराशयः, उभये
भयराशयश्चेति प्रत्येकं चत्वारि बाधकस्थानानि ॥ १११ ॥

**कुम्भ इति** ॥ एषु त्रिषु । मध्यमः "त्रयाणां केन्द्रेषु चैषां" इति प्रदर्शितः ।
क्वचित् प्रेष्यबाधादिनिरूपणादिषु । ग्राह्यो वा । तत्रापि ग्राह्यत्वे विकल्प एव ॥११२,११३॥

पित्तोष्णेत्यादयः श्लोकाः प्रश्नानुष्ठानपद्धतौ ।
ये प्राग्गुग्निषये प्रोक्ताश्चिन्तयेदिह तानपि ॥ ११४ ॥

प्रकृतमेवानुसरामः ।

बाधकाधिपतिर्लग्नं लग्नेशं वा यदीक्षते ।
त्रिदशादीक्षणेनापि बाधा स्याद्दृष्टिसम्भवा ॥ ११५ ॥
बाधकस्थानगेस्तेशे तद्द्वयाधिपयोर्मिथः ।
योगे दृष्टौ च वक्तव्या बाधा दृष्टिसमुद्भवा ॥ ११६ ॥

अत्र सन्तानदीपिका ।

चरराशियुते लग्ने धरासुतयुते मदे ।
लग्ने सहितपापे च देवतादर्शनाद्रुजा ॥ ११७ ॥
शुभेतरयुते लग्ने सप्तमस्थे शनैश्चरे ।
चन्द्रे पापग्रहैर्दृष्टे पिशाचालोकनाद्रुजा ॥ इति ॥ ११८ ॥

**पित्तेति** ॥ तान् तत्प्रदर्शितशैवभूतापस्मारादीन् ॥ ११४ ॥

**प्रकृतमिति** ॥ प्रकृतं दृष्टिबाधालक्षणकथनम् ॥

**बाधकेति** ॥ त्रिदशादीक्षणेन; अत्र द्वौ पक्षौ । तत्र रविजस्य त्रिदशदृष्टिः गुरोस्त्रिकोणदृष्टिः कुजस्य चतुरश्रदृष्टिरित्येकः । सर्वेषामपि त्रिदशत्रिकोणचतुरश्रदृष्टिरित्यपरः । तत्र द्वितीयः पक्षोपि पारम्पर्यसम्प्रदायानुरोधेन गृह्यत एव । लग्नलग्नाधिपयोर्बाधकाधिपदृष्टिः सम्पूर्णा वा असम्पूर्णा वा दृष्टिबाधां लक्षयतीति तदाशयः । तत्र सम्पूर्णदृष्टौ बाधाप्राबल्यमसम्पूर्णदृष्टौ बाधादार्बल्यमित्येव तदाशयः । उचितं चेदं द्वेधापि बाधादर्शनात् । प्राबल्यदाबल्यभदस्तु प्रतिक्रियार्थं वेदितव्य एव ॥ ११५ ॥

**बाधकेति** ॥ अत्र दृष्टिपदेन सप्तमदृष्टिरेव विवक्ष्यते न तु त्रिदशादिदृष्टिः ॥ ११६ ॥

**अत्रेति** ॥ अत्र दृष्टिबाधानिरूपणविषये ॥

**चरराशिगत इति** ॥ देवतादर्शनात् = दृष्टिबाधाहेतोरिति यावत् । अत्र लग्नेशसहिते पापे इति केचन पठन्ति । लग्ने लग्नाधिपे वा पापयुक्ते इत्युभयमतस्वीकारात् सिध्यतीति सिद्धान्तः ॥ ११७ ॥

**शुभेतरेति** ॥ पिशाचालोकनात् तत्संज्ञग्रहबाधया ॥ ११८ ॥

लग्नेशबन्धुर्यदि बाधकेशो
रन्तुं निहन्तुं यदि तस्य शत्रुः ।
भोक्तुं समर्थश्चेद्ग्रहपीडनं स्या-
देवं त्रिधा दैवविदो वदन्ति ॥ ११९ ॥

अन्ये तु लग्नेश्वरदृष्टयुक्ते
रन्तुं निहन्तुं मृतिषष्ठपाभ्याम् ।
बाधाधिपेन्यैरिह भोक्तुमेवं
ग्राह्यो विरोधे सति पूर्वपक्षः ॥ १२० ॥

शुक्रर्क्षगोथ तद्दृष्टो बाधकस्थानगो ग्रहः ।
यदि भार्योद्भवं विद्याद्भार्याभर्तृसमागमे ॥ १२१ ॥
बाधासंभवदेशस्तु बाधकस्थानराशिना ।
वाच्यो मेषादिराशीनां प्रदेशान् कथयाम्यतः ॥ १२२ ॥

मेषस्य धात्वाकररत्नभूमिः
कुल्याप्रदेशो भुजगालयश्च ।
पूर्वप्रदेशो वृषभस्य पश्चा-
त्कृषीवलक्षत्रसुरम्यभूमिः ॥ १२३ ॥

**लग्नेशेति** ॥ अत्र नैसर्गिकबन्धुशत्रुत्वादिकमात्रं निरूपणीयम्; न तु "तत्कालेन पुनस्तु तानतिसुहृन्मित्रादिभिः कल्पये"दित्युक्तमिति बहवः । उचितं चेदं अतिबन्ध्वातिशत्रु-निरूपणस्यानुक्तत्वात् । तयोर्बन्धुशत्रुत्वेनैव ग्रहणमित्यन्ये ॥ ११९ ॥

**अन्य इति** । मृतिषष्ठपाभ्यां दृष्टयुक्ते इत्यनुसन्धेयम् । एवमन्यैरित्यत्रापि । बाधाधिपे त्रिष्वपीदमन्वेति । विरोधे उभयोः पक्षयोर्भिन्नत्वे । पूर्वपक्षः "लग्नेशबन्धु"रिति श्लोकोक्तः ॥ १२० ॥

**शुक्रेति** ॥ अथ अथवेत्यर्थः । तद्दृष्टः शुक्रदृष्टः ॥ १२१ ॥

**बाधेति** ॥ अतः बाधासम्भवदेशस्य वाच्यत्वात् ॥ १२२ ॥

**मेषस्येति** ॥ धात्वाकराः कनकरजताद्युद्भवस्थानानि । पूर्वप्रदेशो मेषराश्युक्त-प्रदेशः । पश्चाद्विशेषत इति भावः ॥ १२३ ॥

उद्यानदेवालयरत्नभूमी-
यमस्य रम्यं प्रवदन्ति तज्ज्ञाः ।
देवाङ्गनावासतटाकरम्यं
जलान्तिकं कर्कटकस्य राशेः ॥ १२४ ॥

स्थानं मृगेन्द्रस्य तु तुङ्गदेशो
गोक्षेत्रदेवद्विजवासभूमिः ।
देवालयाश्वद्विपमन्दिराब्धि-
क्षेत्रेषु वासो वनितागृहस्य ॥ १२५ ॥

जूकस्य वीथ्यापणकाननेषु
कीटस्य वल्मीकतटाकयोश्च ।
आरामसेनागृहयुद्धभूमि-
सालेषु वासो नवमस्य राशेः ॥ १२६ ॥

नदीमुखारण्यनिषादवासे-
ष्वेणस्य राशेर्घटभस्य तद्वत् ।
श्वभ्राम्बुपूर्णामरमन्दिरेषु
झषस्य वासः कथितो मुनीन्द्रैः ॥ १२७ ॥

वनं क्षेत्रं पुरं कुल्या शैलग्रामापणाः क्रमात् ।
कूपकान्तारजलधितटाकसरितस्त्वजात् ॥ इति ॥ १२८ ॥

---

**उद्यानेति** ॥ यमस्य मिथुनस्य । रम्यं प्रदेशमिति विशेष्यमध्याहार्यम् ॥१२४॥

**स्थानमिति** ॥ तुङ्गदेश उन्नतप्रदेशः शैलादिः । क्षेत्रं केदारम् ॥ १२५ ॥

**जूकस्येति** ॥ काननेषु वास इति सम्बध्यते । एवं तटाकयोरित्यत्रापि । सालः प्राकारः ॥ १२६ ॥

**नदीति** ॥ तद्वन्मकरस्येव । वासः एणस्य घटभस्येत्यत्राप्ययं शब्दः सम्बध्यते ॥

**वनमिति** ॥ अजान्मेषात् । वनादिसरिदन्ता द्वादशप्रदेशा मेषादिमीनान्तानां सम्बन्धिन इति पूर्वोक्तस्यैवायं सङ्ग्रहः ॥ १२८ ॥

एतद्दृष्टिबाधाविषयम् । अथ जिह्वादोषो निरूप्यते ।

बाधकेश्वरदृष्टो वा युक्तो वा यदि वाक्पतिः ।
तर्हि रोगं वदेन्नृणां जिह्वादोषसमुद्भवम् ॥ १२९ ॥

एतज्जिह्वादोषनिरूपणविषयम् ।

बालग्रहाभिधा बाधन्तेऽर्भकानेव केवलम् ।
प्रसिद्धाः पूतनाद्या ये तत्पीडाथ निगद्यते ॥ १३० ॥
मन्दचन्द्रजयोरेको यद्वा मिथुननक्रयोः ।
बाधकस्थानसंस्थश्चेद्बालपीडां विनिर्दिशेत् ॥ १३१ ॥

एतद्बालपीडानिरूपणविषयम् ।

अथ विषभोजनं निरूप्यते ।

मित्रे पुत्रे सप्तमे वाष्टमे वा
मान्दौ वाहौ तिष्ठति क्ष्वेळभुक्तिः ।
तत्रस्थे चारीश्वरेरिप्रयुक्ता
विज्ञातव्या सा न चेद्दैवयोगात् ॥ १३२ ॥

---

**एतादिति** ॥ जिह्वादोषः दैवे वेति वाग्भवेति निर्दिष्टः ॥

**बाधकेति** ॥ वाक्पतिर्द्वितीयभावाधिपतिः । न तु जीवः । जिह्वादोषो नाम केषाञ्चन क्रूराणां वाणीविषाणां वचनादितरेषां रोगः सम्भवेत् । तादृशो दोषो जिह्वादोषः ॥

**बालग्रहेति** ॥ एषा पीडा यद्यपि दैवैर्वेत्यादि श्लोकोक्तेषु नान्तर्भवति तथापि प्रकरणवशाद्बाधासामान्यादुद्देशस्य उपलक्षणत्वकल्पनेन वक्तव्यकोटौ स्वीक्रियत इत्यवगन्तव्यम् । एते च "पुरा गुहस्य रक्षार्थं निर्मिताः शूलपाणिना । मनुष्यविग्रहाः पञ्च सप्त स्त्रीविग्रहा ग्रहाः" इत्यादि ग्रन्थान्तरप्रसिद्धा एव ॥ १३० ॥

**मन्देति** ॥ मिथुनमकरान्यतरस्य बाधकस्थानत्वे बुधमन्दान्यतरस्य बाधकस्थत्वे चेति लक्षणद्वयम् । एतन्निरूपणं बालकाविषयप्रश्न एवावश्यकमित्यवतारिकयैवावगम्यते ॥

**अथेति** ॥ प्रकरणान्तःपातिबालपीडानिरूपणानन्तरमुद्देशक्रमानुसारेण विषभोजननिरूपणं क्रियत इति भावः ॥

**मित्र इति** ॥ तत्रस्थे मित्रादिचतुष्कान्यतमस्थे । अत्र षष्ठाधीशस्य मान्दिराहु-

आरूढे सिंहराशौ कटुकरसयुते
नागवल्लीदलाद्ये
भौमक्षेत्रे तथाऽन्ये मधुनि बुधगृहे
तक्रदध्नोः सितर्क्षे ।
क्ष्वेळे वा काद्ळे वा विषममरगुरो-
र्धाम्नि निक्षिप्य दत्तं
पूपादौ मन्दगेहे लवणरसवति
द्रव्य इन्दोर्द्रवे वा ॥ १३३ ॥

लग्नेशारीशसम्बन्धे हिंसायै गरळार्पणम् ।
लग्नेशास्तेशसम्बन्धे स्याद्वशीकरणाय तत् ॥ १३४ ॥

एतद्विषभोजननिरूपणविषयम् । अथ शत्रुबाधा निरूप्यते ।
दोषत्रितयसम्भूताः केवलं बाधया कृताः ।
द्वैविध्यमिति रोगाणां तद्भेदः प्राङ्निगद्यते ॥ १३५ ॥

न्यतरस्य चैकराश्यवस्थान एव शत्रुप्रयुक्तत्वमिति केचन वदन्ति । तन्न । मूलकृतैव व्याख्याने "तत्रस्थे मित्रादिचतुष्कस्थे" इति स्वयमुक्तत्वात् । सा क्ष्वेळभुक्तिः । दैवयोगाद्भक्ष्यपेयादिष्वनवधानसक्तं विषमिति भावः ॥ १३२ ॥

**आरूढ इति** ॥ निक्षिप्य दत्तमिति नागवल्लीदलाद्ये इत्यादिषु सर्वत्र योज्यम् । नागवल्ली ताम्बूलवल्ली । तक्रदध्नोस्तदन्यतरस्मिन्नित्यर्थः । निक्षिप्य दत्तमिदमुपलक्षणं दैवयोगभुक्ते विषे मिश्रीभूतमित्यस्य ॥ १३३ ॥

**लग्नेशेति** ॥ सम्बन्धो योगदृष्ट्यादिः तद्गरळार्पणम् । शत्रुप्रयुक्तलक्षणसद्भाव एवेदं चिन्त्यम् ॥ १३४ ॥

**एतदिति** ॥ शत्रुबाधा "रिपुभिर्या कृतेत्यन्तिमत्वेनोद्दिष्टा ॥

**दोषेति** । केवलं दोषत्रितयसम्भूता इति योजना । बाधया तद्धेतुकेनापि दोषवैषम्येण । प्राक्प्रतिज्ञातशत्रुबाधानिरूपणप्रारम्भे ॥ १३५ ॥

आरूढे प्रबले वदन्ति सुधियो
रोगोद्भवं बाधया
प्राग्लग्ने प्रबले तथामयगणा
. वाच्यास्त्रिदोषोद्भवाः ।
तद्वत्षष्ठपतौ बलिन्यपि गदान्
बाधोद्भवान्निर्दिशे-
द्रन्ध्रेशेऽतिबले त्रिदोषजनिता
रोगास्स्युरेवं द्विधा ॥ १३६ ॥

व्याधीनामीश्वरो ज्ञेयः षष्ठपो रन्ध्रपस्तथा ।
बाधया सबलेऽरीशे रन्ध्रेशे रुक्त्रिदोषतः ॥ इति ॥ १३७ ॥

बाधेशस्यारिभे वा रिपुभवनपते-
र्बाधकर्क्षे यदि स्या-
द्योगो वा दर्शनं वा पुनरथ यदि वा
तौ मिथः क्षेत्रसंस्थौ ।
बाधाधीशारिनाथावपि यदि सहितौ
पश्यतोन्योन्यतो वा
शत्रोस्तत्राभिचारं वदतु बहुतया
लक्षणानां स भूयान् ॥ १३८ ॥

**आरूढ इति** ॥ प्रबले प्राग्लग्नापेक्षया बलाधिके । अन्यत्रारूढापेक्षया । बाधया दैवबाधादिशत्रुबाधान्तं बाधाशब्देन विवक्षितम् । उत्तरार्द्धं प्रकारान्तरेण निरूपणाय । रोगाः स्युरेवं द्विधा । पृच्छकरोगः किंप्रकार इति सम्यगालोच्य निश्चित्यादेष्टव्यमिति भावः ॥ १३६ ॥

**व्याधीनामिति** ॥ अत्र निरूपणयुक्तेपि प्रदर्शितत्वात्पुनरुक्तिशङ्का निरवकाशेति बोध्यम् ॥ १३७ ॥

**बाधेशस्येति** ॥ अरिभे योगो वा दर्शनं वेत्यपकृष्य योज्यम् । तौ बाधेशरिपुभवनपती । मिथः अन्योन्यम् । अनेनान्यतरस्यान्यतरक्षेत्रास्थितावेकं लक्षणमिति पक्षो निरस्यते । स्थाप्यते चाहत्य सप्तैव लक्षणानीति । स आभिचारः । भूयान् **बलवानित्यर्थः** ॥

महाभिचारो वक्तव्यः शुभश्चेद्बाधकाधिपः ।
पापश्चेत् क्षुद्र एष स्यादभिचार इति द्विधा ॥ १३९ ॥
महाभिचार एष स्याद्वैरिभिर्मारणादिकम् ।
यत् कर्म क्रियते क्षुद्रो यत् कीलादि निखन्यते ॥ १४० ॥
रिपोश्च तन्नियोगाद्यो मारणादिकृदस्य च ।
जातिर्द्वयोश्च वक्तव्या तत्प्रकारोथ कथ्यते ॥ १४१ ॥

वर्णो यः षष्ठराशेः स भवति हि रिपोः
षष्ठराशीशितुर्वा
वाच्यो बाधाख्यराशेरथ तदधिपते-
र्वापि वर्णः प्रयोक्तुः ।
विप्रः स्यान्मीनराशिर्द्धरणिपतिरजो
वैश्य उक्षा नृयुग्मं
शूद्रः, स्यात्सत्रिकोणं पुनरिह विहगा
एव विप्रादिनोक्ताः ॥ १४२ ॥

बाधकाधिपसम्बन्धो दृष्ट्या योगेन वा यदि ।
षष्ठभस्य रिपोर्वर्णं षष्ठराश्युदितं वदेत् ॥ १४३ ॥

**महाभिचार इति** ॥ बाधकाधिपः लक्षणप्रयोजकबाधकस्थाननाथः । क्षुद्र एष क्षुद्राभिचारः । महाभिचारक्षुद्राभिचारयोः स्वरूपमनुपदमेव वक्ष्यते ॥ १३९ ॥

**महाभिचार इति** ॥ एषः विधेयप्राधान्यात्पुंस्त्वम् । मारणादिकं आदिशब्देनो-च्चाटनादिपरिग्रहः । कीलादि आदिशब्दः पुत्तिकादीनां परिग्राहकः । तद्विवेचनमुत्तरत्र क्रियेत ॥ १४० ॥

**रिपोरिति** ॥ तन्नियोगाद्रिपुनियोगात् । नियोगः प्रेरणा । न तु स्वस्य शत्रुत्वा-दिति भावः । तत्प्रकारः जातिवचनप्रकारः ॥ १४१ ॥

**वर्ण इति** ॥ वर्णो जातिः । षष्ठराशीशितुर्वेति विकल्पान्तरम् । प्रयोक्तुः मरणादिकर्तुः । उत्तरार्द्धेन राशिजातिरुक्ता । सत्रिकोणमिति मीनराशिरित्यादिषु चतुर्षु सम्बध्यते । नपुंसकैकशेषः । विप्रादिना विप्रादितः शुक्रगुरू इत्यादिना । उक्ताः वराहमि-हिरेण स्वहोरायाम् ॥ १४२ ॥

**बाधकाधिपेति** । पूर्वश्लोकोक्तयोः शत्रुजातिविषयविकल्पयोः कस्य ग्राह्यतेत्य-

बाधकस्थानतन्नाथयोगदृष्ट्यादयो यदि ।
षष्ठेशस्य रिपोर्वर्णस्तर्हि षष्ठाधिपोदितः ॥ १४४ ॥
षष्ठाधिपतिसम्बन्धो बाधकस्य गृहस्य चेत् ।
योगादिना प्रयोक्तुः स्याद्वर्णो बाधकभोदितः ॥ १४५ ॥
बाधकेशस्य चेत्षष्ठषष्ठेशेक्षान्वयादयः ।
बाधकाधिपतेर्वर्णं प्रयोक्तुस्तर्हि निर्दिशेत् ॥ १४६ ॥

विप्रावसुरसुरेड्यौ
भौमार्कौ क्षत्रियौ शशी वैश्यः ।
शूद्रस्तु बुधो मन्द-
श्चान्तरवर्णो वराहमिहिरमते ॥ १४७ ॥

अत्र ग्रन्थान्तरम् ।

विप्रोत्तमः स्याद्गुरुरत्र शुक्रो
विप्राधमोऽन्यग्रहराशियोगात् ।
भेदोऽनयोः स्यादथ सार्वभौमो
भानुः कुजो माण्डलिकश्च वेद्यः ॥ १४८ ॥

---

नेन निर्णीयते । योगदृष्ट्यादयः आदिशब्देनान्योन्यक्षेत्रस्थितिर्ग्राह्या । अभिचारयोगकारकत्वं षष्ठराशेश्चेत्तस्य; षष्ठाधिपस्य चेत्तस्येति संक्षिप्तः सारार्थः ॥ १४४ ॥

**षष्ठेति** ॥ प्रयोक्तृजातिकथनाविषयकविकल्पद्वयस्य "वर्णो यः षष्ठराशे"रिति श्लोकद्वितीयपादोक्तस्य ग्राह्यताग्राह्यताविवेचकमेतत्पद्यद्वयम् ॥ १४५, १४६ ॥

**विप्राविति** ॥ अन्तरवर्णः जातिद्वयान्तराळवर्तिजातिः ॥ १४७ ॥

**अत्रेति** ॥ जातिनिरूपणविषयकं वराहमिहिरवचनमर्थतोऽनूद्य ग्रन्थान्तरस्थं तद्विषयकं वचनं शब्दतोऽनूद्यत इति भावः ॥

**विप्रोत्तम इति** ॥ अनयोर्गुरुशुक्रयोः । अन्यग्रहराशियोगात् । अन्यग्रहा विप्रादिनोक्ताः ।, राशयो " विप्रः स्यान्मीने"त्यादिनोक्ताः । गुरोरपि शूद्रराशौ मन्दयोगादिना विप्राधमत्वं शुक्रस्यापि विप्रराशौ गुरुसम्बन्धाद्विप्रोत्तमत्वं च । सार्वभौमः सर्वभूमीश्वरः । सर्वभूमौ विदितो वा । चक्रवर्तीति यावत् । माण्डलिको मण्डलमात्राधिपतिः ॥ १४८ ॥

भूमिजोनुपवीती स्याद्राजतुल्योथ बोधनः ।
विद्वाननुपवीती स देवदास इतीर्यताम् ॥ १४९ ॥
उच्चादीनी च पर्यन्तस्थानभेदाच्छनेरपि ।
देवदासादिचण्डालपर्यन्ता जातयः स्मृताः ॥ इति ॥१५०॥

अत्र माधवीयम् ।

विप्राह्वयौ गुरुसितौ नृपती कुजार्कौ
वैश्यः शशी शशिसुतो वृषलोर्कजोन्त्यः ॥ इति ॥ १५१ ॥

कृष्णीयश्च ।

विप्रौ भृगुदेवगुरू
क्षत्रियभावौ दिवाकरोर्वीजौ ।
वैश्यौ बुधचन्द्रमसौ
शनैश्वरः शूद्रसङ्करकृत ॥ इति ॥ १५२ ॥

सारसमुच्चयश्च ।

अर्कस्य शुक्रो राजो वा शूद्रो वा मण्डलाधिपः ।
इन्दोर्विप्रोथवा वैश्यो भौमस्य द्विजशूद्रकौ ॥ १५३ ॥

**भूमिज इति** ॥ राजतुल्यः क्षत्रियसदृशः अनुपवीतीति भेदकम् ॥ १४९ ॥

**उच्चेति** ॥ उच्चादीति, उच्चे देवदासः, मूलक्षेत्रे माण्डलिकः शूद्रः, स्वक्षेत्रे तत्तुल्यः, इत्यादीति भावः ॥ १५० ॥

**विप्राह्वयाविति** ॥ वराहमिहिरमते शनिरन्तरजातिः। माधवमतेऽन्त्यश्चण्डाल इत्येतावान् भेदः ॥ १५१ ॥

**विप्राविति** ॥ क्षत्रियस्य भावो ययोस्तौ क्षत्रियभावाविति व्यधिकरणो बहुव्रीहिः। "सप्तमी विशेषणे बहुव्रीहौ" इत्यादिज्ञापकसिद्धः । क्षत्रियत्वभाजाविति भावः । बोध्यबोधकयोरभेदोपचार एवैतादृशेषु प्रयोगेषु साधुतानिर्वाहक इति न विस्मरणीयम् । भिन्नजातिमातापितृजन्या सङ्करजातिः । सा च द्विविधा । अनुलोमप्रतिलोमभेदात् । पितुरुत्कृष्टत्वेऽनुलोमः । मातुरुत्कृष्टत्वे प्रतिलोमः । इतिशब्दः कृष्णमतपरिसमाप्तिबोधकः ॥ १५२ ॥

**अर्कस्येति** ॥ मण्डलाधिपः जातिविशेषनिरपेक्षं मण्डलाधिपत्यवान् । अन्त्यजः चण्डालः । जीवस्य विप्रः । नात्र पक्षान्तरविकल्पः । स्त्रियः जातिनिरपेक्षम् ।

सौम्यस्य शूद्रो वैश्यो वा शनेः शूद्रोन्त्यजोपि वा ।
जीवस्य विप्रः शुक्रस्य शूद्रो विप्रोथवा स्त्रियः ॥
नीचारिमूढगैरेतैर्नीचजातिं विनिर्दिशेत् ॥ इति ॥ १५२ ॥
शत्रुप्रयोक्तृवर्णोक्तावस्तिग्रन्थान्तरं च तत् ।
लिख्यते शत्रुताहेतुस्तत्रापि च मतान्तरम् ॥ १५३ ॥

षष्ठेशजातिं द्विषतोभिदध्यात्
कर्मेशजातिं खलु कर्मकर्तुः ।
हेतुं च षष्ठेशसमाश्रितर्क्ष-
नाथानुरूपं तमिहाभिधास्ये ॥ १५४ ॥

षष्ठेशो यदि भौमवेश्मनि बुधैर्हेतुर्मही त्युच्यते
बौधे काञ्चनमार्यभे पणफलान्यच्छस्य रूप्यं तथा ।
वासो धान्यचतुष्पदाश्च शनिभे चण्डालदासायुधं
चान्द्रे भाजनमम्बु वार्कभवने ताम्रं च मूलं फलम् ॥ १५५ ॥

---

नीचारीत्यादिना स्थितिविशेषजन्यं भेदं प्रदर्शयति । नीचजातिं = स्वस्वजातिविहितकर्मा-नवुष्ठानहेतोर्निकृष्टतापन्नामिति यावत् । "नीचजातिं अर्कस्य विप्रादय उक्ताः तेषु नीचजातिं" इति मूलकारेणैव व्याख्यातम् । नीचारिमूढगैरित्यत्रारिपदं शत्रुक्षेत्रं मूढपदं मौढ्यं च लक्ष-यतीत्यवगन्तव्यम् । यद्वा मूढेत्यत्र भावभाववतोरभेदोपचारः कल्पनीयः । एतत्सम्बन्धिक्ले-शासहिष्णवः केचन नीचारिमौढ्यगैरिति पठन्ति । तत्साम्प्रदायिकपाठविरुद्धमनत्यावश्यकं च । तथा कल्पनेप्यरिपदेनारिक्षेत्रकल्पनायां क्लेशस्य तादवस्थ्यात् । यद्वा "मुह वैचित्ये" इत्यस्माद्धातोर्नपुंसके भावेक्तप्रत्यये ढत्वधत्वष्टुत्वढलोपदीर्घेषु निष्पन्नो मूढशब्दः शक्त्यैव मौढ्यरूपमर्थमभिदधातीति सुव्याख्यम् । एवं स्थिते तत्रांशे पाठान्तरकल्पनाक्लेशस्वीकारो भावक्तप्रत्ययानभिज्ञतानिबन्धन एवेत्यलम् ॥ १५१, १५२ ॥

**शत्रुप्रयोक्तृवर्णोक्ताविति** । तत् शत्रुताहेतुः तत्र मतान्तरमपि च लिख्यत इति योजना ॥ १५३ ॥

**षष्ठेशजातिमिति** ॥ तं हेतुम् । इह वक्ष्यमाणश्लोके । पणश्च फलानि चेतीतरेतर-योगद्वन्द्वः । वासो धान्यचतुष्पदाश्चेति अच्छस्येत्यत्र सम्बध्यते । अच्छः शुक्रः । चण्डालदा-सायुधमिति समाहारद्वन्द्वः । तत एवैकत्वं च । अर्कभवने ताम्रादिकम् ॥ १५४, १५५ ॥

अत्र ग्रन्थान्तरम् ।

लग्नादिकेषु भावेषु यत्रास्ते बाधकेश्वरः ।
भावमेनं निमित्तीकृत्याभिचारं विनिर्दिशेत् ॥ इति ॥१५६॥
धात्वाधिभखेटानामुदयेनारातिबाधकेशाभ्याम् ।
आश्रितभाभ्यामथवा धात्वाद्या हेतवश्चिन्त्याः ॥ इति च ॥
शत्रुः पृच्छकसम्बन्धी वान्यो वा दूरगोपि वा ।
समीपस्थोथवेत्यादि तदन्विह विचिन्त्यते ॥ १५८ ॥

शत्रुः स्यात्स्वजनश्चरे स्थिरगृहे
लग्ने सुहृच्छात्रवो
द्वन्द्वे स्यादितरोथवा गृहपतौ
षष्ठास्थिते बान्धवः ।
पुत्रेशे तनयादिकोथ मदपे
भार्याथ धर्माधिपे
पित्राद्या गुरवो भवन्ति रिपवः
शापोथवैषामिह ॥ १५९ ॥

सहवासी स्थिरे लग्ने द्वन्द्वगेन्तिकदेशगः ।
चरे दूरगतः शत्रुर्ज्ञेयः स्निग्धजनोथवा ॥ १६० ॥

**लग्नादिकेष्विति** ॥ अयं श्लोको ग्रन्थान्तरस्थः । बाधकेशे धनभावगते धननिमित्तकः । तृतीयस्थे सहायहेतुकः । तुरीयस्थे गृहादिहेतुकः । इत्यादिविधया निरूप्यादिशेदिति भावः ॥ १५६ ॥

**धात्वादिभेति** ॥ १, लग्नराशिः । २, लग्नस्थग्रहः । ३, षष्ठाधिपः । ४, बाधकाधिपः । ५, षष्ठाधिपाश्रितराशिः । ६, बाधकाधिपाश्रितराशिः । एभिः षड्भिर्धात्वाद्यहेतवश्चिन्त्याः । अन्योन्यभेदे बलाधिक्यं संख्याधिक्यं चालोच्यादेष्टव्यम् ॥ १५७ ॥

**शत्रुरिति** ॥ इह वक्ष्यमाणश्लोकादिके ग्रन्थे ॥ १५८ ॥

**शत्रुरिति** ॥ चरे लग्ने इत्यादिर्योजना । अथवेत्यादिप्रकारान्तरम् । गृहपतौ चतुर्थाधिपे । पुत्रेशे इत्यादिषु षष्ठेशे इत्यनुवृत्य सम्बध्यते । एषां पित्राद्यानां गुरूणाम् ॥१५९॥

**सहवासीति** ॥ चरे दूरगतः अथवा स्निग्धजन इति योजना ॥ १६० ॥

शत्रोर्दिग्रिपुनाथवैरिगृहयो-
रेकस्य वर्णोक्तव-
द्बाधाराशितदीशयोरितरदि-
ग्वाच्या प्रयोक्तुस्तथा ।
प्रागाद्येत्यमुनोदिता विहगदिक्-
प्रागादितो राशिदि-
क्तासां दूरसमीपमध्यगतता-
जाद्याप्तभांशैस्तयोः ॥ १६१ ॥

अत्राभिचारलक्षणोक्तौ सन्तानदीपिका ।

चरे विलग्ने रिपुनाथदृष्टे
कुजे च लाभे स्थिरभे च धर्मे ।
द्वन्द्वेस्तराशौ प्रवदेन्नराणां
रोगं रिपूणां कृतमाभिचारैः ॥ १६२ ॥

होरानाथयुते भौमे लग्नकेन्द्रगतेथवा ।
रिपुनाथे विलग्नस्थे चाभिचार उदीर्यताम् ॥ १६३ ॥

**शत्रोरिति** ॥ वर्णोक्तवद्बाधकाधिपसम्बन्ध इत्यादि श्लोकचतुष्टयोक्तवत् । इतरोन्यतरः । प्रयोक्तुर्मारणादिकर्तुः । तथा वर्णोक्तवत् । प्रागाद्येत्यमुना "प्रागाद्या रविशुक्रे"त्यादिना । प्रागादितः प्रागादीशाः क्रियेत्यादिना । तासां दिशाम् । अजाद्याप्तभांशैरजाद्यैस्त्रिभिस्त्रिभिश्चरस्थिरोभयैरित्यर्थः । आप्तैराश्रितैः । भै राशिभिः । अंशैर्नवांशैः । तयोः शत्रुप्रयोक्त्रोः । दूरसमीपमध्यगतता क्रमेण ज्ञेया, इति शेषः । सर्वत्र चरराशिना दूरदेशो वाच्यः । स्थिरेणान्तिकस्थः । उभयेन मध्यदेशः । राश्यंशयोर्भिन्नत्वे बलाधिकेन वाच्यम् ॥

**चर इति** ॥ रिपुनाथदृष्टे इति विशेषणं चरे स्थिरभे द्वन्द्वे इति त्रिष्वपि सम्बध्यते । क्रमेण कुजे लाभे स्थिते, धर्मे स्थिते, द्वन्द्वे स्थिते, इति च ॥ १६२ ॥

**होरेति** ॥ षष्ठाधिपस्य लग्नस्थितिः; कुजस्य लग्ननाथयोगकेन्द्रस्थित्योरन्यतरश्च समुदित लक्षणम् ॥ १६३ ॥

शत्रुस्थानाधिपे लग्ने कर्मण्यस्तं गतेथवा ।
लग्ने भौमयुते दृष्टे वाभिचार उदीर्यताम् ॥ १६४ ॥
सुखभावगते केतौ कर्मलग्नगतेथवा ।
लग्ने भौमयुते दृष्टे वाभिचार उदीर्यताम् ॥ १६५ ॥
सुखभावगते केतौ कर्मलग्नगतेथवा ।
केन्द्रे मान्दिसमायुक्ते रोगः क्षुद्राभिचारजः ॥ इति ॥१६६॥
मारणोच्चाटनाद्यर्थं रिपुभिर्यत्क्रियते ।
चूर्णादिकं तदुद्धारप्रकारोथ निगद्यते ॥ १६७ ॥
उदयारूढचन्द्राणां गुळिके केन्द्रसंस्थिते ।
मन्दयुक्तेथ दृष्टे वा क्षुद्रं रिपुकृतं वदेत् ॥ १६८ ॥
मान्दिश्चतुर्थराशौ वा चतुर्थांशेथवा स्थितः ।
यदि क्षुद्रं गृहे वाच्यं जलराश्यंशयोर्जले ॥ १६९ ॥
वर्गोत्तमांशगे तस्मिन्नुभयत्र वदेदिदम् ।
मन्देन मान्दिना वापि युक्तेहौ सर्पसन्निधौ ॥ १७० ॥
तत्केन्द्रे चेद्रविर्दृक्षे केदारे भूमिजो यदि ।
जीवश्चेद्गृह एव स्याच्छुक्रश्चेच्छयनालये ॥ १७१ ॥

**सुखभावेति** ॥ सुखभावेत्यन्तिमश्लोकोक्तं क्षुद्राभिचारस्य लक्षणम् । इतराण्याभिचारसामान्यस्य ॥ १६४—१६६ ॥

**मारणेति** ॥ उच्चाटनादीत्यादिशब्देन मिथःकलहोत्पादनबुद्धीन्द्रियादिस्तम्भनोन्मादाधानसम्पन्नाशगृहादिदाहवशीकरणादयो गृह्यन्ते । तदुद्धारप्रकारस्तस्य चूर्णादिकस्य उद्धारप्रकारः ॥ १६७ ॥

**उदयेति** ॥ सत एवोद्धार्यत्वोपपत्त्या लक्षणकथनमपि न प्रतिज्ञातार्थाननुगुणमिति मन्तव्यम् ॥ १६८ ॥

**मान्दिरिति** ॥ गृहे गृहान्तर्भागे ॥ १६९ ॥

**वर्गेति** ॥ तस्मिन् मान्दौ । उभयत्र गृहान्तर्भागे जले च । सर्पसन्निधौ सर्पारामसमीपे । इदं क्षुद्रम् ॥ १७० ॥

**तत्केन्द्र इति** ॥ तत्केन्द्रे तयोर्मान्दिमन्दयोः केन्द्रे ॥ १७१ ॥

मन्दश्चेन्मलमूत्रादिपरिहारोचितावनौ ।
मान्दिर्मेषत्रिकोणस्थस्तदंशस्थोथवा यदि ॥ १७२ ॥
शिरःकपाले निहितं व्याघ्रस्याखुभुजोथवा ।
गोत्रिकोणे घटे वाच्यं वंशादौ मिथुनस्य चेत् ॥ १७३ ॥
कर्कित्रिकोणसंस्थश्चेत्कपाले निहितं च तत् ।
मान्दौ संहारनक्षत्रस्थिते वाच्या हि पुत्रिका ॥ १७४ ॥
कीटराशिस्थिते यन्त्रं चतुरंग्रयंशकोस्थि च ।
एषां संख्या तु विज्ञेया मान्दिभुक्तांशकैस्समा ॥ १७५ ॥
मान्दिराश्यंशयोर्या दिग्दिशं तामत्र निर्दिशेत् ।
एवं हि सम्प्रदायोत्र कश्चिदन्योथ कथ्यते ॥ १७६ ॥
ऊर्ध्वास्ये बाधकाधीशे निहितं भूरुहोपरि ।
निखातं काष्ठयो वक्त्रे तिर्यग्वदनगः स चेत् ॥ १७७ ॥
पाषाणद्रुममध्यादिन्यस्तं चूर्णादिकं वदेत् ।
बाधेशतत्स्थराशिभ्यां द्रुमतत्स्थप्रदेशयोः ॥ १७८ ॥

---

**मन्द इति** ॥ मन्दः मान्दिकेन्द्रे चेत् । मेषत्रिकोणस्थः मेषसिंहधनुःसंस्थः । मिथुनस्य त्रिकोणे इत्यनुवर्तते । वंशो वेणुः ॥ १७२, १७३ ॥

**कर्कीति** ॥ कपाले नालिकेरास्थनि । मान्दाविव्यादिना स्थापितवस्तुस्वरूपं निरूप्यते । संहारनक्षत्राणि कृत्तिकार्द्रादीनि । हि पुत्रिका इति पदच्छेदः । पुत्रिका दारुनिर्मितमनुजप्रतिकृतिः । अहिपुत्रिकेति केचन पदच्छेदमभिपद्यन्ति । तन्न । मूलकृता दर्शितप्रकारेण व्याख्यातत्वात् ॥ १७४ ॥

**कीटेति** ॥ कीटराशिस्थिते मान्दाविति योज्यम् । एषां क्षुद्रवस्तूनाम् । मान्दिभुक्तांशकैस्तत्तद्राशौ भुक्तैर्नवांशकैः । मतान्तरे मेषाद्गतैर्नवांशकैः । प्रथमपक्षे नवभ्यो द्वितीयपक्षे द्वादशभ्यश्चाधिका यद्यपि संख्या न स्यात्तथाप्यंशाधीशानामुच्चादिस्थित्या गुणने संख्याधिक्यं स्यादेव ॥ १७५ ॥

**मान्दीति** ॥ अत्र क्षुद्रस्थानादिनिरूपणविषये । अन्यः सम्प्रदाय इति शेषः ॥

**ऊर्ध्वास्य इति** ॥ ऊर्ध्वास्ये ऊर्ध्वमुखराशौ स्थिते सति । निहितं निक्षिप्तम् ॥

शुभोऽशुभर्क्षे इत्येतेनोक्ता चोत्तमनीचता ।
बाधकाधिपतिः स्वांशान्नवांशे यावति स्थितः ॥ १७९ ॥

तत्संख्याः स्युर्द्रुमास्तत्र मध्यगांशकपोदिताः ।
तेषु बाधेशवृक्षे वा समीपे वास्य तत्स्थितम् ॥ १८० ॥

बाधेशे जलराशिस्थे सिन्धुनद्यादिकूलगम् ।
जले क्षिप्तं निखातं वा वाच्यमूर्ध्वाननादिभिः ॥ १८१ ॥

अर्के वार्केण युक्ते वा बाधेशे देवसन्निधौ ।
चन्द्रे चन्द्रान्विते तोयप्रदेशे वाथ सोषगे ॥ १८२ ॥

कुजे वा कुजयुक्ते वा श्मशाने वाग्निसन्निधौ ।
युद्धोर्व्यां वैवमाद्येषु शशिजेवाथ तद्युते ॥ १८३ ॥

विद्याभ्यासविहारोर्व्यामथ जीवे च तद्युते ।
देशान्ते कोशगेहे वा ततः शुक्रे च तद्युते ॥ १८४ ॥

शय्यागृहे वा ग्रामान्ते ततो मन्दे च तद्युते ।
उच्छिष्टादिपरित्यागस्थाने चूर्णादिकं स्थितम् ॥ १८५ ॥

---

भूरुहोपरि भूरुहाणां वृक्षाणामुपरि स्कन्धशाखाप्रकाण्डादौ । कौ भूमौ । तिर्यग्वदनगस्तिर्यङ्मुखराशिगतः । स बाधकाधीशः । बाधेशतत्स्थराशिभ्यां बाधेशः । शुभः पापराशौ चेन्नीचप्रदेशे उत्तमवृक्षः । अशुभः शुभर्क्षे चेदुत्तमप्रदेशे नीचवृक्षः । मध्यगांशकपोदिताः मध्यगानां नवांशकानां येऽधिपास्तेषामुदितः "अन्तरसारान् जनयति रविः"रित्यादिनोक्ताः । तेषु द्रुमेषु मध्ये । बाधेशस्य यो वृक्षस्तस्मिन् । तस्य बाधेशवृक्षस्य समीपे समीपस्थवृक्षे ॥

**बाधेश इति ॥** ऊर्ध्वाननादिभिर्बाधकाधिपाश्रितजलराशिरूर्ध्वमुखश्चेत्कूलानिखातम् । अधोमुखश्चेज्जलाधोनिखातम् । तिर्यङ्मुखश्चेज्जले क्षिप्तमिति भावः । अत्र केचिदधोमुखश्चेज्जले क्षिप्तमिति तिर्यङ्मुखश्चेज्जले निखातमिति च व्याचक्षते । तदसाम्प्रदायिकम् । युक्तिविरुद्धं च । तिर्यङ्मुखापेक्षयाधोमुखस्यैव निखननसाधकत्वमुपपन्नमित्यलम् ॥ १८१ ॥

**अर्क इति ॥** देवसन्निधौ देवालयसन्निधाने । अथ अथवा ॥ १८२—१८५ ॥

युक्ते तस्मिन् राहुकेतुगुळिकैः सर्पसन्निधौ ।
दिगत्र रिपुनाथस्य वाच्या वा बाधकेशितुः ॥ १८६ ॥
बाधकाधिपसंयुक्तराशेरप्यंशकस्य वा ।
अयत्नोद्धार्यमेव स्याद्बाधेशे चरराशिगे ॥
उभयस्थे प्रयत्नेन नोद्धार्यं तत्स्थिरस्थिते ॥ इति ॥ १८७॥

क्षुद्रं तत्स्थितिदेशं
चैवं ज्ञात्वा तदुक्तविधिना तत् ।
त्यक्त्वा रक्ष्यं स्थलमथ
महाभिचारप्रतिक्रियां वक्ष्ये ॥ १८८ ॥

युक्त्वा षष्ठपतिं विलग्नपतिना
यो राशिरत्रागतः
सादित्यान्वितवीक्षितो यदि बलिं
कुर्यादघोराह्वयम् ।
कार्यं चन्द्रमसा कपालहवनं
स्याच्चक्रहोमं विदा
कर्तव्यं प्रतिकारकर्म गुरुणा
प्रोक्तं तदेवार्किणा । १८९ ॥

**युक्त इति** ॥ तस्मिन् बाधकेशे दिगत्रेति श्लोकेन चतुर्दिङ्निरूपणप्रकार उक्तः । अयत्नोद्धार्यं क्षुद्रमिति शेषः । प्रयत्नेन उद्धार्यमित्यनुषज्यते ॥ १८६—१८७ ॥

**क्षुद्रमिति ॥** तत्क्षुद्रम् । त्यक्त्वा, उद्धार्यत्वे उद्धृत्य दूरतो निरस्य । अनुद्धार्यत्वे मन्त्रशास्त्रोक्तप्रतिक्रियाभिस्तत्फलं विनाश्य । स्थलं रक्ष्यं स्थलरक्षार्थशान्तिः कर्तव्येति भावः ॥ १८८ ॥

**युक्त्वेति ॥** षष्ठपतिं तत्स्फुटम् । विलग्नपतिना तत्स्फुटेन । युक्त्वा संयोज्य । अत्र योगस्फुटे । सः आदित्येति छेदः । "सोचि लोपे चेत्पादपूरण"मिति सुलोपः । अघोरबलिकपालहोमचक्रहोमप्रतिकारबल्यो मन्त्रशास्त्रनिर्दिष्टा महाभिचारप्रतिक्रियाः विदा बुधेन । तदेव प्रतिकारकर्मैव ॥ १८९ ॥

भूमिजेक्षितयुतेथ योगभे
भूतमारणबलिर्विधीयताम् ।
खङ्गरावणबलिं करोतु वा
कृत्तिकाबलिमथातनोतु वा ॥ १९० ॥
शुक्रान्वितेक्षिते योगे प्रतिकारबलिक्रियाम् ।
करोतु शान्तये व्याधेर्बलिं वा भूतमारणम् ॥ १९१ ॥
अथवा दशमेनैव राशिना तद्गतेन वा ।
तद्द्रष्ट्रा वा विहङ्गेन विधीयन्तामिमाः क्रियाः ॥ १९२ ॥
दूतोक्ताद्यक्षरे दीर्घे रोगशान्तिस्तु गानतः ।
ह्रस्वे भोजनपूजाद्यैः संयुक्ते नृत्तकर्मणा ॥ १९३ ॥
प्रोक्तः प्रतिक्रियाकर्तृभेदो दृष्ट्यापि पृच्छताम् ।
प्रश्नानुष्ठानपद्धत्यां तत्प्रकारोथ कथ्यते ॥ १९४ ॥
व्याधेः शान्तिर्भवति मुखजैर्दक्षिणोर्ध्वावलोके
प्रष्टुर्दृष्टाविह पुनरधो देवतागायकैश्च ।
वामोर्द्ध्वाधः सुदृढनिहितप्रेषणे तु प्रशस्तै-
श्चण्डालानामपि तदधमैः सा निरुक्ता क्रमेण ॥ इति ॥

**शुक्रान्वितेति** ॥ योगे योगस्फुटे । भूतमारणबलिखङ्गरावणबलिकृत्तिकाबलयोपि मन्त्रशास्त्रप्रसिद्धाः ॥ १९०, १९१ ॥

**अथवेति** ॥ दशमेन आरूढात् । तद्गतेन दशमगतेन । तद्द्रष्ट्रा दशमद्रष्ट्रा । इमाः क्रियाः अघोरबल्यादिक्रियाः पूर्वोक्तयोगस्फुटे ग्रहयोगदृष्ट्यभावे दशमगतेन दशमद्रष्ट्रा वा । तयोरप्यभावे दशमराश्यधिपेन । प्रतिक्रिया निर्णेतव्येति सम्प्रदायः ॥ १९२ ॥

**दूतेति** ॥ ह्रस्वे संयुक्ते इत्युभयत्रापि दूतोक्ताद्यक्षरे इत्यनुषज्यते ॥ १९३ ॥

**प्रोक्त इति** ॥ कथ्यते वक्ष्यमाणश्लोकेन ॥ १९४ ॥

**व्याधेरिति** ॥ मुखजैर्ब्राह्मणैः । दक्षिणेति प्राश्निकसमीपागमने पृच्छकस्य दृष्टिर्दक्षिणोर्ध्वभागे चेत् । इह दक्षिणभागे । अधः अवलोक इत्यनुषज्यते । देवतागायका देवतामुद्दिश्य गानं कुर्वन्तो जातिविशेषाः । वामेति । ऊर्ध्वप्रेक्षणे चण्डालानां प्रशस्तैः तदधमैश्चण्डालाधमैः ॥ १९५ ॥

बाधाभेदोत्र विज्ञेयः स्पर्शनेनापि पृच्छताम् ।
प्रायेण दृष्टिबाधायां खल्वेनदुपयुज्यते ॥ १९६ ॥

अत्रानुष्ठानपद्धतिः ।

वक्षो ललाटतलगुह्यतलानि नाभिं
प्रष्टा स्पृशेद्यदि वदन्ति हि देवतार्तिम् ।
पार्श्वे करांगुळिगळे च भुजङ्गपीडां
भ्रूकर्णकक्षयुगळेषु पिशाचपीडाम् । इति ॥१९७॥

बाधकगततन्नाथ-
ग्रहतो ज्ञेया हि देवताभेदाः ।
तदधिष्ठितराश्यंशै-
रविभेदः स्यात्स कथ्यते तदनु ॥ १९८ ॥

सौम्यर्क्षांशकयोः स्थितो यदि भवे-
द्बाधाधिपः स्वालये
संस्थाप्यान्वहमर्चितोत्तमजनै-
र्बाधाकरी देवता

**बाधेति** ॥ प्रायेण बाहुल्येन । महाभिचारविषयेपि क्वचिदिति भावः । एनत् स्पर्शनेन बाधाभेदविज्ञानम् । अन्यादेशे एनदादेशः ॥ १९६ ॥

**अत्रेति** ॥ अत्र पृच्छकस्पर्शेन बाधानिरूपणविषये ॥

**वक्ष इति** ॥ पार्श्वे इत्यादिषु कर्मणोधिकरणत्वविवक्षया सप्तमी । भुजङ्गपीडां सर्पबाधाम् । नागग्रहावेशं च ॥ १९७ ॥

**बाधकेति** ॥ तदधिष्ठितेति तच्छब्देन बाधकगतबाधकानाथौ परामृश्येते । स भेदः । कथ्यते वक्ष्यमाणश्लोकचतुष्टयेन ॥ १९८ ॥

**सौम्येति** ॥ सौम्येति सौम्यो बुधः । स्वालये संस्थाप्येति योजना । मान्दे मन्दराश्यंशकयोरिति भावः । स यदि स बाधकाधिपः ॥ १९९ ॥

जीवर्क्षांशगयोः सुरालयगता
मान्दे तु नीचार्चिता
भीमोद्याननिवासिनी स यदि चे-
त्स्वांशेथवा स्वालये ॥ १९९ ॥

दिवाकीर्त्यर्चिता वाच्या चामुण्डो सहकेतुना ।
पञ्चमी बुधयुक्तेन तत्क्षेत्रस्थेन चामृजा ॥ २०० ॥
भौमेन भैरवो घण्टाकर्ण इत्यादयः स्मृताः ।
वाच्या रक्तेश्वरी रक्तचामुण्ड्यतिभयङ्करी ॥ २०१ ॥
काळी चेत्यादयस्त्वोजयुग्मराश्यंशभेदतः ।
ओजयुग्मत्वभेदे तु भांशयोर्द्विविधा अपि ॥ इति ॥ २०२ ॥

मेषाद्याश्रयभेदान्मूर्तिविशेषा दिवाकरादीनाम् ।
कथ्यन्ते संक्षेपादिह खल्वन्यत्र विस्तरेणोक्ताः ॥ २०३ ॥

भौमक्षेत्रगतो रविस्त्रिणयनः
कीटे स्वयंभूरजे
मर्त्यैरुच्चत ऊर्ध्वमत्र तदधो
देवः प्रतिष्ठापितः ।
यक्षी गोगत एष जूकगृहगः
काळी पुनः स्त्रीगतः
श्रीरामाद्यवतारविष्णुरथ त्रि-
ष्णुस्त्वेष वीणागतः ॥ २०४ ॥

**दिवेति** ॥ सहकेतुना केतुसहितेनासृजा । बाधकाधीशेन सता । दिवाकीर्त्यर्चिता दिवाकीर्तयो नापिता अन्तावसायिनश्च । "दिवाकीर्तिस्तु पुंसि स्यान्नापितान्तावसायिनो" रिति विश्वमेदिन्यौ । तत्क्षेत्रस्थेन बुधक्षेत्रस्थेन ॥ २०० ॥

**काळीति** ॥ ओजयुग्मेति ओजराश्यंशयोर्भैरवादयः । युग्मराश्यंशयोः रक्तेश्वर्यादयः । राश्यंशयोरोजयुग्मत्वभेदे प्रोक्ता द्विविधा अपि । बाधकस्थेन सतेत्यत्रापि चिन्त्यम् ॥२०२॥

**मेषेति** ॥ इह प्रश्नमार्गे । संक्षेपात्कथ्यन्ते अन्यत्र ग्रन्थान्तरे । विस्तरेणोक्ताः ॥

**भौमेति** ॥ अत्र मेषे । तदधः तस्मादुच्चात् भागदशकादधः । देवैः = परशुरामा-

धर्मदैवं च नागाश्च भास्करः कर्कटस्थितः ।
सिंहस्थो देवता सा या पूज्यते नित्यमात्मना ॥ २०५ ॥

गन्धर्वयक्षौ धनुषि स्थितेऽर्क-
स्तयोस्त्रियौ मनिगतस्तु भानुः ।
शास्ता पिशाचो मृगयाप्रधानः
किरातमूर्तिश्च शनेर्गृहस्थः ॥ २०६ ॥

चामुण्डी सुरसद्मगाजगशशी नीचार्चिता कीटग
श्चामुण्डी यदि मेषगः स विबलो वाच्ये उभे ते अपि ।
यक्षी शुक्रगृहस्थितः शिशिरगुर्वा धर्मदैवं बुध-
क्षेत्रस्थस्तु विमानसुन्दर उत स्त्री वास्य पुंस्त्रीवशात् ॥२०७

स्वगृहस्थः शशी नागो धर्मदैवं बली स चेत् ।
सिंहराशिस्थितश्चन्द्रो भगवत्यन्यपूजिता ॥ २०८ ॥
चापस्थो व्योमगन्धर्वस्तत्स्त्री मनिगतः शशी ।
प्रेतशूलपिशाचाद्याः शशी मन्दगृहस्थितः ॥ २०९ ॥

---

दिभिः । गोगतो = वृषगतः । स्त्रीगतः = कन्याराशिस्थः । विष्णुस्तु = विष्णुरेव न त्ववता-रविष्णुरिति भावः ॥ २०४ ॥

**धर्मदैवमिति ॥** या आत्मना नित्यं पूज्यते सा देवतेति योजना ॥ २०५ ॥

**गन्धर्वयक्षाविति ॥** तयोर्गन्धर्वयक्षयोः । स्त्रियौ गन्धर्वी यक्षी च । मृगयाप्रधान इति पिशाचविशेषणम् । न तु शास्तृकिरातमूर्त्योः । तयोस्तदव्यभिचारात् ॥ २०६ ॥

**चामुण्डीति ॥** कीटगः शशीनीचार्चिता चामुण्डीति योजना । मेषगः स विबलः यदि उभे ते चामुण्ड्यौ अपि वाच्ये इति च । वा = अथवा । अस्य स्त्री = विमानसुन्दरी। पुंस्त्रीवशात् । पुंसो विमानसुन्दरी स्त्रिया विमानसुन्दर इति भावः ॥ २०७ ॥

**स्वगृहस्थ इति ॥** स = स्वगृहस्थश्चन्द्रः । अन्यपूजिता = अन्यैः = पृच्छकेतरैः पूजिता ॥ २०८ ॥

**चापस्थ इति ॥** तत्स्त्री तस्य व्योमगन्धर्वस्य स्त्री । प्रेतेति प्रेतश्च शूलपिशाचाश्चेति विग्रहः ॥ २०९ ॥

स्याद्भूतराक्षसो ब्रह्मराक्षसो नरभोजिनी ।
बालप्रभक्षिणीत्याद्याः स्वर्क्षस्थः क्षितिनन्दनः ॥ २१० ॥
भौमो भैरवयक्ष एतदबला शौक्रेथ बौधे स्थितो
गन्धर्वो रतिकाम इत्ययमथो यक्षी च रुष्टो हरिः ।
कर्किस्थः परदेवता भगवती वा कृष्णचामुण्ड्यस्र-
र्किसहस्थो वनदेवताश्च शिवभूतौघाश्च रुष्टः शिवः ॥ २११

धनुर्झषस्थः खलु कुक्षिशास्ता
स वीरभद्रोथ मृगे च कुम्भे ।
निजोत्सवध्वंसनरुष्टदेवः
पराभिचारोद्भवदेवता च ॥ २१२ ॥

भौमक्षेत्रबुधो ज्वरो भृगुगृहे गन्धर्व एष स्वभे
गन्धर्वोपि च किन्नरोथ हिमगोरम्भःपिशाचो गृहे ।
सिंहे पन्नगकन्यका गुरुगृहे रुष्टाद्विजप्रेरिता
चामुण्डी कवची पिशाचयुगमाघाताश्रितं मन्दभे ॥२१३॥

**स्यादिति** ॥ भूतराक्षसब्रह्मराक्षसौ मेषे । नरभोजिन्याद्याः कीटे । भैरवयक्षस्तु-लायाम् । वृषे तु भैरवयक्षी । एवं बौधेपि ओजयुग्मभेदाद्भेदोवगन्तव्यः । अत्र केचित् भैरवश्च यक्षश्चेत्युभौ तद्वद्भैरवी च यक्षी चेत्युभे च पृथग्गृहीतुमभिलषन्ति । तत्तु भैरवयक्ष इत्येकपदाद्दुर्ग्रहमेव । समाहारद्वन्द्वत्वकल्पनायां तु नपुंसकलिङ्गेन भाव्यम् । इतरेतरद्वन्द्व-विवक्षायां पुनर्द्विवचनान्तत्वं दुर्वारम् । अत एतादृशदुराग्रहः किंमूल इति त एव प्रष्टव्याः । भैरवयक्ष इति यक्षभेदस्य, भैरवयक्षीति यक्षीभेदस्य च ग्रहणे सर्वसामञ्जस्यसिद्धेः । तादृशभेदस्यासिद्धत्वं न शक्यते कल्पयितुम् । मूर्तिभेदानामानन्त्यात् । यद्वा भैरवसहितो यक्ष इति मध्यमपदलोपिनमभ्युपगम्य समासं भैरवश्च यक्षश्चेति क्लिष्टगत्या संयोज्यासम्प्रदा-यिकोप्ययमर्थो भवेत्सम्पाद्य इति कष्टमेवैतदित्यलमधुना ॥ २१०, २११ ॥

**धनुरिति** ॥ स कुजः । वीरभद्रश्चेत्यर्थात् । अत्र देव इति सामान्योपादानेपि प्रकृतानुगुण्याद्देवबाधानिरूपणविषयोक्तरीत्यनुसारेण भौमस्य कथितानां मन्दस्योक्तानां वा देवानां विशेषतो ग्रहणमेव युज्यते । अत्रापि केचिद्यथासंख्यमूरीकृत्य मृगे निजोत्सवध्वंस-नरुष्टदेवः कुम्भे पराभिचारोद्भवदेवताश्चेति विविच्य व्याचक्षते । तत्तु प्राचीनसम्प्रदायानु-रोधित्वादुपेक्ष्यम् ॥ २१२ ॥

**भौमेति** ॥ एष बुधः । स्वभे गन्धर्वः किन्नरोपि च ॥ अम्भःपिशाचो जलपिशा-

भौमर्क्षे कुपितेशभूतनिवहो
दुर्देवता चाभिचा-
रोत्था भूमिसुरस्य भार्गवगृहे
यक्षी च यक्षोऽप्युभौ ।
तीव्रापस्मृतिदौ गुरुर्बुधगृहे
क्लीबात्मिका देवता
विप्राणामपि चाभिचारजनिता
वा देवकोपोद्भवा ॥ ११४ ॥

तुङ्गस्थः खलु देवताग्निगृहगा
गन्धर्वमुख्यस्तथा
सिंहस्थो नृपसेवकैरिह नृणा-
मुद्दिश्य कान्तं स्त्रिया ।

---

चः । पन्नगकन्यका नागकन्यका । मन्दभे कवची पिशाचयुगं शूलपिशाचः कालपिशाचश्च । आघाताश्रितं = आघातो वधभूमिः । युद्धभूमिरिति यावत् । तन्निष्ठं "नपुंसकमनपुंसकने"ति नपुंसकैकशेषः । एकवद्भावश्च । आघाताश्रिता इति पाठे तु एते इत्यध्याहार्यम् । कवाचि-शूलपिशाचकालपिशाचा इति व्याख्येयं च ॥ २१३ ॥

**भौमर्क्ष इति** ॥ भौमर्क्षे गुरुः कुपितेशभूतनिवहः । भूमिसुरस्य आभिचारोत्था दुर्देवता च इति योजना । भार्गवगृहे गुरुः तीव्रापस्मृतिदौ यक्षी यक्षश्चोभावपीति । अप-स्मारयक्षः अपस्मारयक्षी च । अत्र केचिद्वृषेपस्मारयक्षी तुलायामपस्मारयक्ष इति विवेच-यन्ति । अपरे पुनः पुरुषविषयप्रश्नेपस्मारयक्षी स्त्रीविषयप्रश्नेपस्मारयक्ष इति । उभयत्रोभ-योश्चोभावित्येव सम्प्रदायः । क्लीबात्मिका देवता = नपुंसकदेवता । सा च विप्राभिचारज-निता देवकोपोद्भवा वा स्यात् ॥ २१४ ॥

**तुङ्गस्थ इति** ॥ तुङ्गस्थो वाक्पतिरग्निगृहगा देवता । तथा गन्धर्वमुख्यश्च । यथा-वत्पालिताग्निहोत्रं ब्राह्मणगृहमग्निगृहम् । नृणां नृपसेवकैः कृताभिचारजनिता । नारीणां कान्तमुद्दिश्य स्त्रिया = (सपत्न्या) कृताभिचारजनिता दुर्देवतेति योजना । भस्माप्सङ्कि-पिशाचकौ भस्मपिशाचो जलपिशाचश्च । शनेस्स्वभे त्रयः । अत्र केचन शनिक्षेत्रयोरुभयो राश्योर्मध्ये मकरे भस्मपिशाचजलपिशाचौ । कुम्भेऽधमगन्धर्व इति विवेचयन्ति ॥ तद्रूपेप

नारीणां च कृताभिचारजनिता
दुर्देवता वाक्पति-
भेऽस्माप्सक्रिपिशाचकावथमग-
न्धर्वः शनेर्न स्वभे ॥ २१५ ॥

भौमक्षेत्रभृगुस्तु जीववदजे
यक्षस्तथा राक्षसः
स्वर्क्षे कर्कटके च यक्षसहिता
यक्षी बुधर्क्षे पुनः ।
विद्याभ्यासभवाभिचार इनभे
यक्षी सुरक्षेत्रगा
चापे ब्राह्मणशाप एव झषभे
दुर्गा भवेद्भार्गवः ॥ २१६ ॥

मन्दक्षेत्रगतः शुक्रः स्यादपस्मारदेवता ।
वात्याप्रभृतयः कालपिशाचश्चात्र बाधकः ॥ ११७ ॥
असाध्यापस्मृतिर्मेषे कीटे प्राग्जन्मपीडितः ।
शिवालयस्थस्तद्भूतो वक्तव्यो भानुनन्दनः ॥ २१८ ॥
गव्यपस्मारयक्षस्तद्यक्षीशापो द्विजस्य च ।
जूके शास्त्रादिभूतेशाः क्रुद्धा महविघाततः ॥ २१९ ॥

---

क्ष्यमसाम्प्रदायिकत्वात् न स्वभे स्वक्षेत्रस्थगुरोर्लक्षणवशाद्बाधाकारकत्वेपि बाधाया अभाव एवेति भावः ॥ २१५ ॥

**भौमेति** ॥ जीववत्, कुम्भपतेर्शभूतनिवहाद्यातिदेशोयम् । अजे यक्षराक्षसावपीति वि-शेषः यक्षसहिता यक्षीति । त्रिष्वप्युभौ । इनभे सुरक्षेत्रगा देवालयप्रतिष्ठापिता यक्षी । ब्राह्म-णशाप एव एवेन तु न कस्या अपि देवताया बाधा वक्तव्येति व्यवच्छिद्यते ॥ २१६ ॥

**मन्देति** ॥ बाधक इति लिङ्गवचनविपरिणामेनान्ययोश्चान्वेति ॥ २१७ ॥

**असाध्येति** ॥ पीडितः कोपित इति यावत् । तद्भूतः शिवभूतः ॥ २१८ ॥

**गवीति** ॥ तद्यक्षी = अपस्मारयक्षी । मह उत्सवः । विघातो विघ्नः ॥ २१९ ॥

बौधे काननदेवता शनिरपि
प्रेतः सुहृत्प्रेषितो
दैवं नीचसमर्पितं सुरगृहे
सिंहे सुरावासगः ।
शास्ताऽखेटपिशाचकश्च गुरुभे
गन्धर्वभेदो मणी-
संघातार्तवविश्रुतोथ निजभे
प्रेतः पिशाचाद्यपि ॥ इति ॥ २२० ॥

एतच्छत्रुबाधानिरूपणविषयम् । अथ व्याधेः शमननिरूपण-प्रकारो लिख्यते ॥

बाधारूढाल्लग्नतो व्याधिशान्ति-
श्चिन्त्यारूढे पापयोगेक्षणाद्यैः ।
दोषैर्युक्ते व्याधिवृद्धिर्गताधः
प्राग्लग्ने सा भाविनी पृच्छकानाम् ॥ २२१ ॥
भाग्यस्थानगते शुभे तदधिपे
प्राणिन्यभीष्टस्थिते
लग्नेशे तपनेन वाथ धिषणे-
नालोकिते वान्विते ।

---

**बौध इति** ॥ बौधे शनिः काननदेवता, सुहृत्प्रेषितः प्रेतोपि । इति योजना । नीच-समर्पितं नीचैः प्रार्थ्य प्रेषितम् । शास्ता आखेटेति छेदः । गुरुभे मणीसंघातार्तवविश्रुतो गन्धर्वभेदः । सहस्रमणिमान् पुष्पशोभीति नामानौ गन्धर्वौ । इतिना मेषाद्याश्रयभेदादिति प्रतिज्ञायोपाक्रान्तस्य मूर्तिविशेषकथनस्य परिसमाप्तिर्द्योत्यते ॥ २२० ॥

**एतदिति** ॥ शमनशब्दस्तद्धेत्वादीनामप्युपलक्षकः ॥

**बाधेति** ॥ प्राग्लग्ने दोषैर्युक्ते । सा व्याधिवृद्धिः भाविनी । प्रश्नानन्तरं व्याधिर्वर्द्धि-तेति भावः ॥ २२१ ॥

**भाग्यस्थानगत इति** ॥ शुभे = शुभग्रहे । तदधिपे = भाग्यस्थानाधिपे । प्रा-

स्यादेवेश्वरसेवयोगदशमप-
स्तद्वन्मनूनां जपै-
र्लग्नेशे नवमे च दोषसहिते
व्याधेः शमो दुर्लभः ॥ २२२ ॥

पृष्ठोदयजलह्रासचराधोमुखराशिभिः ।
लग्नस्थैर्व्याधिशान्तिः स्यात्तत्प्रश्नेन तदन्यथा ॥ २२३ ॥

अत्र ग्रन्थान्तरम् ।

षष्ठाष्टमव्ययसुखे
पापविमुक्ते शुभान्विते केन्द्रे ।
व्याधेः शान्तिप्रश्ने
शान्तिर्भवतीति निर्दिशेन्मतिमान् ॥ इति ॥ २२४ ॥

बाधकखेटाधिष्ठित-
भांशवशात्प्रतिक्रियाकरणविधौ ।
कर्तृविशेषो ग्रन्था-
न्तरगदितो निगद्यते तदनु ॥ २२५ ॥

बाधकविहगाधिश्रित-
भवनांशकयोर्निरीक्ष्य सत्वादिगुणान् ।
सात्विकराजसतामस-
कर्मास्त्वेतत्प्रतिक्रियाकर्त्ता ॥ २२६ ॥

---

णिनि = बलवति । ईश्वरसेवया = ईश्वरी चेश्वरश्च ईश्वरौ । तयोः सेवया । मनूनां = मन्त्राणाम् । दोषसहिते = पापयोगदृष्टिदौर्बल्यादिदोषयुक्ते ॥ २२२ ॥

**पृष्ठेति ॥** तत्प्रश्ने व्याधिशान्तिप्रश्ने । तदन्यथा । शीर्षोदयजलवृद्धिस्थिरोर्ध्वमुखराशिभिरित्यर्थः । न व्याधिशान्तिः स्यादित्यर्थः ॥ २२३ ॥

**अत्रेति ॥** अत्र व्याधिशमननिरूपणे ॥

**षष्ठेति ॥** पापविमुक्ते पापरहिते शान्तिर्नचिरेण शमनम् ॥ २२४ ॥

**बाधकेति ॥** निगद्यते अनन्तरश्लोकत्रितयेन ॥ २२५ ॥

**बाधकेति ॥** चन्द्रार्कजीवा इति श्लोकार्द्धेन होरायां ग्रहाणां सत्वादिगुणा उक्ताः ।

सूर्याचन्द्रमसोर्ग्रहांशकगत-
श्चेत् खेचरो बाधको
विप्रः कर्म करोतु निर्जरगुरो-
श्चेद्देवतागायकः ।
ज्ञस्य स्याद्यदि कुम्भकृत्प्रभृतयः
शुक्रारयोर्वा शने-
श्चण्डालोत्तममध्यमौ तदधम-
स्तद्देवताप्रीतये ॥ २२७ ॥

मान्दित्रिकोणयोगेक्षाद्येतस्य यदि पुल्कसः ।
दिवाकीर्तिस्तथा केतुबाधकग्रहयोगतः ॥ इति ॥ २२८ ॥

सौम्ये सौम्यगृहस्थे
बाधेशे तत्प्रतिक्रिया विप्रैः ।
पापे तद्गृहगे वा
चण्डालाद्यैरितीरितं कश्चित् ॥ २२९ ॥

चिकित्सा तु कृता केन रोगशान्त्यै भवेदिति ।
प्रश्नोपि शमनप्रश्नवत्स्यात् कर्मात्र शक्तिमत् ॥ २३० ॥

---

तेषां राशीनामंशकानां च त एव गुणाः। सात्विकेति सात्विककर्मा राजसकर्मा तामसकर्मा वा एतत्प्रतिक्रियाकर्ता अस्तु । एतदेव स्पष्टमुच्यते श्लोकद्वयेन ॥ २२६ ॥

**सूर्याचन्द्रमसोरिति** ॥ चन्द्रार्कजीवानां त्रयाणामपि यद्यपि सात्विकत्वं तथापि चन्द्रार्कापेक्षया जीवस्य तच्छ्रेष्ठत्वाशयेन प्रतिक्रियाकर्तृभेदोक्तिः । एवं बुधशुक्रयो राजसत्वे कुजमन्दयोस्तामसत्वे च गुरुलघुत्वभेद इति चिन्त्यम् ॥ २२७ ॥

**मान्दीति** ॥ योगेक्षादीत्यादिशब्देन केन्द्रसम्बन्धो गृह्यते । एतस्य बाधकग्रहस्य । पुल्कसदिवाकीर्ती चण्डालभेदौ । ग्रहयोगतः योगशब्देन त्रिकोणादिसम्बन्धो ग्राह्यः ॥२२८

**सौम्य इति** ॥ अत्र बाधेशपदेन बाधाकर्ता विवक्ष्यते । शुभत्वपापत्वभेदात्तत्क्षेत्रस्थित्या चात्र प्रतिक्रिया कर्तृभेदः ॥ २२९ ॥

**चिकित्सेति** ॥ शमनप्रश्नवत् पृष्ठोदयेत्यादि श्लोकद्वयोक्तवत् । कर्मात्र शक्तिमदिति विशेषः । शक्तिमद्बलाधिकम् ॥ २३० ॥

मृत्युञ्जयजपादिहोमादीनां कर्तृचिन्तने धिषणः ।
अनुकूलो जलवृद्धिर्दशमगुणश्चास्तु लग्नमूर्ध्वमुखम् ॥२३१॥

एतद्रोगशमननिरूपणप्रकारविषयम् ।

॥ इति प्रश्नमार्गे पञ्चदशाध्यायः ॥

## अथ षोडशाध्यायप्रारम्भः ॥

अध्यायैः पञ्चदशभिर्गतैरेतैः समीरितः ।
आयुः प्रश्नः सरोगारम्भान्तबाधाप्रतिक्रियः ॥ १ ॥
पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत् ।
इत्युक्त्वायुः परीक्ष्याथ लक्षणं किञ्चिदुच्यते ॥ २ ॥

अत्र प्रथममारूढवशात् किञ्चिल्लक्षणमुच्यते ।

लग्ने चरे चरमुखांशकतः क्रमेण
दूरे नृणां चरणसंस्थितितद्वयानि ।
अभ्यर्ण एव तदिदं त्रितयं स्थिरर्क्षे
तद्वद्द्वदेत्तदुभयात्मनि मध्यदेशे ॥ ३ ॥

---

**मृत्युञ्जयेति** ॥ अनुकूलः इष्टभावस्थितिशुभयोगदृष्टिबलाधिक्यादिभिः । दशमगुणः दशमभावस्य प्राबल्यादिभिर्गुणाधायकत्वम् ॥ २३१ ॥

**एतदिति** ॥ एतद्बाधारूढादित्याद्युक्तम् ॥

॥ इति प्रश्नमार्गे पञ्चदशाध्यायः ॥

**अध्यायैरिति** ॥ गतैरतीतैः ॥ १ ॥

**पूर्वमिति** ॥ षोडशाध्यायो लक्षणकथनप्रधानः । तत्र गतानुवादपूर्वकं सम्बन्धकथनपरमेतत्पद्यम् ॥ २ ॥

**अत्रेति** ॥ अत्र लक्षणेषु ॥

**लग्न इति** ॥ अत्र लग्नशब्देनारूढमेव गृह्यते । न तु प्राग्लग्नम् । आरूढवशादित्युपक्रमात् । अंशकशब्देन नवांशकग्रहणम् । विशेषानुक्तौ प्राधान्यान्नवांशग्रहणमिति सम्प्र-

आरूढाधीश्वरारूढराश्यंशाभ्यां च चिन्तयेत् ।
एतद्द्वयोश्च संवादे सति स्याल्लक्षणं दृढम् ॥ ४ ॥
जन्मलग्नाधिनाथस्य प्रश्नलग्नाधिपस्य च ।
दिशि सिध्येदयत्नेन कार्यं वैरिजयादिकम् ॥ ५ ॥
आरूढे सप्तमे वास्य ग्रहश्चेदुच्चसंस्थितः ।
तस्योक्तं द्रव्यसर्वस्वं प्रष्टुरस्तीति निर्दिशेत् ॥ ६ ॥
आरूढभतदंशाभ्यां लक्षणं यद्यदीरितम् ।
आरूढविषये पूर्वं तत्तदत्रापि योजयेत् ॥ ७ ॥

---

दायः । अरूढे चरे सति तदा प्रष्टुः केनापि हेतुना स्वगृहाद्दूरे स्थितिर्भवति । तत्रारूढनवांशकेपि चरे दूरास्थितिमतोपि सञ्चारः । नवांशके स्थिरे तु स्थितिरेव । नवांशके उभये कदाचित्सञ्चारः कदाचित्स्थितिः । आरूढे स्थिरे सति अभ्यर्णे एव स्वदेशसमीप एव पृच्छको वर्तते । तत्र चराद्यंशकवशात्सञ्चारस्थितितद्द्वयानि । उभये आरूढे सति मध्यदेशे निवासः । तत्राप्यंशवशात्सञ्चारादित्रयं च । अत्र "लग्नस्फुटस्य भं त्यक्त्वा कलाभागांश्च निक्षिपे"दित्यानीतारूढस्फुटे न नवांशको ग्राह्य इति केचित् । अपरे "कलशमधरिश्चवकोणा"दिरयुक्तरीत्या स्वर्णविन्यासस्थानानीतनवांशक इति। उभयमपि संवादार्थं चिन्त्यमेव ॥३॥

**अरूढेति** ॥ आरूढेति आरूढाधीश्वरेणारूढौ अधिष्ठितौ यौ राश्यंशौ ताभ्याम् । एतद्द्वयोः एते श्लोकद्वयोक्ते द्वे लक्षणे तयोः। संवादे ऐकरूप्ये दृढं निश्चयेनादेष्टव्यम् । अर्थाद्द्वैरूप्ये विकल्प्य वक्तव्यम् ॥ ४ ॥

**जन्मलग्नाधिनाथस्येति** ॥ जन्मशब्देन जातकमुच्यते । जन्मलग्नादिनाथदिशि सर्वदा यत्नं विना कार्यसिद्धिः । प्रश्नकाले तल्लग्नाधिपदिश्यपि ॥ ५ ॥

**आरूढ इति** ॥ अस्यारूढस्य । सम्बन्धसामान्ये षष्ठी । आरूढात्सप्तम इति यावत्। तस्य ग्रहस्योक्तम् । "अर्कांशे तृणकनकोर्णभेषजाद्यै"रित्यादिना कर्माजीवे; "सौर्यां स्वं नखदन्तचर्मकनके"त्यादिना दशाफले; "चन्द्रारोरगसौरै"रित्यादिना बाधाहेतुनिरूपणे, च निर्दिष्टम् ॥ ६ ॥

**आरूढभेति** ॥ आरूढभेन "सिंहे कुक्ष्यक्षिजो व्याधि"रित्यादिकम् । तदंशेन 'आरूढांशे बलविरहिते' इत्यादिकं च। पूर्वमष्टमाध्याये । अत्रापि लक्षणकथनविषयेपि ॥

एतदारूढवशाल्लक्षणविषयम् । अथ ग्रहस्थितिवशाल्लक्षणमुच्यते ॥

सुखान्त्यार्द्धादि षड्भावस्थिता यदि शुभग्रहाः ।
सम्पत्स्यादुपरि प्रष्टुः पापश्चेदापदं वदेत् ॥ ८ ॥

कर्मान्त्यार्द्धादिषड्भावस्थितैर्भूतं शुभाशुभम् ।
तुलादिषट्के लग्नस्थे दैवविन्निर्दिशेदिति ॥ ९ ॥

मेषादिषट्के लग्नस्थे सुखान्त्यार्द्धादिषट्कगैः ।
गता स्यात्सम्पदापच्च भविष्यन्त्यन्यषट्कगैः ॥ इति ॥१०॥

सामादिषु प्रयोक्तव्य उपायः समयेत्र कः ।
इति जिज्ञासवे वाच्यं लक्षणं किमपीर्यते ॥ ११ ॥

साम्नो जीवः स भृगुतनयो दण्डनाथौ कुजार्कौ
दानस्येन्दुः शिखियमबुधाः सासुरा भेदनाथाः ।
वीर्योपेतैरुपचयगतैर्लग्नगैः केन्द्रगैर्वा
तत्तत्सिद्धिं व्रजति तदहस्स्वंशके वापि तेषाम् ॥ इति ॥

---

**सुखेति** ॥ सुखान्त्यार्द्धादीति चक्रपश्चिमार्द्धस्थिता इति भावः । उपरि प्रश्नकालादनन्तरम् ॥ ८ ॥

**कर्मेति** ॥ कर्मान्त्यार्द्धेति चक्रपूर्वार्द्धस्थितैरिति भावः । भूतं अतीतकालानुभूतम् । शुभाशुभं शुभैश्शुभमशुभैरशुभम् । लग्नस्थे आरूढे इति पूर्वसार्द्धश्लोकोक्तप्रकारेण ॥ ९ ॥

**मेषेति** ॥ मेषादीति चक्रपश्चिमार्द्धगैर्भूतं चक्रपूर्वार्द्धगैर्भविष्यच्च शुभाशुभमादेष्टव्यमिति मेषादिषट्के आरूढे विशेषः ॥ १० ॥

**सामादिष्विति** ॥ लग्नस्य केन्द्रान्तर्भूतत्वेपि लग्नगैरिति पृथगुक्त्या लग्नस्थग्रहसम्बन्ध्युपायो विशेषात्फलद इति सूच्यते । दशमभावस्य केन्द्रगतेपि तृतीयषष्ठैकादशानामतथात्वादुपचयगतैरित्यस्य न वैयर्थ्यशङ्कावकाशः । तत्तत्सिद्धिं तेन तेनोपायेन सिद्धिं फलसिद्धिम् । व्रजति पृच्छकः कर्त्ता । तदहस्सु तेषां साधकानां ग्रहाणामहस्सु वारेषु । तेषामंशके कालहोरादिनभागे। अत्र राहुकेत्वोर्वारहोराधिपत्वाभावेपि यथासंख्यं मन्दभौमयोर्वारहोरे ग्राह्ये । पक्षान्तरे तूभयोरपि मन्दस्यैव कालहोरे । तदहस्स्वित्यत्र "राजाहस्सखि-

एतस्मिन् भवने किं वा धनमस्ति न वेति यः ।
जिज्ञासुर्वाच्यमेतस्मै लक्षणं सम्प्रतीर्यते ॥ १३ ॥

यदि कण्टकवर्तिनः शुभाः स्यु-
र्यदि वैकादशवेश्मगाः विलग्नात् ।
धनवद्ग्रहमादिशेत्तदानीं
द्वारं च स्वदिशि परं वदेद्विधिज्ञः ॥ १४ ॥

प्राच्यादीत्युदितेन यत्र विधिना
गेहस्य भागे भवे-
त्सौम्यः कण्टकलाभगोऽत्र निहितं
तस्योदितं तद्धनम् ।
स्वोच्चस्थो यदि भूरिवैरिगृहनी-
चस्थः स चेत्तल्लघु
क्रूराधिष्ठितगेहभागनिहितं
वाच्यं च शल्यादिकम् ॥ इति ॥ १५ ॥

अथ लक्षणान्तरम् ।

---

म्यष्टजि''ति टच्तु समासान्तविधेरनित्यत्वान्न भवतीति समाधेयम् । 'तदहे स्वांशके वापी'-ति पाठान्तरं वा कल्पनीयम् । इतिशब्देन सामाद्युपायप्रयोगविषयनिरूपकग्रन्थपरिसमाप्तिर्विभाव्यते ॥ ११, १२ ॥

**एतस्मिन्निति** ॥ एतस्मिन्निर्दिश्योक्ते मनसा सङ्कल्पिते वा । जिज्ञासुर्जिज्ञासापूर्वकप्रश्नकर्ता । कण्टकवर्तिनः केन्द्रगाः शुभाः सर्वे । एकादशवेश्मगा इति योगान्तरम् । धनवद्बहुधनयुक्तम् । स्वदिशि योगकर्तृग्रहेषु प्रबलानां प्रागाद्या रविशुक्रेत्युक्तादिशि । परं तत्रैव । विधिज्ञः ऊहापोहपूर्वकमालोच्य फलादेशे निपुणः । प्राच्यादीत्युदितेन प्राच्यादिग्रहे इत्युक्तेन । यत्र भागे दिशि विदिशि वा । अत्र भागे उदितं संज्ञाध्यायादिषूक्तम् । स सौम्यः स्वोच्चस्थो यदि भूरि अतिबहु । तद्धनम् । क्रूरेति । क्रूरैः कुजादिभिराधिष्ठिते तदधिष्ठितराश्यंशसंबन्धिनि गेहभागे निहितं निक्षिप्तम् ॥ १३, १५ ॥

भानुः कौसुम्भवासाः सितवसनधरो
ग्लौरसृग्रक्तवासाः
पालाशाच्छादनो ज्ञो वसनमथ गुरोः
पीतमच्छस्य चित्रम् ।
कोणः कृष्णांबरः स्यादथ कथयतु तै-
र्लक्षणं केन्द्रसंस्थै-
रायस्थैर्वा स्ववासोधरयुवतिनृणा-
मागमं प्रश्नकाले ॥ १६ ॥

प्रस्थानलग्नास्तगतैर्बलिष्ठैः
केन्द्रस्थितैर्वा विहगोदितानाम् ।
विप्रादिनारीनरवस्त्रभाजा-
मभ्यागमो वर्त्मनि कीर्तनीयः ॥ १७ ॥

मार्तण्डो व्रणवान् व्रणी धरणिजो वाचस्पतिः काचदृ-
क्चन्द्रो वामपदे व्रणाङ्कसहितः पार्श्वे तिलाङ्को भृगुः ।
चन्द्रो माषतिलादिलाञ्छनयुतः सौम्यः सिरासन्ततो
योज्यं प्राक्तनलक्ष्मणोर्वरकळत्रादेश्च लक्ष्मणदः ॥ १८ ॥

---

**भानुरिति** ॥ कुसुंभेन रक्तं कौसुंभम् । चित्रं = नानावर्णम् । पृच्छाकाले पृच्छकारूढात् केन्द्रलाभसंस्थैर्ग्रहैः प्रश्नकाले तत्तद्वस्त्रधारिणामागमनमादिशेत् । तत्रापि पुरुषग्रहैः पुंसां स्त्रीग्रहैः स्त्रीणां चेति विविच्यादेष्टव्यम् । केन्द्रलाभेषु बहवो यदि बहूनाम् ॥ १६ ॥

**प्रस्थानेति** ॥ यत्रकुत्रापि प्रस्थातुं प्रवृत्तस्य प्रस्थानलग्नात् सप्तमगतैः केन्द्रस्थितैर्वा प्रबलैर्ग्रहैस्तादृशानां वर्त्मनि आभिमुख्यमागमनमादेष्टव्यम् । तेषां विप्रातिजातिविशेषः पुंस्त्रीविभागः तद्धृतवस्त्रविशेषश्च तत्तद्ग्रहानुरूपं वक्तव्यः तत्रास्तगस्य प्राधान्यम् ॥

**मार्तण्ड इति** ॥ काचः = कुप्यविशेषस्तत्सदृशकम् । काचरोगयुक्तः इति वा । प्राक्तनलक्ष्मणोः = भानुः कौसुंभेति प्रस्थानलग्नेति च श्लोकद्वयोक्तलक्षणयोः । वरकळत्रादेस्तु वक्ष्यमाणरीत्या । अदः = प्रकृतश्लोकोक्तं लक्षणम् ॥ १८ ॥

अरूढनाथेन तु लक्ष्म वध्वा-
स्तदस्तनाथेन वरस्य वाच्यम् ।
प्रश्ने विवाहस्य परत्र लग्न-
पुत्रादिकैः प्रष्टृसुतादिकानाम् ॥ १९ ॥

लक्षणकथनेऽमुष्मिन्
खचरवपुर्द्रव्यजातमपि यद्यत् ।
संज्ञास्वस्वदशाफल-
कथितं तद्योजनीयमखिलमपि ॥ २० ॥

यद्यद्वास्त्विह लोके तत्सर्वं धातुमूलजीवमयम् ।
कृष्णीयप्रभृतिभ्यः शास्त्रेभ्यस्तद्भिदा ज्ञेया ॥ इति ॥ २१॥

**आरूढेति** ॥ आरूढनाथो रविश्चेत् कन्यका व्रणवती । सप्तमनाथो गुरुश्चेद्भर्ता मार्जारेक्षणः । एवं रीत्या विवाहप्रश्ने । परत्र विवाहेतरसर्वप्रश्नेषु । लग्नपुत्रादिपैः । आदिशब्देन सहजपनवमपादयो ग्राह्याः । प्रष्टृपुत्रादिकानां आदीति भ्रातृपित्रादिग्रहणार्थम् । लग्नाधिपेन प्रष्टुर्वर्णादिकम् । तृतीयाधिपेन भ्रातुः । तुरीयाधिपेन मातुर्मातुलस्य च । पञ्चमाधिपेन पुत्रस्य । एवम् ॥ १९ ॥

**लक्षणेति** ॥ अमुष्मिन् लक्षणकथने = अत्र प्रदर्शितेषु सर्वेषु लक्षणेष्वपि । वपुः 'मधुपिङ्गलदृक्' इत्याद्युक्तम् । द्रव्यं 'ताम्रं स्यान्मणिहेम' इत्यादिना 'सौर्या स्वं नखदन्तचर्म' इत्यादिना 'भानुः कौसुंभवासाः' इत्यादिना 'मार्तण्डो व्रणवान्' इत्यादिना चोक्तमखिलं योजनीयम् । अयमर्थः केन्द्रस्थे रवौ ताम्रादीनां नखदन्तादीनां वानयनं मधुपिङ्गलदृगित्याद्युक्तस्वरूपस्य कस्यचिदागमनं वा । चन्द्रे तु तनुवृत्ततनुरित्याद्युक्ताकृतेरागम इक्षुक्षीरादीनां मणेर्वानयनम् । आरूढेशो रविश्चेन्मधुपिङ्गलदृगित्याद्याकृतिः कन्यका । रविरारूढादस्तेशश्चेद्भर्ता रव्याकृतिः । एवं विवाहप्रश्नो अन्यप्रश्नेष्वारूढेन पृच्छकाकृतिः । पञ्चमेशेन पुत्राकृतिः । तृतीयेशेन सहजाकृतिः । नवमेशेन पित्राकृतिः । एवं युक्त्यालोच्य वक्तव्यम् ॥ २० ॥

**यद्यदिति** ॥ कृष्णीये तु चन्द्रारोरगसौरैरित्यादिना सविस्तरमुक्ताः । प्रभृतिशब्देनार्यासप्तत्यादिषु संक्षेपतः प्रदर्शिताः । अस्मिन्नप्येकत्रिंशे नष्टाध्याये सविस्तरं वक्ष्यन्ते । तेभ्यश्च ज्ञेयाः । ज्ञात्वा लक्षणकथने योज्यमित्यभिप्रायः । योजनाप्रकारस्त्वेवम् ।

अथ शकुनविषयं किञ्चिल्लक्षणमुच्यते ॥

द्यूनस्थेष्वशुभेषु दुष्टशकुनं
सौम्येषु तच्छोभनं
दूतारूढवशादमुष्य कथयेत्
प्रश्नाधिरूढेन वा ।
कर्मारूढसुखस्थितैर्बलयुतै-
रप्येवमादिश्यतां
यातुर्वा शकुनं शुभाशुभमिति
प्रस्थानलग्नाद्वदेत् ॥ २२ ॥

तत्रस्थे चतुरंघ्रिसंज्ञविहगे
मातङ्गपश्वादयो-
ऽभ्यायाताः पथि पक्षिसंज्ञखचरे
दृष्टाश्चकोरादयः ।
सूर्यारौ तु चतुष्पदौ निगदितौ
मन्देन्दुजौ पक्षिणौ
शीतांशुस्तु सरीसृपोष्टचरणः
शास्त्रे प्रविष्टः फणी ॥ २३ ॥

---

धात्वादिकारकग्रहेषु लाभाद्यभीष्टस्थितेषु धात्वादिद्रव्यलाभः। अष्टमाद्यनिष्टस्थितेषु तन्नाशः। अत्रैव पूर्वस्मिन्नध्याये 'मूलं भूमिमहीरुहाद्य'मिति धात्वादिस्वरूपमुक्तम् । वक्ष्यमाणे शकुनलक्षणे 'प्रस्थानलग्ने'ति पूर्वोक्तलक्षणेपि योज्यम् ॥ २१ ॥

**द्यूनस्थेष्विति** ॥ एतच्छ्लोकत्रितयं प्रश्नभाषाख्यग्रन्थान्तरादुद्धृत्य संयोजितम् । द्वितीयाध्याये आश्रितर्क्षनिरूपणघट्टे लिखितचरमपि लक्षणकथनोपयोगित्वादत्रापि पुनः संयोजितम् ॥ २२--२४ ॥

चण्डालाभ्यागमो यद्यहिशिखिगुलिक-
ब्रध्नजास्तत्रसंस्थाः
शुक्रेन्दू चेद्वधूनां यदि शशितनय-
स्तत्र विद्वज्जनानाम् ।
विप्राणां वाक्पतिश्चेद्यदि धरणिसुतः
शस्त्रिणां कीर्तनीयो
वर्त्मन्यभ्यागमः प्राग्यदि पुनररुणः
श्रैष्ठ्यभाजां जनानाम् ॥ इति ॥ २४ ॥

अथ दिनगतनाडिकावशाल्लक्षणमुच्यते ।

आदित्यादिदिनेष्विनादिफणिप-
र्यन्ताः क्रमेणोदयं
स्वस्वाद्याः स्वदिनेषु यान्ति दिवसा-
ष्टांशेषु खल्वष्टसु ।
जीवज्ञास्फुजितां क्रिया हि सकलाः
सिध्येयुरिन्दोः शनै-
र्नान्येषामुदये वदेदिति सुधीः
सश्चिन्त्य पृच्छाविधौ ॥ २५ ॥

**आदित्येति** ॥ आदित्यादिदिनेषु इनादिफणिपर्यन्ताः क्रमेण स्वस्वदिनेषु स्वस्वाद्याः दिवसाष्टांशेषु उदयं यान्ति खलु, इति योजना । अस्यार्थः आदित्यवारे प्रथमेष्टांशे सूर्यस्योदयः । द्वितीये चन्द्रोदयः । एवमष्टमे राहूदयः । चन्द्रवारे प्रथमेष्टांशे चन्द्रस्य । पुनः कुजादीनाम् । एवमष्टमे सूर्योदयः । कुजवारे प्रथमेष्टांशे कुजस्य पुनर्बुधादीनाम् । एवं सर्वेषु दिनेष्वपि मन्दानन्तरो राहुः । इति । आस्फुजिच्छुक्रः । जीवज्ञास्फुजितामुदये सकलाः क्रियाः सिध्येयुर्हि इति योजना । इन्दोरुदये शनैः सिद्धिः । अन्येषां सूर्यारमन्दाहीनां न कार्यसिद्धिः । प्रश्ने दिनेत्यनेन दिनाष्टांशानयनमुक्तम् । अस्मिन्नेवाध्याये द्वादशश्लोके, 'अंशके वापि तेषा'मित्यत्रांशकशब्देन कालहोरावत्स्वस्वोदयकालाष्टांशोपि ग्राह्य इति विभावनीयम् । प्रश्ने दिनेत्यत्र शेखरशब्देन पञ्चविंशत्युत्तरशतद्वयात्मको हारकोभिहितः । स च समरात्रिंदिवे विषुवकाल एव ग्राह्यः । अहोल्पाधिक्यवशात्कालान्तरे

प्रश्ने दिनगतविघटी-
र्विन्यस्य विभज्य शेखरैः शेषात् ।
विज्ञेयो विहगाना-
मुदयो वक्तव्यममुनेदम् ॥ २६ ॥

अत्रानुष्ठानपद्धतिः ।

गतनाडिकामुदधिसंगुणां हरे-
दवनीधरैस्तु परिशेषितैः क्रमात् ।
मृतिविभ्रमौ कलहसौख्यनिर्गमाः
सकळत्रबन्धनमितीरयेद्बुधः ॥ इति ॥ २७ ॥

अथ पञ्चभूतवशाल्लक्षणमुच्यते ।

आत्मश्वासोद्भवो दूतवाक्यप्रथमवर्णजः ।
दिनयातघटीभूतो भूतानामुदयस्त्रिधा ॥ २८ ॥

---

न ग्राह्यः । तत्र तु तत्तत्कालीनदिनप्रमाणं विघटीकृत्याष्टभिर्हृत्वा यल्लब्धं तद्धारकत्वेन कल्पनीयम् । तत्कदाचिच्छेखरसंख्यातो न्यूनं कदाचिदधिकं च स्यात् । किं चाह्नि पृच्छा यद्येव निरूपणमेतदुपपद्यते । निशि तु न । दिनगतेनैव फलकथनात् । अथवा समानयुक्तिकत्वन्यायान्निशायां तु 'वाराधिपात्पञ्चमाद्या' इति वचनमनुरुध्य रविवारे प्रथमरात्र्यष्टमांशे गुरूदयः । द्वितीये शुक्रोदयः । एवमष्टमे बुधोदयः। चन्द्रवारे तु प्रथमे शुक्रोदयः । द्वितीये मन्दोदयः । कुजवारे पुनः प्रथमे मन्दोदयः । द्वितीये राहूदयः । बुधवारे पुनः प्रथमे निशाष्टांशे राहूदयः । इत्येवं रीत्या कल्पनीयम् । तत्र रात्रौ शेखरस्थाने विषुवेतरकाले रात्रिप्रमाणं विनाडीकृत्याष्टभिर्हृत्वा यल्लब्धं तदेव हारकत्वेन कल्पनीयम् । इत्यादि सर्वं स्वयं सुधीभिरालोचनीयम् । पूर्वश्लोके ग्रन्थकार एव 'सुधीः सञ्चिन्त्ये'ति कर्तृविशेषोपादानेन समुपसर्गप्रयोगेण चेदमेव समसूचयदिति विदांकुर्वन्तु विद्वांस इत्यलम् ॥ २६ ॥

**अत्रेति** ॥ अत्र दिनगतनाडिकाभिर्लक्षणकथनविषये ॥

**गतनाडिकामिति** ॥ उदधयश्चत्वारः । अवनीधराः सप्त । मृतिप्रमुखानि सप्त फलानि । विभ्रमः = सञ्चारः । निर्गमः = प्रवासः । कळत्रशब्देन तद्योगो लक्ष्यते । इतिनानुष्ठानपद्धतिग्रन्थस्य दिनगतनाडिकावशाल्लक्षणस्य च परिसमाप्तिः प्रकाश्यते ॥ २७ ॥

**आत्मेति** ॥ त्रिधा = प्रकारत्रयमप्यनुपदं श्लोकत्रयेण प्रकाश्यते ॥ २८ ॥

उभयोः पुटयोस्तु दण्डसंस्था
पृथिवी तोयमधः कृशानुरूर्ध्वम् ।
पवनस्तु तिर्यङ्नसोथ मध्ये
गगनं भूतगतिस्तन्दूद्भवेयम् ॥ २९ ॥

भूमेरकारं पयसस्त्विकारं
वह्नेरुकारं मुनयो वदन्ति ।
एकारमोकारमपि क्रमेण
वायोश्च वर्णं नभसश्च वर्णम् ॥ ३० ॥

यामः स्याद्दिवसाष्टभाग इह ते-
ष्वोजे महीपूर्वको
युग्मे स्याद्गगनादिगश्च दिवसे
रात्रौ च भूतक्रमः ।

**उभयोरिति** ॥ दण्डशब्देन नासाद्वारयोर्मध्यप्रदेश उच्यते । नासिकाद्वारद्वय-मध्ये, दण्डद्वयाकारः श्वासश्चेदित्यर्थः । नसो नासिकायाः । मध्ये नासाद्वारद्वयमध्ये । एकीभूय श्वासो निर्गतश्चेदित्यर्थः । तन्नूद्भवा आत्मश्वासोद्भवेति भावः । द्वितीयाध्याये 'मे-दिन्याः खलु षोडशांगुल'मित्यादिना निर्णीतः पञ्चभूतोदयो लक्षणकथनेत्र नोपयुज्यते । किं त्वयमेव । अत्र श्लोके तृतीयपादे छन्दःशास्त्रानुसारेण पञ्चमवर्णेन लघुना भाव्यम् । अत्र तु'र्ये'ति संयुक्तपरत्वाद्गुरुरित्यत्र समाधानं निरंकुशाः कवय इति । अथवा 'द्वितीयं हेमप्राकारं कण्डूकरी जीवनहृम्वसंज्ञे' इत्यादिवदत्रापि लघूच्चारणेन लघुत्वं कल्प्यम् ॥ २९ ॥

**भूमेरिति** ॥ दूतवाक्यप्रथमवर्णजभूतोदयनिर्णायकमेतत्पद्यम् । अत्राकारमित्यादि-ना न ह्रस्वमात्रं किं तु तत्सवर्णा इतरेपि दीर्घादयो ग्राह्याः । प्रथमवर्णेत्यत्र वर्णग्रहणा'त्स-वर्णमपि गृह्णाति वर्णशब्देन वर्णितः ।' इति ह्यनुशासति । इह व्यञ्जनाक्षराणि न चि-न्त्यन्ते । ऋकारऌकारयोर्यद्यपि भूतोदयो नोक्तस्तथापि, ऋकारेणाग्निः, ऌकारेण जलं च ग्राह्ये । उभाभ्यां पृथिवीत्येके । उभाभ्यामग्निरित्यन्ये । ऋकार ऌकारयोर्यथासंख्यमग्निजले इत्येव परिशुद्धः प्राचीनः सम्प्रदायः ॥ ३० ॥

**याम इति** ॥ दिवसाष्टभागः दिवसस्य विषुवदिनस्याष्टभागोष्टमांशः पादोनना-डिकाचतुष्टयात्मकः । यामस्तत्संज्ञः स्यात् । एवं आहत्य षष्टिनाडिकात्मके दिवसे षोड-

भूमेः पादयुता घटी तु पयसो
नाड्यङ्घ्रिहीना शुचे-
र्नाड्यर्द्धं पवनस्य खस्य घटिका-
पादो द्वयोर्यामयोः ॥ ३१ ॥

भूतानामुदयेन च
विचिन्तयेत्प्रष्टृकार्यमखिलमपि ।
न मृतिर्न रोगशान्ति-
र्द्धरणेरुदये जलोदये तु पुनः ॥ ३२ ॥

ईप्सितमचिरात्सिध्यति
वह्नेरुदये मृतिर्विरोधश्च ।
वायोरुदये सर्वं
सिध्यति गमनागमादि चलकार्यम् ॥ ३३ ॥

व्याध्यारंभो नाशः
स्थिरकार्यं चाहवश्च तथा ।
आकाशोदयकाले
सिध्यत्यशुभं विशेषेण ॥ ॥ ३४ ॥

श यामा भवेयुः । तेष्वोजे प्रथमतृतीयादियामेषु । महीपूर्वको गगनान्तो भूतक्रमः । युग्मे द्वितीयतुरीयादियामेषु गगनादिकः पृथिव्यन्तो भूतक्रमः । उत्तरार्धेन भूतानां नाडीमानमुच्यते । भूमेः पादयुता घटी । एवमाहत्य विंशतिनाडिकात्मकः पृथिवीभूतोदयकालः पयसस्तु घटी । आहत्य षोडश नाड्यः । शुचेरग्नेरंघ्रिहीना नाडी । आहत्य द्वादश । पवनस्य नाड्यर्धम् । आहत्याष्टौ । एवं दिनयातघटीभूतो भूतोदयो बोध्यः ॥ ३१ ॥

**भूतानामिति** ॥ उदयेन त्रिप्रकारेण । विचिन्तयेद्विचिन्त्यादिशेत् । अखिलं = इष्टमनिष्टमपि । ईप्सितं = अभीष्टसर्वस्वम् । गमनागमनादि चलकार्यं सर्वं सिध्यतीति योजना । व्याध्यारम्भः = नवानां रोगाणामुद्गमः । नाशः = सम्पत्सन्तानादेः ॥ ३२–३४ ॥

प्रागात्मश्वासविषये विस्तराद्यदिहेरितम् ।
पञ्चानामपि भूतानां फलं तदपि चिन्तयेत् ॥ इति ॥ ३५ ॥

एतत्पञ्चभूतवशाल्लक्षणविषयम् । पुनरपि लक्षणान्तराण्युच्यन्ते ।

लग्नेशोऽशुभसंयुतो यदि नृभे
प्रष्टुर्विपत्तिर्नृभिः
पश्वाद्यैश्चतुरङ्घ्रिभेषु यदि चे-
त्तद्भेदतो निर्दिशेत् ।
सर्पाख्यैस्तु सरीसृपाख्यभवने
यद्यंबुराशौ नदी-
कूपादौ पतनं झषादिजलज-
न्तूपद्रवो वा यदि ॥ ३६ ॥
संहारोडुगतोऽर्कजः क्षितिभुवा
युक्तोऽथवा वीक्षितः
प्रष्टुर्मन्दिरदाहकृत्स शिखिना
युक्तेक्षितो वा तथा ।
संहारोडुगतोऽसदीक्षितयुतो
लग्नाधिपः कुष्ठका-
यैवं राहुयुतेक्षिते तु तनुपे
प्रष्टाहिदष्टो भवेत् ॥ ३७ ॥

**प्रागिति** ॥ प्राक् = द्वितीयाध्याये । इहास्मिन्नेव ग्रन्थे । ईरितं 'पक्षेच्छे खलु पक्षतौ क्षितिरिडायाते'त्यादिना ॥ ३५ ॥

**लग्नेश इति** ॥ लग्नेश इति तस्य पापयोगेऽवश्यं विपत् । तत्स्थितराशिना तद्विशेषः । तद्भेदतः = तेषां चतुरंघ्रिभानां भेदतः । सिंहे दंष्ट्रिभिः; वृषे शृङ्गिभिः, एवं रीत्या । कर्कटकवृश्चिकौ सरीसृपराशी ॥ ३६ ॥

**संहारेति** ॥ कृत्तिकार्द्रादिसंहारनक्षत्रगतस्य शनेः कुजकेत्वोरन्यतरस्य योगवीक्षणयोरन्यतरस्मिन् सति पृच्छकदाहो वक्तव्य इति पूर्वार्धार्थः । एवं संहारोडुगते इत्यर्थः ।

मार्ताण्डे तनुगे भृगौ धनगते
हेमागमः पृच्छतां
लग्नस्थे भृगुजे व्ययस्थित इने
हेम्नो विनाशो भवेत् ।
मन्दे लग्नगतेऽर्थगे च शशिजे
लाभोऽयसः कथ्यतां
मन्दे रिष्फगते बुधेऽथ तनुगे
नाशश्च वाच्योयसः ॥ ३८ ॥

लाभस्ताम्रस्य वाच्यो वपुषि यदि भृगु-
र्भूमिपुत्रो धनस्थो
भूपुत्रे लग्नसंस्थे पुनरपि भृगुजे
रिष्फगे ताम्रनाशः ।
वक्तव्योऽर्थलाभः क्षितिभुवि तनुगे
सूर्यपुत्रे धनस्थे
रिष्फस्थे भूमिपुत्रे वपुषि यदि शनिः
कथ्यतामर्थनाशः ॥ ३९ ॥

भानोर्लग्ने पशुगजतुरङ्गादिकानां विनाशः
कीटोत्थापत्तपनबुधयोर्मृत्युभीतिः कुजस्य ।

---

राहोरसन्मध्यपातित्वेपि पृथगुपादानात्तक्रकौण्डिन्यन्यायेन न कुष्ठकारित्वं किं त्वाहतेनकारित्वमेव । इतरे तयोर्विकल्पमन्ये समुच्चयं चाभिदधति ॥ ३७ ॥

**मार्ताण्ड इति** ॥ अयसो लोहस्य । अर्थलाभ: धनसामान्यलाभः । न तु द्रव्यविशेषलाभः ॥ ३८, ३९ ॥

**भानोरिति** ॥ लग्ने लग्नभावास्थितौ । नीचारिस्था इति नीचस्थित्यादिदोषत्रितयान्यतमसहितग्रहाणां लग्नस्थितावेव तत्तत्प्रोक्तदोषफलकथनावकाश इति गम्यते । अत्रा-

इन्दोः सूनोर्विपदिह सुहृत्पुत्रयोः कीर्तनीया
नीचारिस्था रविहतकरा ये फलं प्रोक्तमेषाम् ॥ ४० ॥

स्वोच्चस्थितो देवगुरुर्भृगुर्वा
चन्द्रेण युक्तो यदि लग्नसंस्थः ।
प्रीतिर्भवेदेव जनात्समस्तात्
पक्षेण लाभश्च चतुष्पदानाम् ॥ इति ॥ ४१ ॥

दूतोक्तादिमवाक्यस्य वर्णसंख्यावशादपि ।
कथ्यते लक्षणं किञ्चित्सम्प्रदायान्तरोदितम् ॥ ४२ ॥

पञ्चघ्नेऽष्टविभाजितेऽक्षरगणे
दूतोदिते शिष्यते
तत्रैकं यदि देवराट्शिखिमुखा
दिक्पा यदि द्व्यादिकम् ।
दूतोक्तार्णगणे त्रिभिः खलु हृते
शिष्टैकता चेद्वदः
साध्यो नूनमसाध्य एव युगळे
शिष्टे त्रिके दुश्शमः ॥ ४३ ॥

---

रिपदं शत्रुक्षेत्रे लाक्षणिकम् । कीटोत्थापदिति मूषिकशलभशुकादिजन्यकृषिविनाशस्याप्युपलक्षणम् ॥ ४० ॥

**स्वोच्चेति** ॥ समस्तात् जनात् प्रीतिर्भवेदेव । सर्वेपि जनाः पृच्छके प्रीतियुक्ता भवेयुरिति भावः । पक्षेण पञ्चदशभिर्दिनैः ॥ ४१ ॥

**पञ्चघ्न इति** ॥ तत्र एकं शिष्यते । यदि देवराट् । इति योजना । फलप्रद इति शेषः । एतैः फलमनुपदमेव श्लोकचतुष्टयेन वक्ष्यते । अर्णगणे = अक्षरसमूहे । अत्रोभयत्रापि दूतोक्तादिमवाक्यवर्णसंख्या ग्राह्या । दुश्शमः दुःखेन शमयितुं शक्यः । कृच्छ्रसाध्य इत्यर्थः । कृच्छ्रार्थे खल् ॥ ४३ ॥

व्याधीनां शमनं करोति वलभि-
देवस्य पूजादिकै-
रग्निर्होमविधानतोथ पितृपू-
जाभिः पितॄणां पतिः ।
रक्षः सूचयति व्यथार्दितनृणां
रुग्ब्रह्मरक्षोमुखा-
वेशेनेति विधानमस्य शमना-
याधीयतां धीमता ॥ ४४ ॥

तैलाभिषेकाच्च घृताभिषेका-
द्देवे सधारादपि तर्पणाद्वा ।
पाशी विधत्ते गदशान्तिमेषां
वक्त्यप्यभावादिकमार्तिहेतुम् ॥ ४५ ॥

मालापटीरागरुगुग्गुलुत्थ-
धूपप्रदानाभरणार्पणाद्यैः ।
देवप्रसादेन गदोपशान्तिं
करोति नृणां खलु मातरिश्वा ॥ ४६ ॥

**व्याधीनामिति** ॥ देवस्य = स्वस्वेष्टदेवस्य । पूजादिकैः = पूजोत्सवादिकरणैः । होमविधानतः = मृत्युञ्जयादिहोमकरणात् । अस्य = ब्रह्मरक्षोमुखावेशस्य । विधानं = देशकालाद्यवस्थानुरूपम् । आधीयतां = विधीयताम् ॥ ४४ ॥

**तैलेति** ॥ देवे = विशेषतः शिवे । तर्पणात् = मालादीपनिवेद्यादिभिस्तृप्तिकरणात् । एषां = तैलाभिषेकादीनाम् । अभावो = नियमेन क्रियमाणस्याकरणम् । आदिशब्देन परैः कल्पितस्य विहननादिकम् ॥ ४५ ॥

**मालेति** ॥ पटीरं = चन्दनम् । तदागुरुत्थधूपप्रदानमाभरणार्पणं च । तदाद्यैः यो देवप्रसादस्तेन । अनिभे = पृच्छकजन्मनक्षत्रे । भारतेन = तत्पाठेन । पुराणादिपाठस्यापीदमुपलक्षणम् । त्रय्या = वेदाध्ययनेन ॥ ४६, ४७ ॥

देवद्विजार्चनविधिं जनिभे जनानां
रुक्शान्तये विहितवानळकाधिनाथः ।
गीतेन नृत्तकरणेन च भारतेन
त्रय्या च देवपरितोषणमप्युमेशः ॥ इति ॥ ४७ ॥

प्रष्ट्रा वितीर्णताम्बूलैः शुभाशुभमशेषतः ।
वाच्यं द्वादशभावोत्थं तत्प्रकारोऽथ लिख्यते ॥ ४८ ॥

ताम्बूलैः प्रष्टदत्तैरपि फलमखिलं
तस्य वक्तव्यमेवं
प्रारभ्योपर्यधस्ताद्गणनमिह वपुः-
पूर्वमह्नोर्द्धयोः स्यात् ।
म्लानिक्षत्याद्युपेतं तदयुतमपि य-
द्भावसंबन्धि पत्रं
तस्य व्याध्याद्यनिष्टं भवति शुभमपि
प्राप्तिसंवर्द्धनाद्यम् ॥ ४९ ॥

ताम्बूलसंख्यां द्विगुणां शरघ्नां
सैकां हरेत्सप्तभिरत्र शिष्टैः ।

**ताम्बूलैरिति** ॥ अह्नः = दिवसस्य । अर्द्धयोः = पूर्वार्द्धपश्चार्द्धयोः क्रमेण । उपर्यधस्तात्प्रारभ्य । वपुर्लग्नम् । तत्पूर्वं गणनं स्यात्। प्रष्टृदत्तं तांबूलनिचयमादाय वामहस्ते प्रोत्तानं विन्यस्य दक्षिणहस्तेन गणयेत् । मध्याह्नात्प्रागुपर्यारभ्याधस्ताद्गणनम् । मध्याह्नात्परमध आरभ्योपरिष्टाद्गणनम् । गणितेषु प्रथमं तांबूलं देहः, द्वितीयं धनम्, एवं द्वादश भावाः कल्प्याः । तदयुतं म्लानिक्षत्याद्ययुतम् । तांबूलस्य महत्वलघुत्वादिना आयव्यययोराधिक्यकल्पनमपि युक्तिसिद्धम् । अत्र ग्रन्थकारेण रात्रौ पृच्छा चेत्कथं लक्षणकथनमिति नोक्तम् । तथापि, अर्धरात्रात्पूर्वं चेदध आरभ्योपरि गणनं, परं चेदुपर्यारभ्याधोगणनं च कार्यमित्युपदेशसिद्धम् । सूर्ये ज्योतिश्चक्रपूर्वार्धस्थिते उपर्यारभ्येति तत्पश्चिमार्धस्थिते अध आरभ्येति युक्त्यापि सिध्यति ॥ ४९ ॥

**तांबूलेति** ॥ ताम्बूललक्षणमेव प्रकारान्तरेणोच्यते । सैकां = गुणनद्वयानन्तरमेकयुताम् । कल्प्यः एकशेषे सूर्योदयः, द्विशेषे चन्द्रोदयः, इत्यादि । लः = लग्नराशिः । सू-

सूर्योदिकानामुदयोत्र कल्प्यो
ग्रहोदयो यत्र स लग्नराशिः ॥ ५० ॥

दुःखाय भानुरुदितः सुखकृच्छशाङ्कः
प्रष्टुः कुजः कलहकृद्धनदौ ज्ञजीवौ ।
शुक्रोखिलाभिमतकृन्मरणाय मन्दो
लग्नादिभावविहगैश्च वदेत् फलानि ॥ इति ॥ ५१ ॥

गजलाभो ममेदानीं किमु स्यादिति कश्चन ।
प्रष्टुः पृच्छति चेत्तस्मै वाच्यं लक्षणमुच्यते ॥ ५२ ॥

लग्नद्यूनतपस्सुतेषु धिषणः
पार्थोनराश्यंशगः
प्रश्ने कुञ्जरलाभकृन्नरपते-
स्तत्रायनाथो यदि ।
नाथः संश्चतुरङ्घ्रिभस्य नियतं
केन्द्रत्रिकोणाश्रितः
शीघ्रं तत् खलु केन्द्रगौ यदि तदा
कर्मेशभाग्याधिपौ ॥ ५३ ॥

---

र्योदीनां मध्ये यस्योदयः सः प्रश्नकाले यस्मिन् राशौ स्थितः, स राशिर्लग्नत्वेन कल्प्य इति भावः ॥ ५० ॥

**दुःखायेति** ॥ ग्रहोदयफलमनेनोच्यते । लग्नादिभावफलमपि ग्रहास्थित्यनुसारेण वदेत् ॥ ५१ ॥

**लग्नेति** ॥ पार्थोनराश्यंशगः कन्याराशिं कन्यानवांशकं वा गतः । प्रश्ने गजलाभप्रश्ने । नरपतेः इदमितरेषामप्युपलक्षणम् । तत्र तस्मिन् योगे । चतुरंघ्रिभस्य चतुष्पाद्राशेः यस्यकस्यापि । भावविशेषापेक्षा नेति भावः । नियतं निस्सन्देहम् । गजलाभो वक्तव्य इति भावः । कर्मेशभाग्याधिपौ केन्द्रगौ यदि तदा तत् शीघ्रं खलु । शीघ्रमेव स्यादित्यर्थः । तदिति सामान्ये नपुंसकम् ॥ ५३ ॥

पुनरपि लक्षणान्तरं लिख्यते ॥

पृच्छायां गुळिकं पूर्वं सम्यग्विस्पष्टमानयेत् ।
तत्कालजान् ग्रहांश्चान्यान् पुनर्लक्षणमादिशेत् ॥ ५४ ॥

भानौ मान्दियुतेक्षिते निजगृहे
कस्यापि पुंसो रुजा
कोपो वा नृपतेस्तदीयपुरुष-
स्यान्यायतो वागमः ।
शीतांशौ कलहो भवेदबलयोः
स्त्रीहेतुकः सोथवा
यः कश्चित्कलहोथवा पुनरिह
श्रूयेत दूरादपि ॥ ५५ ॥

भूपुत्रे कलहो भवेत्परिसरे
श्वद्वीपिनोर्नायकै-
रन्योन्ये यदि वा शवोपनयनं
यद्वाथ मांसागमः ।

---

**पुनरपीति** ॥ लिख्यते श्लोकषट्केनेति भावः

**पृच्छायामिति** ॥ गुळिकं पूर्वं सम्यग्विस्पष्टमिति वचनेन वक्ष्यमाणलक्षणकथने गुळिकस्यैव प्राधान्यमिति सूच्यते ॥ ५४ ॥

**भानाविति** ॥ निजगृहे पृच्छकगृहे । कस्यापि पृच्छकस्य तत्सम्बन्धिनो वा । नृपतेः कोपः राजकोपजन्योपद्रव इति यावत् । तदीयपुरुषस्य राजपुरुषस्य । अन्यायतः आकस्मिकतयेति भावः । शीतांशौ मान्दियुतेक्षित इत्यनुषज्यते । अबलयोः पृच्छकगृहस्थ-योरुभयोः । अथवा स्त्रीहेतुकः स स्त्रीनिमित्तकलहः । अथवा दूरादपि यःकश्चित्कलहः पृच्छकगृहे श्रूयेत ॥ ५५ ॥

**भूपुत्र इति** ॥ भूपुत्रे मान्दियुतेक्षिते सति । परिसरे पृच्छकगृहसमीपे श्वद्वीपिनोः नायकैः अन्योन्यं कलह इति सम्बन्धः । अत्रोभयोश्शुनोर्नायकौ यद्वा द्वयोर्व्याघ्रयोर्नायकौ अथवा शुनो नायकः कश्चिद्व्याघ्रनायकोपरश्चेत्युभौ मिथः कलहायमानौ स्यातामिति भावः ।

शीतांशोस्तनये तु नूतनघटा-
नीतिः प्रधानागमो
यद्वा नूतनलोहजाद्युपगमो
वा विग्रहः पुंस्त्रियोः ॥ ५६ ॥
जीवे भूमिरुहः पतेद्यदि चरे
भग्नः समूलं स्थिरे
मध्ये यद्युभये तदीयविटप-
स्तत्स्याज्झषे वा हये ।
आयानं विमनोद्विजस्य यदि वा
यद्वात्र पक्वागमो
यद्वापन्निजपूर्वहेतुरथवा
तेषां नु शेषक्रिया ॥ ५७ ॥
शुक्रे छेदनमाखुनाथ भविता
वस्त्रस्य पात्रक्षति-
र्दध्नो वा पयसोथवोपनयनं
विप्रागमोन्यायतः ।

श्वद्वीपिनोरिति पदमितरेषामपि चतुष्पदामुपलक्षणमित्यन्ये । यदि वा शवोपनयनम् । अथवा परिसरे शव उपनीयेतेति भावः । शीतांशोस्तनये बुधे मान्दियुतदृष्टे नूतनघटानीतिः । घटशब्दो मृण्मयमात्रोपलक्षकः । लोहजेति ताम्रादिलोहविकाराणामुपगमः ॥ ५६ ॥

**जीव इति ॥** चरे चरराशौ जीवे मान्दियुतदृष्टे । भूमिरुहो वृक्षः भग्नः पतेत् । स्थिरराशौ तु समूलं पतेत् । उभये पुनः मध्ये मध्यवर्ती तदीयविटपो वृक्षविटपः पतेत् । तत्पतनं झषे ईशानकोणे हये वायव्यकोणे । विमनोद्विजस्य येनकेनापि हेतुना दौर्मनस्यभाजो ब्राह्मणस्य । अत्र पृच्छकगृहे । पक्वागमः पक्वानां यत्किञ्चित्फलानामानयनम् । निजपूर्वहेतुः पृच्छकपूर्वपुरुषनिमित्त इत्यापद्विशेषणम् । तेषां पूर्वेषां शेषक्रिया और्ध्वदैहिकं यत्किञ्चित्कर्म ॥ ५७ ॥

**शुक्र इति ॥** आखुना वस्त्रस्य छेदनमिति सम्बन्धः । अन्यायतः न्याय्यं कारणमन्तरेण । पुनरिति पक्षान्तरद्योतकम् । ओतुर्मार्जारः आखुं मूषिकं गृह्णीयात् । अथवा

गृह्णीयात्पुनराखुरोतुमथवा
पादायुधं वाग्रतो
मन्दे कश्चन दीक्षितो गृहमुपे-
त्याथो रुषा यास्यति ॥ ५८ ॥
चण्डालस्य मृतिः स्थले तु निजके
तद्विग्रहो वाऽऽयस-
द्रव्याणामथवा हृतिः पुनरहौ
श्वव्याघ्रयोर्विग्रहः ।
यद्वा पन्नगदंशनं फणियुगा-
नीतिश्च तत्राथवा
दुग्धस्योपनयो वदेदिति सुधीः
केतोः फलं राहुवत् ॥ इति ॥ ५९ ॥
एष शेषक्रियां कुर्यात् किमु पित्रोर्नवेति यः ।
प्रश्नोथास्योत्तरं वक्तुं लक्षणं किमपीर्यते ॥ ६० ॥
स्वांशे राशौ चरे वा स्थितिरिननवमा-
धीशयोरेनयोश्चे-
दृष्टी रिष्फे स्थितिर्वा यदि तदुपगता-
शर्क्षयोः केन्द्रगत्वम् ।

---

पादायुधं कुक्कुटं गृह्णीयात् । अग्रतः पृच्छकपुरोभाग एव । मन्दे मान्दियुतेक्षिते सति । कश्चन दीक्षितः दीक्षायुक्तः । यास्यति पृच्छकगृहात् कुपितो गच्छेत् । निजके पृच्छकसंबन्धिनि । तद्विग्रहश्चण्डालानां मिथः कलहः । अथवा आयसद्रव्याणामाहृतिराहरणम् । अहौ मान्दियुतेक्षिते सति । श्वव्याघ्रयोर्विग्रहः मिथः कलहः । सुधीः कर्तृविशेषणोपादानेन युक्त्या धीमद्भिरितोऽन्यदपि ग्रहाणां तत्तद्द्रव्यकारकत्वादिकं समालोच्य लक्षणान्तरमपि कथनीयमिति द्योत्यते । इतिशब्दस्तु पुनरपि लक्षणान्तरमिति प्रतिज्ञातस्य परिसमाप्तिं सूचयति ॥ ५८, ५९ ॥

**एष इति** ॥ ईर्यते श्लोकसप्तकेनेति भावः ॥ ६० ॥

**स्वांश इति** ॥ १. इननवमाधीशयोः पितृकारकपितृस्थानाधिपयोः स्वांश स्वराशौ

सम्यग्दीक्षा पितुः स्याद्यदि कथितगुणे-
ष्वेषु नैकोपि दीक्षा
नैव स्यात्संभवेच्चेदपि बहुविपदः
संभवेयुर्गदाद्याः ॥ ३१ ॥

धर्मेस्ति पापान्वयवीक्षणं चे-
द्दीक्षा विहन्येत शुभासतोश्चेत् ।
अग्रे शुभश्चेद्विहतिस्तु मध्ये
पृष्ठे स चेत्तां परतो लभेत ॥ ६२ ॥

मातृदीक्षाविचारे तु धर्मधर्मेशभास्वताम् ।
प्रोक्तस्थानेष्विह ग्राह्याश्चतुर्थैतत्पतीन्दवः ॥ ६३ ॥

जातो यः पितृजन्मरन्ध्रभवने
यल्लग्नगस्तत्पतिः
कुर्यातां पितृकर्म तौ पितृमृती-
शोडुत्रये यः पुनः ।

---

चरराशौ चरांशके वा स्थितिः । २. पितृकारकपितृस्थानाधिपयोर्लग्नाद्द्वादशे स्थितिर्द्वादशभावं प्रति दृष्टिर्वा । ३. तयोर्लग्नात् केन्द्रभावे स्थितिर्यद्वा केन्द्रभावेंशकः । एषु त्रिषु योगेषु एकस्मिन्नपि सति पितुर्दीक्षा सम्यक् स्यात् । एकोपि न यदि दीक्षा न स्यात् । दीक्षायामुपक्रान्तायामप्यापद्धेतो रोगहेतोर्वा मध्ये विघ्नः स्यादेव ॥ ६१ ॥

**धर्म इति ॥** शुभासतोः पापान्वयवीक्षणं चेत्तर्हि शुभः अग्रे चेन्मध्ये विहतिरिति सम्बन्धः । नवमभावे शुभासतोरुभयोर्योगदृष्टिसंभवे तत्र शुभो भागकलादिभिः स्वाश्रितराशौ पापादुपरिस्थश्चेन्मध्ये विहतिर्दीक्षाविघ्नः स्यात् । स शुभः पृष्ठे चेत् पापादधःस्थश्चेत् । तां पितृदीक्षां । परतो लभेत । अन्येनोपक्रान्ता दीक्षा तस्याशक्तितः परित्यक्ता पृच्छकेन स्वीक्रियेतेति भावः ॥ ६२ ॥

**मातृदीक्षेति ॥** ग्राह्याः धर्मस्थाने चतुर्थ इत्यादिप्रकारेण यथासम्भवमित्यर्थः ॥

**जात इति ॥** पितापुत्रयोरुभयोर्जातके आश्रित्येदं चिन्त्यम् । यः पितृजन्मतो रन्ध्रभवनेष्टमराशौ उदयलग्ने जातः । तत्पतिः पितृजन्मरन्ध्रभवनाधिपः । यल्लग्नगः यस्य पुत्रस्य जननलग्ने स्थितः । तावुभौ पितृकर्म कुर्याताम् । यः पुनः पितृमृतीशोडुत्रये पितु-

जातः सात्मजपौत्रयुक्च विधिना
कुर्याच्च दीक्षां पितु-
र्ज्जातो व्योम्नि पितुस्समस्तदधिपे
लग्नस्थिते चाधिकः ॥ ६४ ॥

यस्य स्यात् पितृजन्मतोऽत्र नवमो
लाभो द्वितीयोथवा
चन्द्राधिष्ठितराशिरेष सततं
तातानुवर्त्ती भवेत् ।
यस्य स्यात् पितृजन्मभं स्वजनिभा-
ल्लाभे त्रिकोणेथवा
लग्नेशाश्रितभाल्लभेत सकलं
वित्तं स पित्रार्ज्जितम् ॥ ६५ ॥

---

जन्मचन्द्रादष्टमाधिपस्य नक्षत्रत्रये जातः स पुत्रः आत्मजपौत्रयुक्पुत्रपौत्रादिसम्पन्नो दीर्घायुष्मान् पितुर्दीक्षां विधिना कुर्याच्च । व्योम्नि पितृजन्मचन्द्राद्दशमराशौ लग्ने जातः पितुः समः । तदधिपे दशमाधिपे लग्नस्थिते पुत्रस्य जननलग्नाधिष्ठिते पितुरधिकश्च । अत्र जन्मपदेन चन्द्रलग्नं गृह्यते । अतः पुत्रस्यापि चन्द्रलग्नमेवात्र प्रकरणे ग्राह्यमिति केचित् । उभयत्रापि जननलग्नमेवेत्यन्ये । जातो व्योम्नीत्यत्र केवलं पितृजननलग्नाद्दशमभमित्यपरे । सात्मजपौत्रयुगित्यत्र सः आत्मजपौत्रयुगिति छेदः । "सोचि लोपे चे"दित्यनुशासनात्सुलोपः ॥ ६४ ॥

**यस्येति ।** पितृजन्मतः पितृजन्मकालीनचन्द्राधिष्ठितराशेः । एष पुत्रः । स्वजनिभान्निजजननकालचन्द्राधिष्ठितराशेः । अथवा लग्नेशाश्रितभात् त्रिकोणे । अत्र केचि'द्यस्य पितृजन्मभं स्वजनिभाल्लाभे, अथवा लग्नेशाश्रितभात्त्रिकोणे', इत्यन्वयमूरीकुर्वन्ति । अन्ये तु 'स्वजनिभात्, अथवा लग्नेशाश्रितभाल्लाभे अथवा त्रिकोणे' इति योजयन्ति । तदसाम्प्रदायिकं क्लिष्टं च । अथवेत्यस्यावृत्तिकरणात्समुच्चयविकल्पयोर्वाचकपदसमभिव्याहाराभावाच्च । अन्ये तु लग्नेशाश्रितभादित्यत्र लग्नशब्देन प्राग्लग्नमेव ग्राह्यमित्याग्रहणन्ति । तदपि न कमनीयतरम् । चन्द्रलग्नस्यैव प्रकृतत्वात् ॥ ६५ ॥

लग्नेन्दुभ्यां पितृगृहपतिः स्वस्वलग्नायगश्चेत्
प्रीतिं कुर्यात् पितुरिह तु शुश्रूषया दीक्षया च ।
लग्नाधीशो नवमपतिना भानुना वा समेतो
भाग्यस्थो वा यदि जनकवद्वृत्तिविद्याद्युपेतः ॥ ६६ ॥

जातो यः पितृजन्मरिष्फपतिनक्षत्रेषु कुर्यात् पितु-
र्दुःखं दूरगमादिभिः स सततं, वैरी भवेद्वैरिभे ।
यद्रिष्फाधिपसंयुतः खलु पितुर्जन्माधिपो यस्य वा
रिष्फस्थः स च तावुभौ पुनरृणं नूनं लभेतां पितुः ॥इति॥६७॥

पुनरपि पितृविषयं किंचिल्लक्षणमुच्यते ॥

भावश्चेन्नवमश्चरे तदधिपो
वायं व्यये चाष्टमे
भानुर्वैवमिह स्थितिर्न सविधे
तातस्य मृत्यौ भवेत् ।

**लग्नेन्दुभ्यामिति** ॥ स्वस्वलग्नायगः चन्द्रान्नवमाधिपश्चन्द्राल्लाभगः । लग्नान्नवमाधिपो लग्नाल्लाभगतश्च । शुश्रूषया जीवितकाले । दीक्षया मरणानन्तरम् ॥ जनकवदिति वृत्तिविद्यादिभिः पितृतुल्या स्यात् । अत्र केचित्स्वस्वलग्नायगः इत्यत्र कविविवक्षितं कविकृतव्याख्ययैव विशदीक्रियमाणं च स्वस्वलग्नादायग इत्यर्थमन्यथाकृत्य लग्नगो वा आयगो वेति व्याचक्षते तदसांप्रदायिकमित्युपेक्ष्यम् ॥ ६६ ॥

**जात इति** ॥ पितुर्जन्मतो जन्मचन्द्राधिष्ठितराशे रिष्फपतेर्द्वादशाधिपस्य नक्षत्रेषु त्रिषु । वैरिभे पितृजन्मतः षष्ठराशौ षष्ठराश्यधिपनक्षत्रेषु च । यद्रिष्फाधिपसंयुतः यस्य पुत्रस्य । अत्र वैरिभ इत्यस्य पितृजन्मचन्द्रात् षष्ठराशाविति पितृजन्मकालीनोदयलग्नादिति पितृजन्मचन्द्रषष्ठाधिपनक्षत्र इति चार्थं कल्पयन्ति । तत्र षष्ठराशिः पुत्रस्य जन्मचन्द्रराशिर्भवितुमर्हतीति । पुत्रस्य प्राग्लग्नराशिर्भवितुमर्हतीति च । अत्र पितृमृतीशोडुतय इत्यादौ च नक्षत्राधिपा नक्षत्रदशोदितवत् "अर्केन्द्वारभुजङ्गजीवशनिवित् केत्वाख्यशुक्राः क्रमादग्न्यादेर्नवकत्रयक्षपतय" इत्यवगन्तव्याः । इतिशब्देन पितृशेषक्रियाविषयविचिन्तनपरिसमाप्तिर्द्योत्यते ॥ ६७ ॥

**पुनरपीति** ॥ उच्यते वक्ष्यमाणश्लोकेन ॥

**भाव इति** ॥ तदधिपो नवमभावाधिपः । अयमित्यादि नवमेशः सूर्यो वा व्यया-

मार्गे स्यान्मरणश्रुतिर्द्वितनुभे
स्थानं स्थिरे सन्निधौ
सत्स्वामीक्षितसंयुते नवमभे
नाथेस्य चार्के तथा ॥ इति ॥ ६८ ॥

कालेस्मिन् वासभूमेर्मे गृहदोषोस्ति वा न वा ।
इति प्रश्ने कृते वक्तुं लक्षणं किमपीर्यते ॥ ६९ ॥

अकला यदि नामादौ भूमेर्लग्नं तु मेषभम्
आङ्वा इ च ഴ: पश्चादीञळा: कर्कटोदय: ॥ ७० ॥

उ ट റ ऊणना: पश्चादेतला एनवा अळी ।
ऐ प ഴ: ओमळा: पश्चादोय റ औ र ना झष: ॥ ७१ ॥

ष्टमान्यतरस्थ: । सविधे तातसविधे । द्वितनुभे उभयराशौ । सत्स्वामीक्षितसंयुते नवमराशौ नवमभावतदधिपयो: स्थिरराशिगयोश्च सन्निधौ स्थानम् । यथा विध्यौर्ध्वदैहिककरणस्यापीदमुपलक्षणम् ॥ ६८ ॥

**काल इति** ॥ गृहदोषो गृहस्य दोष: । ग्रहदोष इति पाठे ग्रहैर्हेतुभिर्दोष: ॥ ६९ ॥

**अकला इति** ॥ प्रसिद्धिवशाद्व्यवह्रियमाणस्य भूमिनामधेयस्य आद्याक्षरेण भूमेर्लग्नराशिनिश्चयार्थमिदम् । तत्र संस्कृतभाषायां 'द्विषष्टिर्वा त्रिषष्टिर्वा वर्णा:' इत्यादिशीक्षाकारवचनानुसारेण भवन्तु काममधिकान्यक्षराणि । देशभाषायां तु, अ आ इ ई उ ऊ എ ए ऐ ഒ ओ औ इति द्वादशाच: । संस्कृते एदोतो: ह्रस्वाभावेपि भाषायां ह्रस्वावपि तौ 'എച്ചു' 'ഏച്ചു' 'ഒകാടു' 'ഓഹാടു' इत्यादिदेशभाषापदेषु व्यक्ततरं परिदृश्येते । एतैर्द्वादशभि: स्वराक्षरै: क्रमेण मेषादयो द्वादश ज्ञायन्ते । व्यञ्जनानि पुन: देशभाषायां केवलमष्टादश । तेषु वर्गाद्यन्ता: क ङ, च ञ, ट ण, त न, प म, इति दश । अन्तस्थाद्यौ य र इति द्वौ । एवं संभूय द्वादश मेषादीनां क्रमेण द्वादशानां ज्ञापका: । अवशिष्टानि व्यञ्जनानि ल व ഴ ळ റ न इति षट् क्रमेण मेषादीनां षण्णां तुलादीनां षणां च राशीनां गमका: । अतस्तेषां प्रत्येकं राशिद्वयगमकत्वमिति ज्ञेयम् । एवं च भूमिनामादावकारककारौ चेद्भूमेर्लग्नं मेषराशि: । लकारो यदि मेषतुलयोरन्यतरो भूमिलग्नराशि: । इत्यादि क्रमेण विभावनीयम् । अत्र लादिभि: षड्भिरक्षरै: प्रत्येकं राशिद्वयकल्पने निर्णयेन फलनिरूपणं दुःशकमिति न युज्यते प्रत्यवस्थानम् । उभाभ्यामपि चिन्तनस्य प्रश्नसामान्ये उभयलग्नारूढलग्नाभ्यामिव जातके प्राग्लग्नचन्द्रलग्नाभ्यामिव च युक्तत्वात् । इदं च संवादानिरूपणाय

लग्नत्रिकोणे गुरुरत्र लग्ने
चरे गुरुस्तूभयराशिसंस्थः ।
द्वन्द्वे विलग्ने चरगः सुरेज्य-
स्थिरे तु लग्ने स तु लग्न एव ॥ ७२ ॥

अ व क ह डादिकविधिना विज्ञातव्यं हि जन्मनक्षत्रम् ।
नक्षत्रे विज्ञाते विज्ञेया स्थितिरनेन चन्द्रमसः ॥ ७३ ॥

अ व क ह डान् म ट प र तान्
न य ब श जा न थ पठन्ति ग द स च लान् ।

---

शास्त्रस्य व्यापकत्वसिद्धये चावश्यकमेव । अन्यथा विकल्पकथनानि सर्वाण्यपि त्याज्यकोटिमेवावगाहेरन् । अत्र लादिभिः षड्भिः प्रत्येकं सिध्यति राशिद्वये कस्य प्राधान्यमिति चेदुदयारूढलग्नयोरारूढस्यैव तुलादिषट्कस्येति गृहाण । 'द्रामिळा द्वादशाचः स्युर्वर्गाद्यन्ता यरान्विताः । मेषादिषु क्रमाद्योज्याः शेषा मेषादि षट्स्वपि' । इति वचनं समानन्यायबलेनेममाशयमुपोद्बलयति । प्रायेण भूमिनामादावेतान्येवाक्षराण्युपलभ्यन्ते । वर्गमध्याक्षरात्रिके यत्किञ्चिद्भूमिनामादौ दृश्यते चेत्तदाद्याक्षरतयैव परिकल्प्यत इति पुराणज्यौतिषिकसम्प्रदायः ॥ ७०, ७१ ॥

**लग्नेति** ॥ पूर्वश्लोकेन निर्णीतमवलम्ब्य लग्नं भूमिजातके जीवस्थितराशिनिर्णयार्थमिदम् । अत्र त्रिकोणपदेन लग्नपञ्चमनवमाख्या गृह्यन्ते राशयः । तेषु त्रिषु मेषसिंहधनुरित्यादिषु चरराशिरेकः स्थिरराशिरन्यः परः पुनरुभयराशिरिति सर्वथा भवेदेव । लग्नत्रिकोणे गुरुः कल्प्यः । तत्र लग्ने चरे त्रिकोणेषु त्रिषूभयराशौ द्वन्द्वे लग्ने चरराशौ लग्ने स्थिरे लग्न एवेति विवेकः ॥ ७२ ॥

**अवकहडेति** ॥ भूमेर्जन्मनक्षत्रस्य चन्द्रस्थितराशेश्च निर्णयार्थमिदम् । विज्ञाते विशिष्य ज्ञाते । विशेषश्च पादविषयकः । इदं जन्मनक्षत्रं तत्र चायं पाद इति पादविशेषेण सहावगते इत्यर्थः । अवकहडादिकविधिस्तु ग्रन्थान्तरे श्लोकत्रयेण प्रदर्शितोऽत्रोपयुज्यत इति तत एवोद्धृत्य लिख्यते ॥ ७३ ॥

**अवकहडानिति** ॥ अत्र नक्षत्रचन्द्रयोर्निर्णये अभिजिन्नक्षत्रेण सहाष्टविंशतिर्गृह्यन्ते नक्षत्राणि । अभिजित्तु "गोविन्दाद्यघटीचतुष्कसहितो विश्वान्त्यपादोऽभिजित्" ॥

पञ्चस्वरसम्भेदा-
देकैकं पञ्चधा भवेद्वर्णम् ॥ १ ॥

एकैकं नक्षत्रं
चतुश्चतुर्भिश्चतुर्थमेकेन ।
वर्गैश्चतुर्भिरेतै-
रनलाधिपसप्तकानि चत्वारि ॥ २ ॥

जन्मर्क्षस्यार्द्धफलं
नामर्क्षे ब्राह्मणस्य विज्ञेयम् ।
नृपवैश्ययोः समानं
शूद्रादीनां ततोप्यधिकम् ॥ ३ ॥

---

इति माधवाचार्येण प्रदर्शितः । तत्र कृत्तिकाद्याश्लेषान्तं मघादिविशाखान्तं, अनूराधादि श्रवणान्तं श्रविष्ठादिभरण्यन्तं चेति चत्वारो वर्गाः । भूमिनागाद्यक्षरे "अवकहडान्यतमे प्रथमो वर्गः, म ट प र तान्यतमे द्वितीयः, न य ब श जान्यतमे तृतीयः, ग द श च लान्यतमे चतुर्थः । इति विवेकः । तत्र एकैकम व क ह डादिषु वर्णे पञ्चभिः स्वरैः अ, इ, उ, ए, ओ, इत्येतैः संभेदात् सङ्गमात् पञ्चधा भवेत् । तत्र दीर्घा ह्रस्वे, कण्ठताल्व्यावुभावेकारे, कण्ठौष्ठजावुभावोकारे, ऋऌ इत्येतौ क्रमेण रलयोश्च विलीयन्ते । एवमवकहडाक्षरैः प्रत्येकं पञ्चप्रकारैः पञ्चभिः ५×५=२५ पञ्चविंशतिर्भेदा भवन्ति । तत्राद्यैश्चतुर्भिः प्रथमं पुनश्चतु-र्भिर्द्वितीयं ततश्चतुर्भिस्तृतीयं, पुनः केवलमेकेन तुरीयं, पुनश्चतुर्भिः पञ्चमं ततोन्त्यैश्चतुर्भि-स्सप्तमं च नक्षत्रमिति वर्गे विविच्य विविच्य नक्षत्रं ज्ञातव्यम् । नक्षत्रेपि चतुर्भिर्ज्ञातव्ये एकस्मिन् प्रथमेन प्रथमपादः द्वितीयेन द्वितीयपादः इत्यादिक्रमेण पादोपि विविच्य ज्ञात-व्यः । एवं च द्विराशिगततारेष्वपि चन्द्रस्थितिः शक्यते कल्पयितुम् । तत्र चतुर्षु वर्गेषु चतुर्थस्य नक्षत्रस्य केवलमेकेनैवाक्षरेण निर्णीतत्वात् कथं तत्र पादविवेको ज्ञातव्य इति चेत् तत्र विशिष्टपादो न ज्ञायतां को दोषः चन्द्रस्थितिकल्पने तु तेषामार्द्रादीनां द्विराशिगतत्वा-भावात् । पादविशेषज्ञानं नावश्यकमिति जानन्तु बुद्धिमन्तः । एवं च अ इ उ ए एष्व-न्यतमे नामाद्याक्षरे कृत्तिकानक्षत्रमिति तत्राप्यकारे मेषे चन्द्र इति, इ उ ए एतेष्वन्यतमे वृषभे चन्द्र इत्येवं क्रमेणालोच्य ज्ञातव्यम् । जन्मर्क्षस्येति जन्मर्क्षे पुण्यकर्मादिकरणे यत् शुभादिनामर्क्षे तत्करणे तदर्धमनुभूयेतेत्यर्थः । एवं समानाधिकयोरपि विज्ञेयम् ॥

चन्द्राश्रिते वेश्मनि लग्नभे वा
तयोर्द्वयोर्वाष्टमयोश्च पापाः ।
स्थिता यदास्मिन् समये मृतिः स्या-
त्तद्वासिनां गोनरपूर्वकाणाम् ॥ ७३ ॥

लग्नात् पञ्चमभेथवा नवमभे यद्वा शशाङ्कात्सुते
धर्मे वा धिषणप्रवेशसमये तद्वासिगर्भोद्भवः ।
धर्मापत्यगराशिभेदवशत स्त्रीणां गवां वा महि-
ष्यादीनामथवा सदा स्थितिजुषां गर्भग्रहस्तत् क्षितौ ॥

अरिभवने सहजे वा
बृहतां पत्यौ स्थिते कलहः ।
नृपपीडा निधनगते
लग्नेन्दुभ्यां वधो व्ययगे ॥ इति ॥ ७५ ॥

आधिपत्यं भवेत् किं मे न वेति यदि पृच्छति ।
प्रभूणां कुलजः कश्चित्तं वक्तुं लक्ष्म कथ्यते ॥ ७६ ॥

---

**चन्द्राश्रित इति** ॥ चन्द्राश्रिते गृहनामाद्यक्षरनिर्णीते चन्द्राधिष्ठितराशौ लग्नभे गृहलग्नराशौ । तद्वासिनां तद्गृहवास्तव्यानाम् । योगकर्तृस्थितराशेर्द्विपात्त्वचतुष्पात्त्वविशेषमालोच्य विशेषः कथ्यताम् ॥ ७३ ॥

**लग्नादिति** ॥ लग्नात् गृहलग्नात् । शशाङ्कात् गृहजन्मचन्द्रराशेः । धिषणप्रवेशसमये चारवशाज्जीवस्थितिकाले । राशिभेदवशतः । मेषराशिश्चेन्मेषादीनाम् । वृषभराशिश्चेद्गोमहिष्यादीनाम् । मिथुनराशिश्चेन्मनुष्यस्त्रीणामित्याद्यूह्यम् ॥ ७४ ॥

**अरीति** ॥ लग्नेन्दुभ्यामित्यरिभवनादिष्वप्यनुषज्यते । स्थिते चारवशादवस्थिते । वधः वासभूमौ यस्यकस्यापि । बृहतां पत्यौ बृहस्पतौ । लग्नत्रिकोणे गुरुरिति श्लोकोक्तविधया जन्मकालीनगुरुस्थितिमवगम्य तदीयबलाबलज्ञानपूर्वकमेतच्चारकालोक्तफलविशेषे गुरुलघुत्वादि कल्पनीयमेव । अन्यथा तद्गुरुस्थितिज्ञानस्य वैयर्थ्यापत्तेः । अपि च तद्गृहस्य नैसर्गिकगुणदोषनिरूपणायापीदमुपयोज्यताम् । इतिः प्रकरणपरिसमाप्तौ ॥ ७५ ॥

**आधिपत्यमिति** ॥ आधिपत्यं उत्कृष्टस्थानारोहणम् । महाराजस्थानलाभ इति राजकुलजपृच्छायाम् । साधारणेषु गृहस्वाम्यम् । तं पृच्छकम् ॥ ७६ ॥

तत्र प्राग्जन्मकालीनविहगाः खलु सुस्फुटाः ।
गणनीया विशेषेण ज्ञेयास्तारास्तदाश्रिताः ॥ ७७ ॥

सूर्येन्द्वारविलग्नकर्मपतयस्ते येषु भेषु स्थिता-
स्तेष्वाद्यांशकपास्तदंशभवगा लग्नत्रिकोणेऽथवा ।
वीर्याढ्याः खलु यस्य स स्वककुलज्यैष्ठ्यं लभेताचिरा-
त्रैशेशा इतरत्र चेन्मयमृतद्विड्भ्यः शनैर्ज्यैष्ठ्यदाः ॥७८॥

सूर्यादिकेतुचरमग्रुचरेषु केचि-
त्तारासु चेन्निगृतिशक्रपदस्थितासु ।
मित्रादिकेषु पुनरष्टसु वात्र शीघ्रं
ज्यैष्ठ्यं पदे सुरपतेः पयसां च पत्युः ॥ ७९ ॥

कृत्तिकादिभरण्यन्ताः प्रदाक्षिणतया स्थिताः ।
सर्वास्वपि दिशास्वीशकोणादारभ्य सर्वतः ॥ इति ॥८० ॥

**तत्रेति** ॥ जन्मकालीनेति पृच्छकजन्मकालीनेति तात्पर्यकम् । विशेषेण तारा ज्ञेयाः । नक्षत्राणामेव वक्ष्यमाणफलकथने विशेषोपयोग इति ॥ ७७ ॥

**सूर्येति** ॥ १. पृच्छकजन्मकालीनसूर्यः । २, चन्द्रः ३. कुजः ४. लग्नाधिपः ५. लग्नात् दशमाधिपः एते पञ्च येषु नक्षत्रेषु स्थिताः । तेषु नक्षतेष्वाद्यंशकपाः । अश्विन्याः कुजाः । भरण्याः सूर्यः । कृत्तिकाया जीवः । एवमेव रोहिण्यादिषु क्रमेण कुजरविजीवाः । तदंशान्मेषसिंहधनुरन्यतमाङ्कवगाः एकादशराशिगाः अथवा पृच्छकजनलग्नत्रिकोणराशिगा वीर्याढ्याश्च यदि पृच्छाकाले तर्हि स अचिरात् पृच्छाकालसन्निहितकाल एव । पृच्छकजननलग्नात् षष्ठाष्टमद्वादशस्था एते चेन्न कुलज्यैष्ठ्यलाभः । एतदुभयभिन्नराशौ चेत्तर्हि शनैश्चिरेणैव कुलज्यैष्ठ्यलाभः स्यात् ॥ ७८ ॥

**सूर्यादीति** ॥ अभिजिता सहाष्टाविंशतिर्नक्षत्राणि कृत्तिकादीनीशानादीनामष्टानां दिक्षु स्थितानि । एवमेकैकदिशि नक्षत्रत्रितयं सार्द्धं भवेत् । तत्र कृत्तिकारोहिणी मृगशीर्षः आर्द्रापूर्वार्द्धमिति सार्द्धत्रयमीशादिशि । आर्द्रोत्तरार्द्धपुनर्वसु पुष्याश्लेषा नक्षत्रत्रयं सार्द्धमिन्द्रदिशि । इत्यादिविधयाष्टासु दिक्षु नक्षत्राणि परिकल्पनीयानि । पृच्छकजन्मकालीने

नक्षत्रैः कालचक्रस्थैर्योगिन्या मृत्युना तथा ।
सम्प्रदायान्तरोक्तानि कथ्यन्ते लक्षणान्यथ ॥ ८१ ॥
चतुरश्रत्रिकं कुर्यादन्तर्मध्ये बहिः क्रमात् ।
दण्डांश्च चतुरस्तद्विकोणगांश्चक्रसिद्धये ॥ ८२ ॥
दण्डानां प्रत्येकं चतुरश्रसमागमेषु मध्ये च ।
अभिजिद्युक्तास्ताराः स्थाप्याः स्युः सप्त सप्त गणनाय ॥ ८३॥
दण्डाग्रादामध्यं निर्गत्य ततोऽन्तिकस्थदण्डेन ।
एवं पुनः प्रवेशो निर्गमनं प्रोक्तवच्च गणनमिह ॥ ८४ ॥

प्राग्दण्डाग्रादधस्ताद्दिनकरगतभा-
द्गण्यमाप्रश्नतारं
प्राणोत्र प्रष्टृतारान् पुनरिति गणिते
दक्षिणेनात्र देहः ।

सूर्यादिषु केत्वन्तेषु नवसु ग्रहेषु त्रिभ्योन्यूना ग्रहा इन्द्रदिङ्नक्षत्रेषु निरृतिदिङ्नक्षत्रेषु च यदि स्थितास्तर्हि यद्वा अनूरादिषु श्रविष्ठान्तेष्वभिजिता सह गणनेष्टसु नक्षत्रेषु तिष्ठन्ति तदापि ज्यैष्ठ्यं लभ्येतेति वदेत् । इन्द्रदिङ्नक्षत्रेषु वरुणदिङ्नक्षत्रेषु च बहूनां ग्रहाणां स्थितौ शीघ्रमेव ज्यैष्ठ्यलाभ आदेष्टव्यः । इतिराधिपत्यविषयकलक्षणनिरूपणपरिसमाप्तिगमकः ॥ ७९, ८० ॥

**नक्षत्रैरिति ॥** सम्प्रदायान्तरोक्तानीति स्वकपोलकल्पितत्वशङ्कानिरासकम् ॥८१॥

**चतुरश्रेति ॥** चतुरो दण्डान् ऐन्द्र्यादिवारुण्यन्तमेकः । आग्नेय्यादिवायव्यान्तं द्वितीयः, याम्यादिकौबेर्यन्तं तृतीयः नैरृत्याद्यैशान्यन्तं चतुर्थः । एते चतुरश्रत्रिकस्पृष्टाः मध्ये परस्परस्पृष्टाश्च भवेयुः ॥ ८२ ॥

**दण्डानामिति ॥** चतुरश्रसमागमेषु षट्सु मध्ये चेति प्रत्येकं सप्ततारास्थापनम्। अभिजिता सह तारास्त्वष्टाविंशतिः ॥ ८३ ॥

**दण्डाग्रादिति ॥** आमध्यं प्रविश्येत्यध्याहार्यम् । ततोऽन्तिकस्थदण्डेन निर्गत्येति योजना । एवं सकृत्प्रवेशनिर्गमनाभ्यां सप्तनक्षत्राणीति चतसृभिरावृत्तीभिर्भवेयुरष्टाविंशतिः ॥ ८४ ॥

**प्रागिति ॥** प्राग्दण्डाग्रात् । १, इति संख्याङ्कितात् । दिनकरगतभात् सूर्यगत-

॥ स्वरूपप्रदर्शनायात्र विलिख्यते ॥

## ॥ कालचक्रम् ॥

प्राची ।




प्रतीची ।

वामं शर्वस्य कोणाद्धुतभुज उडुनो
गण्यतां प्राग्वदत्र
स्थानं मृत्योस्त्रयेस्मिन् स्थितवति मरणं
प्रष्टुरेकत्र दण्डे ॥ ८५ ॥

तारं प्राग्दण्डाग्रे परिकल्प्य ततोधस्तात् । गण्यं दण्डाग्रादामध्यमित्युक्तप्रकारेणेत्यर्थः । प्राणोत, अत्र पूर्वोक्तप्रकारगणनायाम् । प्रश्नतारास्थितस्थाने प्राणः कल्प्यः । पुनः प्रष्टृ-तारात् आप्रश्नतारं दक्षिणेन इति गणिते अत्र देहः । इति योजना । प्रष्टृतारं प्राग्दण्डाग्रे

दण्डैक्यं यदि तत्र मृत्युवपुषो
रुग्वृद्धिदैर्घ्यादिकं
मूर्च्छालस्यकृदेकदण्डवसति-
र्मृत्योश्च जीवस्य च ।
प्रागाद्यग्निभपूर्वके च गणने
पूर्वापरादन्यतो
दण्डैक्यं गुळिकोर्कभार्तजननो-
डूनां विदध्यान्मृतिम् ॥ ८६ ॥
योगिन्यर्कगतोडु पृच्छदुडु य-
द्योकत्रगं तत्त्रतं
प्रष्टुर्मृत्युरिहैकदण्डगमिदं
संबन्धिमृत्युप्रदम् ।
प्राग्दण्डाग्रकृशानुभादिकमधः
संगण्यतां दक्षिणं
चक्रेस्मिन् खलु योगिनी च चरति
प्रोक्तक्रमात् प्रत्यहम् ॥ ८७ ॥

स्थापयित्वा ततः प्रोक्तप्रकारेण गणने । प्रश्नतारस्थितस्थाने देहः कल्प्यः । शर्वस्य कोणाद्धुतभुज उडुनः वामं प्राग्वद्गण्यताम् । अत्र मृत्योः स्थानम् । इति योजना । शर्वकोणे '२८' संख्याङ्किते कृत्तिकां परिकल्प्य तेन दण्डेनामध्यं प्रविश्य ततोन्तिकस्थवामदण्डेन निर्गत्य '२२' संख्याङ्कितस्थाने आश्लेषनक्षत्रमित्येवं वामगणनायां प्रश्नतारस्थितस्थाने मृत्युः कल्प्यः । अस्मिन् प्राणदेहमृत्युरूपे त्रये एकत्र दण्डे स्थितवति सति प्रष्टुर्मरणमादेष्टव्यमित्यर्थः ॥ ८५ ॥

**दण्डैक्यमिति ॥** देहजीवयोर्दण्डैक्येन चिरादारोग्यलाभ इति पारिशेष्यादवगन्तव्यम् । प्रागादीति "१" संख्याङ्कितस्थाने कृत्तिकां परिकल्प्य दण्डाग्रादामध्यामित्युक्तप्रकारेण यथाविधि गणनायां गुळिकतारस्य सूर्यतारस्य पृच्छकजन्मतारस्य च पूर्वापरदण्डमन्तरेण । शिष्टेषु त्रिषु दण्डेष्वन्यतमैकदण्डावस्थाने मृतिरादेष्टव्येति भावः ॥ ८६ ॥

**योगिनीति ॥** चक्रेस्मिन्निति— अस्मिन् चक्रे । योगिनी च प्रोक्तक्रमात् वक्ष्यमाणग्रन्थप्रोक्तक्रममाश्रित्य । प्रत्यहमहन्यहनि । चरति खलु । सा योगिनी प्रागाद्यग्निभ-

अर्कारार्यबुधाच्छमन्दशशिषु
प्राच्यादिदिक्षूदिता
गत्वाष्टासु दिशासु सायमुदय-
स्थानं पुनश्च व्रजेत् ।
मध्यं स्वोद्गमदण्डतः पुनरतो
दण्डद्वयं वामत-
स्त्यक्त्वान्येन बहिर्व्रजेत्प्रथमया-
मे तद्गतिस्त्वीदृशी ॥ ८९ ॥
तस्मान्मध्यमतोथ दण्डयुगळं
वामेन हित्वेतरे-
णोर्ध्वं यात पुनः पुनरिति-
स्यादन्ययामेष्वपि ।
यामस्त्वंशविनाडिका नगसुगी-
र्ज्ञेयः स कालो गते-
र्बाह्यान्तर्गतिमध्यमाङ्कणदले-
ष्वायाननिर्याणयोः ॥ ९० ॥

---

त्युक्तक्रमेण गणनायां सूर्यगतनक्षत्रं पृच्छकनक्षत्रं चेत्येतत्त्रयमेकत्रगं एकस्थानगतं यदि प्रष्टुर्मृत्युः । इदं त्रयं एकदण्डगं यदि पृच्छकसम्बन्धिषु यस्यकस्यापि मृत्युरादेष्टव्यः । प्राग्दण्डाग्रेति पूर्वश्लोकोत्तरार्धोक्तस्यैव विवरणरूपम् ॥ ८८ ॥

**अर्केति** ॥ प्राच्यादीति सूर्यवारे प्राच्यां १ संख्याङ्किते, चन्द्रवारे उदीच्यां २२ संख्याङ्किते, कुजवारे आग्नेय्यां ७ संख्याङ्किते, बुधवारे नैरृत्यां १४ संख्याङ्किते, गुरुवारे दक्षिणस्यां ८ संख्याङ्किते, शुक्रवारे प्रतीच्यां १५ संख्याङ्किते; मन्दवारे वायव्यां २१ संख्याङ्किते, च स्थाने योगिन्या उदयः । ऐशान्यां योगिन्युदयो नेति तत्वम् । एवमुदिता च योगिनी अष्टासु दिशासु गत्वा सायं पुनश्च उदयस्थानं व्रजेत् । गमनप्रकारमाह मध्यमिति । अत्र यामो न दिनतुरीयांशः । किं तु तदष्टमांशः पादोननाडिकाचतुष्टयात्मकः । एवं चाहन्यष्टौ यामाः, निशि चाष्टौ भवेयुः । यामषड्भागश्च सार्धसप्तत्रिंशद्विनाडिकात्मकः । प्रथमयामे उदयदण्डान्मध्यं प्रविश्य वामतो दण्डद्वयं त्यक्त्वा तृतीयेन द-

अत्रेदं गणितम् ॥

अह्नो यातविनाडिका मुखरया-
मत्वंशकाभ्यां हरे-
द्यामाः प्रष्टृगृहे बहिर्वृतिमुख-
स्थानं च यातं फलम् ।
योगिन्युक्तवदेव मृत्युचरणं
चक्रेऽस्ति वारक्रमा-
न्नित्यं वायुदिगादि चास्य गमनं
प्रोक्तं मरुत्पद्यतः ॥ ९१ ॥

ण्डेन बहिर्निर्गच्छेत् । पुनस्तस्मात् द्वितीययामे मध्यं प्रविश्य वामतस्तृतीयेन बहिर्निर्गच्छेत् । एवं गत्वा सायमुदयस्थानमेव व्रजेत् । तत्र सूर्यवारे १ संख्याङ्के उदित्वा क्रमेण यामषष्ठांशैः, १, २, ३, ४, १९, २० संख्याङ्कस्थानान्यतीत्य प्रथमयामान्ते २१ संख्याङ्कस्थानं व्रजेत् । द्वितीययामे तु २१, २०, १९, १८, १०, ९ स्थानान्यतीत्य ८ स्थानं व्रजेत् । तृतीये पुन: ८, ९, १०, ११, २६, २७ स्थानान्यतीत्य २८ स्थानं याति, तुरीये २८, २७, २६, २५, १७, १६ स्थानान्यतीत्य १५ स्थानं गच्छति । पञ्चमे १५, १६, १७, १८, ५, ६ स्थानान्यतीत्य सप्तमं षष्ठे ७, ६, ५, ४, २४, २३, स्थानान्यतीत्य २२ स्थानं सप्तमे २२, २३, २४, २५, १२, १३ स्थानान्यतिक्रम्य चतुर्दशं अष्टमे पुनः १४, १३, १२, ११, ३, २ स्थानान्यतीत्याष्टमयामान्ते सायं समये १ स्थानाङ्कितं उदयस्थानं प्राग्दण्डाग्रमेव व्रजेत् । पुनर्निशायामप्यह्नीव योगिनीसञ्चारोऽवगव्य: । एवं चन्द्रवारादिषूदीच्यादिषूदयः प्रोक्तक्रमेणैव सञ्चारश्च सूक्ष्ममालोच्य ज्ञातव्यः । बाह्यान्तर्वृतीति गृहे योगिनीसञ्चारप्रकार: । तत्र प्राग्गृहस्य बहिर्वृतिः १. अन्तर्वृतिः, २. अन्तर्मध्यमाङ्कणसंनिकृष्टप्रदेशः, ३. मध्याङ्कणमध्यं, ४. अग्निकोणगृहस्य मध्यमाङ्कणसंनिकृष्टप्रदेशः, ५. अन्तर्वृतिः, ६. बाह्यवृतिः, ७. एवमन्यत्रापि कल्पनीयम् ॥ ८९, ९० ॥

**अत्रेति** ॥ अत्र योगिनीसञ्चारविषये ॥

**अह्न इति** ॥ अत्रैवं क्रियादिनगतं विन्यस्य नाडिका षष्ट्या संगुण्य विनाडिकास्तत्र संयोज्य मुखरसंख्य (२२५) या हरेत् । लब्धं फलं सूर्योदयाद्गतयामरूपं स्यात् अवशिष्टं मत्वंशकेन, नगसुगीरित्यक्षरनिर्दिष्टेन सार्धसप्तत्रिंशता हरेत् । लब्धं फलं प्रष्टृगृहे बहिर्वृत्यन्तर्वृत्यादिषु गतो देशविशेषः । योगिन्युक्तवदितिमृत्युचरणं मृत्योस्सञ्चारः वारक-

मरुद्यमेशांबुपवह्निसोम-
रक्षःसुराधीश्वरदिक्षु नित्यम् ।
उद्धृत्य वामं दिवसेष्टवारं
भचक्रगोर्कोदयतः क्रमेण ॥ ९२ ॥
मेषादिकचरभानां
दिश्युदयोऽन्तेषु मृत्युयोगिन्योः ।
मिथुनादिद्वन्द्वानां
मध्येष्वग्न्यादिकोणेषु ॥ ९३ ॥

अथ योगिन्याः स्वरूपमुच्यते ॥

दंष्ट्रायुग्मभयं कराञ्जननिभा
संरक्तवृत्तेक्षणा
नादापूरितदिङ्मुखा वधरुचिः
सन्ध्याभ्ररक्तांबरा ।

माद्योगिन्युक्तवदेव। मृत्युयोगिन्योः सञ्चारे न कोपि विशेष इति यावत् । नित्यमिति मृत्यु-सञ्चारे मतान्तरं कथ्यते । अर्कादार्येरुक्तक्रमेण न मृत्यूदयः किं तु नित्यं सर्वेष्वपि वारेषु वायुदिश्येव । एतच्च मरुत्पद्यतः अनुपदं वक्ष्यमाणेन मरुद्यमेशेति श्लोकेन प्रोक्तम् ॥ ९१ ॥

**मरुद्यमेशेति ॥** मृत्युः प्रथमयामाद्ये वायुदिशि उदेति ततो योगिनीवद्यामस्त्वेशकैः सञ्चरमाणा द्वितीययामाद्ये यमदिशि, तृतीययामाद्ये ईशानादिशि, तुरीययामाद्ये वारुण्यां, पञ्चमयामाद्ये आग्नेय्यां, षष्ठयामाद्ये उदीच्यां; सप्तमयामाद्ये नैरृत्यां, अष्टमयामाद्ये ऐन्द्र्यां च स्थित्वा पुनरष्टमयामान्ते स्वोदयस्थानं वायुदिशमेव व्रजेदिति मतान्तरम् ॥ ९२ ॥

**मेषेति ॥** मृत्युयोगिन्योः दिश्युदयो मेषादिकचरभानामन्तेषु, अग्न्यादिकोणेषूदयो मिथुनादिद्वन्द्वानां मध्येषु च भवतीति योजना ॥ ९३ ॥

**अथेति ॥** उच्यते वक्ष्यमाणश्लोकेनेति शेषः ॥

**दंष्ट्रेति ॥** वधरुचिः प्रकृत्येति शेषः । भोगीशानां सर्पश्रेष्ठानां भोगा देहा एवाङ्गदानि केयूराणि यस्याः सा भोगीशभोगाङ्गदा । निखिलान् जन्तून् निहन्ति खड्गेन प्रहृत्येति भावः । भृशं मत्ता मद्यपानेनेति यावत् । स्वरूपकथनं तध्यातॄणां तदुपद्रवानिवृत्तिरित्यभिप्रायेण ॥ ९४ ॥

मेदोमांसवपाविभूषिततनु-
भोगीशभोगाङ्गदा
जन्तून् खड्गधरा निहन्ति निखिलान्
मत्ता भृशं योगिनी ॥ इति ॥ ९४ ॥

स्वाधिष्ठितराशेः सा
पादेनाक्रम्य तुर्यभं सुदृढम् ।
प्रहरत्यपि खड्गेन
द्यूनं हन्येत तत्रगस्तु तया ॥ ९५ ॥

सूर्याद्यहस्सु योगिन्याः पक्षभेदो न चोद्गमे ।
तच्चारे पुनरस्त्येष श्लोकपादैरथोच्यते ॥ ९६ ॥

केसरीभोगशेषो हि सप्तहारी कलावती ।
राजा गुणवता सेव्यो वारणासीतदापगा ॥ ९७ ॥
लोकभीषणसंहारी मार्गतोहसिकेरवः ।
तव संम्पदरोगेण सूर्यवारादिषु क्रमात् ॥ ९८ ॥

---

**स्वाधिष्ठितेति** ॥ स्वाधिष्ठितराशेर्वक्ष्यमाणप्रकारेण योगिनीस्फुटानयने तदधिष्ठित-राशिर्व्यक्तीभवेत् । तुर्यभं चतुर्थराशिम् । द्यूनं सप्तमराशिम् । तत्रगः तुर्यद्यूनगतः । आ-रूढराशिर्योगिन्यधिष्ठितराशेश्चतुर्थस्सप्तमो वा यदि पृच्छकमरणमादेश्यम् । सप्तमश्चेन्नियतमेव ॥

**सूर्येति** ॥ उद्गमे उदये । अर्कवारायेति प्रतिपादिते । पुनस्त्वर्थे । एष पक्षभेदः श्लोकपादैः केसरीत्यादिभिर्वक्ष्यमाणैः । सूर्याद्यहस्स्वित्यत्र 'राजाहः सखिभ्यष्ट'जिति टच्, 'समासान्तविधिरनित्य' इति न भवतीति समाधेयम् । सूर्याद्यहेष्विति पाठान्तरं वा परिक-ल्पनीयम् ॥ ९६ ॥

**केसरीति** ॥ रविवारादिषु सप्तसु वारेषु योगिन्याश्चारक्रमोत्र केसरीभोगशेषो हि इत्यादिभिः सप्तभिः पादैः प्रादर्शि । तत्र रविवारे के इत्यक्षरसंख्यया प्रथमदिशि प्राच्यां योगिन्या उदयः । पुनः स इति सप्तमदिश्युदीच्यां द्वितीययामे योगिनीचारः । पुनस्तृती-ययामे री इति द्वितीयदिश्याग्नेय्यां योगिनीचारः । तुरीययामे भो इति चतुर्थदिशि नैरृ-त्याम् । पञ्चमयामे ग इति तृतीयदिशि दक्षिणस्याम् । षष्ठे शे इति पञ्चमदिशि प्रती-

एकादिसंख्यावचनैरिहार्णै-
रीन्द्राग्निपूर्वाः कथिता हि काष्ठाः ।
अद्यासु दिक्षूदयनं क्रमेण
चान्यासु चारः प्रतियाममस्याः ॥ ९९ ॥

सूर्याद्यहस्सु यस्यां दिश्युदयोतः परा दिशः ।
यामक्रमेण गत्वान्त्ये यामे यात्यष्टमीं दिशम् ॥ १०० ॥

अथ मृत्युयोगिन्योः स्फुटानयनमुच्यते ॥

चोळेनेष्टघटीर्निहत्य विभजेदह्नः प्रमित्या फलं
राशिः शिष्टत आनयेल्लवकलाः संशोध्य भान्मण्डलम् ।
शिष्टं शोधित चक्रसंख्यमतिहायोर्ध्वात्त्यजेत्स्थानतः
केसर्यादिमरुद्यमादिषु तदा तत्तत्स्फुटं संभवेत् ॥ इति ॥ १०१ ॥

च्याम् । सप्तमे षो इति षष्ठदिशि वायव्यायाम् । अष्टमे हि इत्यष्टमदिश्यैशान्याम् । एवं चन्द्रवारादिषु सञ्चहारीकलावती इत्यादिभिर्योगिन्या उदयः सञ्चारश्चावगन्तव्यौ ॥ ९७-९९॥

**सूर्यादीति ।।** यत्रोदयस्ततः सप्तमादिशि द्वितीययामे, ततश्चतुर्थदिशि तृतीययामे, ततस्तृतीयादिशि तुरीययामे, ततोष्टमादिशि पञ्चमयामे, ततस्तृतीयदिशि षष्ठयामे, ततो द्वितीयदिशि सप्तमयामे, ततस्तृतीयदिश्यन्त्ययामे च सञ्चार इति क्रम: सर्वेष्वपि वारेषु विज्ञेयः । एवं च स्वोदयदिशोष्टमादिश्यन्त्ययामे सञ्चारो विज्ञाप्यते 'अन्त्ये यामे यात्यष्टमीं दिशं' इत्यनेन ॥ १०० ॥

**अथेति ।।** उच्यते वक्ष्यमाणश्लोकेन ॥

**चोळेनेति ।।** चोळेन अक्षरसंख्यया षण्णवत्या । इष्टघटी: दिनगतं रात्रिगतं वा । अह्नः प्रमित्या दिनप्रमाणेन । रात्रौ चेद्रात्रिप्रमाणेनेत्यूह्यम् । फलं राशिः स्यात् । लवकला आनयेत् शिष्टं त्रिंशता संगुण्य दिनमानेन हृत्वा भागान् शिष्टं षष्ट्या हृत्वा दिनमानेन विभज्य कलाश्चानयेत् । भान्मण्डलं संशोध्य एवमानीतस्फुटे राशिर्द्वादशाधिकश्चेत्ततो द्वादश शोधयेत् । मण्डलमिति राशिद्वादशकवाचकम् । एवं सम्पादितं स्फुटं पुनः शोधितचक्रसंख्यमतिहाय उर्ध्वात् स्थानतस्त्यजेत् । मण्डलशोधनमेकमपि न कृतं चेदुदयस्थानात् एकमण्डलशोधने द्वितीयदिक्स्थानात् मण्डलद्वयशोधने तृतीयदिक्स्थाने तृतीय-

मृत्योरन्ता प्रवेशो वितरति मरणा
निर्गमे नैव मृत्यु-
स्तन्निर्याणं पुरस्ताद्यदि तरुपतनं
गोमृतिर्वह्निकोणे ।
कातान्त्यां मर्त्यमृत्युर्निर्ऋतिदिशि मृग-
स्यांबुपे कासराणां
चण्डालैतन्निकृष्टद्विजमृतिरनिले-
न्द्वीशदिक्षु क्रमेण ॥ १०२ ॥

दिक्स्थानादित्यादिक्रमेण मण्डलसप्तकशोधनेष्टमयामस्थानादित्यवगन्तव्यम् । तत्र रविवारे केसरीभोगशेषो हि इति क्रमेण मण्डलशोधनाभावे प्राचीस्थानान्मेषान्त्यात् एकमण्डलशोधने द्वितीययामस्थानात् स इति उत्तरदिक्स्थानात् मण्डलद्वयशोधने री इति आग्नेयदिक्स्थानान्मिथुनमध्यादित्यादिः क्रमोऽवगन्तव्यः । दिशां राशिनिर्णयस्तु 'मेषादिकचरभानामुदयोन्तेष्वि'तिवचनमनुसृत्य कल्प्यः । शोध्यस्फुटमाधिकं चेत् स्थाने द्वादशराशियोजनं कार्यम् । अत्रेयमुपपत्तिः । योगिनी प्रथमयामे उदयादिग्राशेरारभ्य विलोमेन द्वादशराशीन् व्रजेत् । द्वितीययामादिषु तत्तद्यामोक्तदिग्राशिभ्योऽप्येवमेव विलोमेन व्रजेत् । एवमष्टाभिर्यामैरष्टकृत्वो द्वादशराशीन् गच्छेत् । १२×८=९६ संख्या चोळशब्देनात एवोक्ता । दिनप्रमाणनाडिकाभिरेवं षण्णवतिराशिसञ्चारश्चेद्दिनगतेन कियन्तो राशयोतियाता इति त्रैराशिकेनानीयत्वे तत्र दिनमानं प्रमाणम् । दिनगतमिच्छा । षण्णवतिः प्रमाणफलमिति एते 'तदिच्छाहतमादिहृत्स्यादिच्छाफलं' इति भास्करोक्तपाट्या इच्छाफलानीतिरेवेयम् । निशि चेद्रात्रिगतमिच्छा रात्रिमानं प्रमाणमित्येतावानेव भेदोऽवगन्तव्यः । एवमानीतं योगिनीस्फुटं भवेत् । मृत्युस्फुटानीतये तु केसर्यादिदिक्कल्पनस्थाने मध्यमेत्याद्युक्तप्रकारेण दिक्कल्पनमितीयानेव भेदः । अत्र दिनमानं । सर्वदा त्रिंशदित्येव कल्प्यम् । एवमेव ऋतंशस्य नगसुगीरिति सार्धसप्तत्रिंशद्विनाडिकात्मकत्वकथनमुपपद्यत इत्येके । तत्पक्षे दिनगतं त्रिंशन्नाडिकाधिकं चेत् त्रिंशन्नाडिका अपहाय शिष्टं रात्रिगतत्वेन परिकल्प्यम् । अन्ये तु तान् कालिकस्वदेशचरानीतदिनमानमेव स्वीकार्यमिति मन्यन्ते । तन्मते नगसुगीरित्युक्तेऽप्ययमनुपातः कल्पनीयः । रात्रिमानस्य त्रिंशन्नाडिकात्मकत्वे नगसुगीरिति स्थिते सांप्रतिकदिनमानेन कियदिति तत्रापि त्रैराशिकमभ्युपगन्तव्यम् । १०१ ॥

**मृत्योरिति ॥** मृत्योः प्रवेशनिर्गमौ 'मध्यं स्वोद्गमदण्डतः पुनरतो दण्डद्वयं वामतस्त्यक्त्वान्येन बहिर्व्रजे'दित्याद्युक्तक्रमेण सञ्चारक्रममालोच्य निर्णेयौ । पृच्छाकाले प्रवेशो

नैरृत्यां भृत्यनाशो वा वारुण्यां वा चतुष्पदाम् ।
जीवन्ति रोगिणो नूनमेतेषां सति संभवे ॥ १०३ ॥

प्राच्यामन्तःप्रवेशे प्रभुजनमरणं
वह्निकोणेऽग्निभीति-
र्मूर्च्छा कस्यापि पूगाशनत इनजदि-
श्यात्मनोतश्च दौस्थ्यम् ।
नैरृत्यां पाशभृद्दिश्यतिसरणमपि
छर्दिरित्यब्जरोगा-
श्चापे चौर्योत्थरावः शशिनि स मृगभूः
प्रष्ट्रमूर्च्छेशकोणे ॥ १०४ ॥

निर्गमो वेति स चानया दिशेति च निर्णीयादेष्टव्यं फलमनेन श्लोकेनोच्यते । उत्तरश्लोकत्रय-मप्येतत्परमेव । अत्र मृत्योरन्तःप्रवेशे पृच्छकस्य मरणमादेष्टव्यम् । बहिर्निर्गमे तु मृतिर्न । किं तु लक्षणविशेषः परमादेष्टव्यः । पुरस्तात् पूर्वदिशि । तरुपतनं पृच्छकगृहे । मर्त्यमृत्युः पृच्छकसंबन्धिनः पर्यन्तगृहवास्तव्यस्य वा मर्त्यस्य मृत्युः । मृगस्य मृत्युरिति विभज्य संबध्यते । अम्बुपशब्दो लक्षणया वरुणसम्बन्धिनीं पश्चिमां दिशं बोधयति । कासराणां महिषाणाम् । क्रमेण अनिलादिशि चण्डालमृतिः सोमदिश्युत्तरस्यां चण्डालेष्वेव निकृष्टानां मृतिः ऐशान्यां ब्राह्मणमरणम् ॥ १०२ ॥

**नैरृत्यामिति** ॥ पूर्वार्धे मतान्तरप्रदर्शनपरम् । एतेषां निर्गमनोक्तलक्षणानाम् । संभवे सति रोगिणो जीवन्ति । नूनमित्यर्थनिश्चये ॥ १०३ ॥

**प्राच्यामिति** ॥ 'मृत्योरन्तःप्रवेशो वितरति मरण'मिति पूर्वमुक्तं खलु । तन्निर्णयार्थं प्रवेशदिग्विशेषेण लक्षणविशेषकथनपरमिदं पद्यम् । प्रभुजनमरणं पृच्छकगृहसमीपे । अग्निभीतिस्तु पृच्छकगृहे समीपे वा । इनजादिशि दक्षिणस्यान्तःप्रवेशे पूगाशनतो हेतोः कस्यापि मूर्च्छा । नैरृत्यामतः पूगाशनादात्मनश्च पृच्छकस्यैव दौस्थ्यम् । चोत्रैवार्थे । पाशभृद्दिशि अतिसरणं छर्दिः शोफः इत्यादिजलरोगाः । चापे वायुकोणे चौर्योत्थरावः पृच्छकगृहे तत्पर्यन्तगृहे वा चोरबाधाजनितकोलाहलः । शशिन्युत्तरस्यां स कोलाहलः मृगभूर्व्याघ्रादिबाधाजन्यः ॥ १०४ ॥

मृत्योरन्तर्गमने यल्लक्षणमिति समीरितं तस्य ।
संभव इह यदि मरणं प्रष्टुर्निस्संशयं प्रवदेत् ॥ १०५ ॥

अत्र सारसंग्रहः ॥

अर्कारजीवबुधशुक्रशनैश्चरेन्दु-
वारोदयेष्वनुदिनं क्रमशोथ दिग्भ्यः ।
उद्धृत्य गच्छति हि मृत्युरिह क्रमेण
कालोन्यथाह्नि निशि राशिषु च त्रिवारम् ॥ १०६ ॥

योगिन्यत्र सहादितो मृतियम-
स्थाने दिनाष्टांशकं
नीत्वा गच्छति वारदिश्यनुदिनं
त्वीशानदिश्यष्टमे ।
प्राच्यां चेत्स्थितिरेव मेषवृषयो-
र्दृष्टिस्तुलाकीटयो-
र्याम्यादौ च तथैव यामदळयोः
कोणेषु यामावधि ॥ १०७ ॥

**मृत्योरिति** ॥ यल्लक्षणं प्रभुजनमरणादिकं समीरितं पूर्वश्लोकोक्तं; तस्य लक्षणस्य संभवो यदि प्रष्टुर्मरणं निरसंशयं प्रवदेत् । अत्रायं सम्प्रदायः— निर्गमनोक्तं तरुपतनादिकं प्रवेशोक्तं प्रभुजनमरणादिकं च मृत्युप्रवेशनिर्गमदिशोरेव सम्भवेदिति । तदात्व एव पृच्छकमरणस्य तदभावस्य वा निर्णायकं स्यादिति च ॥ १०५ ॥

**अत्रेति** ॥ अत्र योगिन्यादिनिरूपणविषये ॥

**अर्कारेति** ॥ दिग्भ्यः क्रमशः उद्धृत्य सूर्यवारे पूर्वस्याः, कुजवारे आग्नेय्याः, जीववारे दक्षिणस्याः, इत्यादिः क्रमः । अह्नि निशि च त्रिवारम् । दशभिर्नाडिकाभिरेकवारमिति यावत् । कालोन्यथा अप्रदक्षिणतया कालस्य सञ्चारः । उदये तु मृत्युकालयोर्न भेदः । एवं मृत्युकालयोः स्फुटानयनप्रकारः पञ्चमाध्याये 'याता नाडीस्तिलघ्ना विभजतु' इत्यादिश्लोकेन प्रदर्शित इति स्मर्तव्यमेतत् ॥ १०६ ॥

**योगिनीति** ॥ आदितः दिनाष्टांशकं मृतियमस्थाने सहनीत्वा अनुदिनं वारदिशि गच्छतीति योजना । योगिनी मृत्युयमोदयदिश्येवोदेति । एकं यामं ताभ्यां सह तत्रैव

इन्द्रेन्द्वग्न्यसुरान्तकाम्बुपमरु-
दिश्वर्कचन्द्राद्रावि-
द्वागीशास्फुजिदर्कपुत्रदिवसे-
ष्वाद्यादि सा योगिनी ।
यामैस्सप्तभिरेव सप्तसु दिशा-
स्वेकैकयामक्रमा-
दास्थायान्तिमयामयोर्दिननिशो-
रीशानदिक्स्था भवेत् ॥ १०८ ॥

अष्टानां च तिथीनां
दळद्वये तद्वदष्टयामेषु ।
योगिन्याश्चारदिशो
वक्ष्यन्ते श्लोकपादेन ॥ १०९ ॥

तिष्ठति द्वितीययामे उत्तरादिवसोदयदिशि तिष्ठति तृतीययामे तदुत्तरादिनोदयादिशि । एवं सप्तयामान् सप्तसु दिक्षु नीत्वा सर्ववारेष्वप्यष्टमयामे ईशानदिशि तिष्ठति । अत सूर्यवारे प्रथमयामे प्राच्यां द्वितीते उत्तरस्यां तृतीये आग्नेय्यां तुरीये नैरृत्यां, पञ्चमे दक्षिणस्यां षष्ठे वारुण्यां, सप्तमे वायुदिशि, अष्टमे ईशानदिशीति विवेकः । चन्द्रवारे तु क्रमेण सोमाग्नि-निरृतियमवरुणवायुशक्रेशदिक्षु । एवं कुजवारादिष्वप्यूह्यम् । तत्र दिक्षु 'प्राच्यां मेषवृषा'-वित्युक्तरीत्या प्रत्येकं राशिद्वयसद्भावात्प्रथमं यामार्धं प्रथमराशावुत्तरं यामार्धं द्वितीयराशौ च योगिनीस्थितिः । विदिक्षु तु प्रत्येकमेकैकराशिमात्रसंभवात्समग्रं याममेकराशावेव । एवमुभयराशावेकं यामं चरस्थिरराशिषु तु यामार्धं योगिनीस्थितिः । स्थितराशेः सप्तमरा-शिं सर्वदा योगिनी वीक्षते । योगिन्यधिष्ठितराशौ तत्सप्तमे च पृच्छकारूढे पृच्छकमरणमि-ति 'हन्येत तत्रगस्तु तया' इत्यभ्यधायि खलु । तत्रेदं निरूपणमावश्यकम् ॥ १०७ ॥

**इन्द्रेति** ॥ अनेन श्लोकेन पूर्वश्लोकोक्तार्थ एव स्पष्टीक्रियते ॥ १०८.

**अष्टानामिति** ॥ इतः परं तिथियोगिन्याः सञ्चारो निरूप्यते । प्रतिपदाद्यष्टम्यन्ते पूर्वार्धे उत्तरार्धे च प्रत्येकमष्टावष्टौ यामाः सन्ति खलु । तेषु योगिनीसञ्चारक्रमो वक्ष्यते । तत्र पूर्वार्धे उत्तरार्धे च योगिन्या उदयसञ्चारावेकप्रकारावेव । न तु भिन्नौ ॥ १०९ ॥

कंसारिभोगमतिदा सोमदाराः कलावती ।
रजोगुणवती सेयं भाद्रमासि तदापगा ॥ ११० ॥
लोकवर्तीशसंहारी शार्ङ्गी तद्दासपुत्रवान् ।
स्तंभे सकृद्रोगेण हतः कालोत्र भौमसः ॥ १११ ॥
दळद्वये प्रतिपदः कंसारीत्युदिता दिशः ।
यामेष्वष्टसु विज्ञेया द्वितीया दळयोर्द्वयोः ॥ ११२ ॥
सोमदारादिकास्तद्वत्तृतीयादळयोः पुनः ।
रजोगुणवतीत्यादि चतुर्थीदळयोरथ ॥ ११३ ॥
भाद्रमासीति गदिताः पञ्चम्या दळयोस्ततः ।
लोकवर्त्यादिकाः षष्ठ्याः शार्ङ्गीत्याद्या दिशःस्मृताः ॥११४॥
स्तंभेत्याद्यास्तु सप्तम्या अष्टम्याश्च हतादिकाः ।
नवम्यादिषु तद्वत्स्याद्यथा प्रतिपदादिषु ॥ ११५ ॥
दळद्वये यागिनी स्यादित्युक्ता तिथियोगिनी ॥ ११६ ॥

योगिन्या यदि दृष्टौ
लग्नारूढौ च जन्मलग्ने वा ।

**कंसारीरिति** ॥ पक्षद्वयेपि प्रतिपन्नवम्योर्योगिन्युदयसञ्चारौ 'कंसारिभोगमतिदा' इति पादेन दर्शितौ । तत्र तिथ्योर्दळद्वयेपि प्रथमाष्टांशे 'क'मितीन्द्रदिशि, द्वितीयाष्टांशे, 'सा' इति सोमदिशि, तृतीये 'रि'रित्याग्निदिशि तुरीये 'भो' इति निरृतिदिशि, पञ्चमे 'ग' इति यमदिशि, षष्ठे 'म' इति वरुणदिशि, सप्तमे 'ति' इति वायुदिशि, अष्टमे यामाष्टांशे 'दा' इतीशानदिशि च योगिन्याः सञ्चारः । तत्र दिक्षु यामाष्टांशस्य प्रथमार्धे प्रथमराशौ, उत्तरार्धे द्वितीयराशौ च स्थितिः कल्प्या । पूर्वदळवदेवोत्तरदळेपि निर्विशेषावेव योगिन्युदयसञ्चारौ । एवं द्वितीयादशम्योर्द्वितीयपादोक्तक्रमेणेत्यादि प्रत्येकमेकैकपादेन द्वयोरपि पक्षयोस्तिथिद्वये निर्दिष्टावुदयसञ्चारौ । 'हतः कालोत्र भौमसः' इत्यष्टमपादेन तु केवलमष्टम्यामेव तिथौ सञ्चारोदयकालौ प्रदर्शितौ । एवं प्रदर्शितप्रकारेण पृच्छाकाले योगिन्यधिष्ठितो राशिर्विज्ञेयः ॥ ११०–११५ ॥

**योगिन्येति** ॥ लग्नारूढौ पृच्छाकालोदयलग्नराशिः पृच्छकारूढराशिश्चेत्युभौ । जन्मलग्ने पृच्छकजननकालोदयलग्नराशिः पृच्छकजन्मकालचन्द्राधिष्ठितराशिश्चेत्युभौ । योगि-

मृतिदौ भवतो जीवौ
योगिन्या मुखगतश्चापि ॥ इति ॥ ११७ ॥

पुनरपि लक्षणान्तरम् ॥

पातः किं नरके मे किं वासः स्वर्गे धनागमः ।
कथं वेति कृते प्रश्ने वक्तव्यमथ कथ्यते ॥ ११८ ॥

स्थूणत्रयविषघटिका
विष्टिर्गण्डान्तवैधृतो लाटः ।
परिवेषव्यतिपातक-
धूमार्गळमन्दपूर्वचतुरुदयाः ॥ ११९ ॥

एते दोषा नरकपतनं सूचयन्तीह नृणां
प्राग्लग्ने वा तुहिनरुचि वा संभवन्तोथवार्के ।
दुःखं मानक्षयमधनतां नारकानेव विद्या-
दस्मिन् लोके पुनरतितरां चन्द्रदोषैः स्युरेतैः ॥ १२० ॥

न्या दृष्टौ यदि मृतिदौ भवतः । जीवः प्राणः । स च त्रिविधः । 'लग्नेन्दूमानदानाभ्या'-मित्यानीत एकः 'प्रश्नकालगता नाडीर्निरयघ्ना' इत्यानीतो द्वितीयः, 'प्राणो लग्नवांश' इत्युक्तस्तृतीयः, योगिन्या मुखगतः योगिन्या सहैकराश्यधिष्ठितः । इतिना सारसङ्ग्रहग्रन्थस्य योगिनीमृत्युनिरूपणस्य च परिसमाप्तिर्द्योत्यते ॥ ११६ ॥

**पुनरपीति** ॥ कथ्यत इति शेषः ॥

**पात इति** ॥ कथ्यते आध्यायपरिसमाप्ति ॥ ११७ ॥

**स्थूणेति** ॥ १. स्थूणः, २. कण्टकस्थूणः, ३. रक्तस्थूणः, ४. विषघटिका, ५. विष्टिकरणं, ६. गण्डान्तः, ७. वैधृतं, ८. लाटः, ९. परिवेषः, १०. व्यतीपातः, ११. धूमः, १२. एकार्गळः, १३. शन्युदयः, १४. राहूदयः, १५. केतूदयः, १६. गुळिकोदयः एते दोषाः षोडश प्राग्लग्ने वा तुहिनरुचि चन्द्रे वा अथवा अर्के सम्भवन्तो नृणां इह इहलोके नरकपतनं सूचयन्ति । ऐहिकान् नरकानेव दुःखमित्यादिना विवृणोति । एतैः षोडशभिश्चन्द्रदोषैश्चन्द्रनिष्ठैर्दोषैः । अतितरां स्युः । प्राग्लग्नार्कापेक्षया चन्द्रस्यैव प्रदर्शितैहिकनरककर्तृत्वाधिक्यमिति भावः । प्रोक्तेषु षोडशसु विषघटिकाविष्टिगण्डान्तवैधृत-

अर्कक्षोणीसुताभ्यां भवति गणनया
नैरृतं यावदस्मा-
त्तावत्यौ तारके द्वे क्रमश इह मते
कण्टकस्थूणसंज्ञे ।
नाभ्यामामूलसंख्याद्वययुति गणितः
कण्टकस्थूणनामा
रक्तस्थूणोवशिष्टं क्षितिसुतरहिते
सिंहधृत्यंशके स्यात् ॥ १२१ ॥
विषादिदोषैरुदितैः समेते
प्रसूतिलग्ने निरयः परत्र ।
आरूढभे प्रश्न उडुपभौ वा
दोषान्वितेत्नोष्णकरे परत्र ॥ १२२ ॥

---

लाटैकार्गळाः षट् द्वितीयाध्याये निरूपिताः । परिवेषव्यतीपातधूमास्तु धूमादिपञ्चदोषान्तः-पातिनः । शनिराहुकेतुगुळिकाः पुनर्ग्रहगणितवेदिनां सुखवेद्याः । अवशिष्टाः स्थूणकण्टक-स्थूणरक्तस्थूणास्तु ग्रन्थान्तरादुद्धृत्यात्र प्रदर्श्यन्ते ॥ ११८, ११९ ॥

**अर्केति** ॥ अत्रार्कपदं अर्कस्थितनक्षत्रे क्षोणीसुतपदं तत्स्थितनक्षत्रे च लाक्षणिकं बोध्यम् । पृच्छाकालार्काधिष्ठितनक्षत्रादारभ्यामूलं गणिते या संख्या लभ्यते मूलादारभ्य गणिते तावतिथं नक्षत्रं कण्टकसंज्ञम् । कुजाधिष्ठितनक्षत्रादारभ्यामूलं गणिते मूलादारभ्य तावतिथं स्थूणसंज्ञम् । ताभ्यामर्कक्षोणीसुताधिष्ठितनक्षत्राभ्याम् । गणितः मूलादारभ्येति शेषः । सूर्याधिष्ठितनक्षत्रात् कुजाधिष्ठितनक्षत्राच्चामूलं सङ्गण्य लब्धे संख्ये सङ्कलय्य सप्तविंशत्यधिका चेत् सप्तविंशतिमपहाय मूलाद्गणिते तावतिथं नक्षत्रं कण्टकस्थूणसंज्ञम् । चतुर्थपादेन रक्तस्थूणविज्ञानप्रकारमाह — धृतिरष्टादश । सिंहे सिंहराशौ धृत्यंशकेऽष्टादशभागे राशिचतुष्टयमष्टादशभागाश्च विन्यस्य तस्मात्स्फुटात् कुजस्फुटं विशोध्य यत्स्फुटं लभ्यते तन्नक्षत्रं रक्तस्थूणसंज्ञम् । अत्र कण्टकज्ञानं यद्यपि प्रकृते नावश्यकं, तथापि स्थूणादित्रितयज्ञानस्यावश्यकत्वात्तत्सहचरितः सोऽपि निर्दिष्ट इति बोध्यम् ॥ १२० ॥

**विषेति** ॥ प्रसूतिलग्ने विषादिदोषैः समेते सति परत्र परलोके निरयोऽन्धतामिस्रादिः । "विषादिदोषै"रित्यादिशब्दः प्रकारवाची नत्ववधिवाची । स्थूणत्रयस्यापरिग्रहापत्तेः ।

नृणामायुः सहस्रं कृतयुगसमये
तद्दलं तस्य चार्द्धं
त्रेतायां द्वापरे वा कलियुग उदितः
स्यात् सहस्राष्टभागः ।
पूर्णान्कृतभागान् निजनिजशरदां
तत्तदाख्यालयांशा-
रूढाः खेटाः प्रदद्युस्त्वजमुखभचतु-
ष्कत्रिकोणाः कृताद्याः ॥ १२३ ॥

यज्जननं कृतयुगभे
दैवनियोगादुपेत्य सकलजनाः ।
धनमस्मै दद्युरथ
त्रेतायामर्थलब्धिरटनेन ॥ १२४ ॥

द्वापरभे स्वीयधन-
व्यापारात् कलियुगे न केनापि ।

---

अत्रास्मिन् जन्मनि । अत्र श्लोके पूर्वार्द्धे जातकविषयम्, उत्तरार्द्धे पुनरत्रान्तं प्रश्नविषयं, शिष्टमुभयविषयम्; इति विवेकः ॥ १२० ॥

**नृणामिति ॥** तद्दलं शतपञ्चकम् । तस्यार्द्धं पञ्चाशदुत्तरं शतद्वयम् । सहस्राष्टभागः पञ्चविंशत्यधिकं शतम् । पूर्णेति कृतराशौ कृतांशके चावस्थितो ग्रहः स्ववत्सरान् पूर्णान् प्रदद्यात् । त्रेताराशिस्थितोऽर्धम् । द्वापरराशिस्थितस्तु पादम् । कलिराशिस्थितः पुनरष्टमांशम् । राश्यंशकयोरन्योन्यभेदे बलाधिको ग्राह्य इति सार्वत्रिकोयं न्यायः । संवत्सरास्तु नक्षत्रदशोक्ता उच्चनीचदशोक्ता निसर्गदशोक्ताश्चेति त्रिविधा अपि ग्राह्याः ॥ इदमायुर्निरूपणं यद्यपि न प्रकृतप्रश्नविषयं तथापि युगप्रस्तावादुपकारकत्वाच्च कृतमिति न दोषः ॥ १२१ ॥

**यज्जननमिति ॥** 'धनागमः कथं वा' इति प्रश्ने निरूपणप्रकारोऽनेनोक्तः । एवं फलदा विहगाः । मेषत्रिकोणगतग्रहा अनायासेन फलं ददतीत्यादि । स्वदेशेति कृतयुगराशौ कृतयुगराशिनवांशे वा स्थितानां ग्रहाणां दशाकाले अपहारकाले च "दैवयोगादुपेत्य सकलजनाः धनमस्मै दद्युः" इत्यादिरीत्यादेष्टव्यमिति भावः । प्रभृतिशब्देन ऋतुवारा-

एवं फलदा विहगाः
कृतपूर्वयुगाभिधानराशिगताः ॥ १२५ ॥
स्वदशापहृतिप्रभृतिषु
समयेष्विह चिन्त्यतां तदंशोपि ॥ १२६ ॥

॥ इति प्रश्नमार्गे षोडशोऽध्यायः ॥

अध्यायैः षोडशभिः
पूर्णोयं पूर्वभाग एवमभूत्
शिष्यजनप्रार्थनया
रचितस्य प्रश्नमार्गस्य ॥

दयोपि माद्याः । दद्युः तत्तद्धेतुभिर्हेतुमन्तरेण वा । अटनेन सञ्चारेण । स्वीयं यद्धनं तस्य व्यापारः नानाप्रकारैः प्रवर्त्तनम् । तस्मान् न केनापि अन्यतो नार्थलाभोऽनेनापि न धनं लभ्येत । व्यापारोपि न गुणवान् भवेदित्यर्थः ॥ १२२-१२४ ॥

॥ इति प्रश्नमार्गे षोडशोऽध्यायः ॥



आहत्य द्वात्रिंशाध्यायात्मकेत्र प्रश्नमार्गाख्यग्रन्थे षोडशभिरेतैरध्यायैः पूर्वभागः इतः सप्तदशादिभिः षोडशभिरध्यायैरुत्तरभागश्चेति भागद्वयकल्पनं मनसि निधायैतावता- ग्रन्थेन पूर्वभागस्य परिसमाप्तिं निर्दिशति ॥

**अध्यायैरिति** ॥ एवं दर्शितप्रकारेण । शिष्यजनप्रार्थनयेति ग्रन्थनिर्माणहेतुः प्रदर्शितः ॥

श्रीकेळवर्मगुरुवर्यकृपाकटाक्ष-
विज्ञातवेदनयनोदिततत्वजातः ।
श्रीनीलकण्ठशिवभूमिसुरोऽहमेवं
व्याख्यं बहूपकृदिदं खलु प्रश्नमार्गम् ॥

शक्तिश्चराचरसमस्तपदार्थसार्थ-
संव्यापिनी जयति या सकलाभिवन्द्या ।
तस्यामिमां विनयभक्तिभरात्समर्प्य
व्याख्यां नितान्तमुपयामि कृतार्थभावम् ॥

॥ ईशाम्बिका शरणम् ॥

# शुद्धिपत्रम् ॥

| पृष्ठं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २० | विशेषणत्वनापि | विशेषणत्वेनापि |
| ३ | १६ | बोधक | बोधकम् |
| ४ | २५ | निरपेक्ष | निरपेक्षम् |
| ५ | २५ | वेदाध्यन | वेदाध्ययनम् |
| ६ | ५ | तत्वज्ञ | तत्वज्ञः |
| ,, | ९ | समागम | समागमः |
| ,, | १८ | सारक | स्तारक |
| ,, | २३ | उभयाग्र | उभयाग्रे |
| ७ | ३ | रोमशः | रोमशः |
|  | ८ | प्रमुत्वैः | प्रमुखैः |
|  | १८ | सभाव्य | सम्भाव्य |
|  | १९ | मात्रत्व | मात्रत्वम् |
|  | २१ | वासष्ठ | वसिष्ठ |
|  | २६ | चित्रान्य | चित्रान्त्य |
| ८ | १४ | आधायित्व प्र | आधायित्वाप्र |
|  | २५ | प्रसिद्धामति | प्रसिद्धामिति |
| १० | २५ | पत्यशङ्का | पत्तिशङ्का |
| ११ | ८ | मानुष्यजातौ | मानुष्यजातौ |
| १३ | १८ | जन्मलतयेति | जन्मलग्नतयेति |
| १६ | ७ | वारुण्यां दि | नैरृत्यां दि |
|  | १८ | तस्थाने | तत्स्थाने |
| १९ | २१ | दोषाधक्य | दोषाधिक्य |
|  | २७ | निर्थीतशब्दो | निशीथशब्दो |
| २० | ९ | सुरूपम् | स्वरूपम् |
|  | १३ | धात | धृति |
|  | २२ | बुध्यश्विनी | बुधयश्विनी |
| २१ | १७ | सोपि लोपे | सोचि लोपे |
| २२ | १० | वामगे | वामगो |
|  | १६ | ष्टानां भवोथा | ष्टानामभावो |
| २३ | १९ | भृत्युः | मृत्युः |
| २५ | २१ | उन्नमन्ता | उन्नमन्त |
|  | २६ | भजतेश्वरम् | भजेतेश्वरम् |
| २७ | २० | वामनानासा | वामनासा |
|  | २३ | निर्गमयोगा | निर्गमे योगा |

| पृष्ठं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८ | २२ | क्षास्मणानि | क्षास्मरणानि |
| २९ | २२ | पूर्वादग्भागे | पूर्वदिग्भागे |
| २९ | २२ | वाच्यातत्यर्थः | वाच्यमित्यर्थः |
| ३० | ८ | ऐते | एते |
| ३३ | १६ | किमर्थ | किमर्थं |
| ३४ | २० | दयासि | दयितासि |
| ३५ | २४ | भङ्ग | भङ्गम् |
| ,, | ,, | नीचामृति | नीचान्मृति |
| ३६ | १६ | मेतदभूष | मेतद्भूष |
| ३८ | १४ | नाशो भावो | नाशेऽभावो |
| ,, | १५ | वपुष | वपुषः |
| ,, | २० | सर्पवृाश्च | सर्पवृश्चि |
| ,, | २२ | णापयोग | णोपयोगि |
| ४३ | ६ | गुणा | गणा |
|  | १५ | प्रकारथ | प्रकारोथ |
|  | १८ | द्यलिखिलेषु | द्यखिलेषु |
| ६६ | २० | चतुरश्र | चतुरश्रे |
|  | २२ | दक्षिणदण्ड | दक्षिणखण्ड |
| ७१ | १८ | पारवाराणां | परिवाराणां |
|  | २० | द्यभेदो | द्यप्यभेदो |
| ७३ | ११ | मूर्योरा | सूर्योरा |
|  | १५ | तन्मय मुद्रां | तन्मयमुद्रां |
| ७९ | ७ | भाजितैरहि | भाजितै रहि |
| ८० | ६ | यानया | यातया |
| ८१ | २१ | चतुष्टयामत्या | चतुष्टयमित्या |
| ८२ | ४ | मेषाक्ष | मेषोक्ष |
|  | २२ | अनन | अनेन |
| ८५ | १४ | तदाभवत् | तदा भवेत् |
| ८८ | २६ | अङ्कांशौ | अङ्कांशौ |
| ९३ | ८ | स्याध्रुवम् | स्याद्ध्रुवम् |
| ९५ | १० | युक्ताश्रितौ | युक्तेश्रितौ |
| ९६ | २४ | समान्दावहो | समान्दावहौ |
| ९७ | २७ | शुभान् | शुभम् |
| ९८ | १५ | कोणेन्द्वो | कोणेन्दौ |

| पृष्ठं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९८ | १६ | दोषैर | सदोषैर |
| १०१ | ७ | वह्नि | वह्निः |
| | ११ | शिरानेत्र | शिरोनेत्र |
| १०२ | ८ | नियमाध्वज | नियमाद्ध्वज |
| १०८ | ८ | पूर्णावस्थां | पूर्णावस्था |
| ११० | १६ | विकल्पना | विकल्पेना |
| १११ | १० | कायतर | कान्यतर |
| | २० | तदंशेनेशे | तदंशे लशे |
| | २५ | इष्टापते: | इष्टापत्ते: |
| ११२ | ५ | क्षिनौ | क्षितौ |
| | १४ | न्दुभयो | न्दुभयो |
| ११५ | २ | हि पुनर्झे | हि वपुर्झे |
| | ४ | भूथं | भूस्थं |
| | २३ | पुष्पताक्षता | पुष्पा[illegible]ता |
| ११६ | ७ | स्त्वैते | स्त्वेत |
| ११९ | १८ | साद्धन | सार्द्धेन |
| १२२ | १७ | क्ते हेतु | क्तेर्हेतु |
| १२४ | २ | सुहृद्ग्रह | सुहृद्गृह |
| १३० | १४ | प्रदाधिकम् | प्रदोधिकम् |
| १३१ | ९ | ध्यात्मतादिकम् | ध्याल्पताधिकम् |
| १३२ | ७ | फलप्रदा ॥ | फलप्रदः ॥ इति |
| १३३ | २ | व्याष्ठि | व्याष्टि |
| | ८ | वशान् | वशात् |
| १३४ | ३ | यसं स्था | यसंस्था |
| १३६ | १५ | तत्समस्य | तत्समयस्य |
| १३९ | १३ | पुष्व्याश्लेष | पुष्याश्लेष |
| १४० | २ | बिमला | विमला |
| | २२ | वत्सराहः | वत्सराः |
| १४१ | ४ | पार्श्वभेधेन्दु | पार्श्वभे धेनु |
| | ९ | याम्यं दिप्व | याम्यादिप्व |
| १४२ | १७ | अहर्भुवा" । | अहर्भुवा' |
| १४४ | ४ | राशैर्वा | राशेर्वा |
| १४५ | १३ | भस्तेपु | भस्थेषु |
| १४६ | २१ | याताश | तांश |
| १५० | १६ | एन्द्यां | ऐन्द्र्यां |
| १५२ | ६ | तेपां | तेषां |
| १५४ | ६ | सौम्या | सौम्याः |

| पृष्ठं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५४ | ७ | पापस्तत्र | पापास्तत्र |
| | १८ | मान्दिवादे | मान्दिवदे |
| १५६ | ४ | भास्करै: | भास्करे: |
| | ६ | सूर्य्यादयो | सूर्यादयो |
| १५९ | १८ | तरदष्टं | तरद्दृष्टं |
| १६३ | १३ | पपा | पापा |
| १६६ | ८ | कथं | कर्फ |
| १६७ | ११ | तद्रष्ट्रा | तद्द्रष्ट्रा |
| १६८ | २ | तद्रष्ट्रा | तद्द्रष्ट्रा |
| १७० | ६ | नाकन्द | नाक्रन्द |
| १७६ | २५ | द्वन्द्वा | द्वन्द्वः |
| १७८ | ५ | भावान्य | भावान्य |
| १७९ | २ | ग्रहण | ग्रहणं |
| | ६ | शेप्वेकों | शेप्वकों |
| | ७ | ज्ञावन्यासो | ज्ञविन्यासो |
| १८६ | १० | दैर्घ्येमपु | दैर्घ्यमपु |
| | ११ | रोगशनाय | रोगे शमनाय |
| १९० | १० | ख्यातो न्यूना | ख्यातोऽन्यूना |
| १९१ | ६ | चिन्त्य | चिन्त्यं |
| १९४ | १० | रिप्फाख्या'' | रिप्फाख्यम्'' |
| १९६ | २१ | विफला | विकला |
| १९७ | २८ | पर्यम ॥ | त्पर्यम् ॥ |
| १९९ | ५ | स्वोच्चाभीष्ट | स्वोच्चादीष्ट |
| | ९ | श्रयता बलो | श्रयतोऽबलो |
| २०१ | १० | संयुता | संयुताः |
| | २४ | भावातिव्यय | भावारिव्यय |
| २०२ | १७ | रजन | रञ्जन |
| | १८ | या फलं | यायात्फलं |
| २०४ | १५ | यानसुह | यातसुह |
| २२४ | २१ | त्यागुक्तत् । | त्यागुक्तम् |
| २२५ | ५ | करो शुभो | करोऽशुभो |
| | १४ | तेस्तैशे | तेस्तेशे |
| २२६ | १५ | भाया सवदा | भार्या सर्वदा |
| २२८ | ६ | सर्वगण: | सर्पगण: |
| | २३ | दिदमुक्तिः । | दियमुक्तिः ॥ |
| २३७ | ४ | स सुरगुरु | ससुरगुरु |
| २३८ | २२ | बाधाकार: । | बाधाकर: । |

